ताः । आ । चरन्ति । समना । पुरस्तात् । समानतः ।
समना । पप्रथानाः ।
ऋतस्य । देवीः । सदसः । वुधानाः । गवाम् । न । सर्गाः ।
उषसः । जरन्ते ॥ ८ ॥

ता इन्वेदेव समना समानीरमीतवर्णा उषसश्चरन्ति ।
गूहन्तीरभ्वमसितं रुशद्भिः शुक्रास्तनूभिः शुचयो रुचानाः
॥ ९ ॥

ताः । इत् । नु । एव । समना । समानीः । अमीतऽवर्णाः ।
उषसः । चरन्ति ।
गूहन्तीः । अभ्वम् । असितम् । रुशत्ऽभिः । शुक्राः ।
तनूभिः । शुचयः । रुचानाः ॥ ९ ॥

रयिं दिवो दुहितरो विभातीः प्रजावन्तं यच्छतास्मासु देवीः ।
स्योनादा वः प्रतिबुध्यमानाः सुवीर्यस्य पतयः स्याम ॥१०॥

रयिम् । दिवः । दुहितरः । विऽभातीः । प्रजाऽवन्तम् ।
यच्छत । अस्मासु । देवीः ।
स्योनात् । आ । वः । प्रतिऽबुध्यमानाः । सुऽवीर्यस्य ।
पतयः । स्याम ॥ १० ॥

तद्वो दिव इति व्युष्टायां जपेत् ॥

तद्वो दिवो दुहितरो विभातीरुप ब्रुव उषसो यज्ञकेतुः ।
वयं स्याम यशसो जनेषु तद् द्यौश्च धत्तां पृथिवी च
देवी ॥ ११ ॥

तत् । वः । दिवः । दुहितरः । विऽभातीः । उप । ब्रुवे ।
उषसः । यज्ञऽकेतुः ।
वयम् । स्याम । यशसः । जनेषु । तत् । द्यौः । च । धत्ताम् ।
पृथिवी । च । देवी ॥ ११ ॥

## १२

### म. ५. सू. ६२

ऋतेन ऋतमिति [पञ्चमेऽनुवाके] नवर्चं षष्ठं सूक्तमात्रेयस्य श्रुतविद आर्षं त्रैष्टुभं मैत्रावरुणम्। विनियोगो लैङ्गिकः॥

ऋतेन ऋतमपिहितं ध्रुवं वां सूर्यस्य यत्र विमुचन्त्यश्वान्।
दश शता सह तस्थुस्तदेकं देवानां श्रेष्ठं वपुषामपश्यम् ॥१॥

ऋतेन। ऋतम्। अपिऽहितम्। ध्रुवम्। वाम्। सूर्यस्य।
यत्र। विऽमुचन्ति। अश्वान्।
दश। शता। सह। तस्थुः। तत्। एकम्। देवानाम्।
श्रेष्ठम्। वपुषाम्। अपश्यम् ॥ १ ॥

तत्सु वां मित्रावरुणा महित्वमीर्मा तस्थुषीरहभिर्दुदुह्रे।
विश्वाः पिन्वथः स्वसरस्य धेना अनु वामेकः पविरा ववर्त
॥ २ ॥

तत् । सु । वाम् । मित्रावरुणा । महिऽत्वम् । ईर्मा ।
तस्थुषीः । अहऽभिः । दुदुह्रे ।
विश्वाः । पिन्वथः । स्वसरस्य । धेनाः । अनु । वाम् ।
एकः । पविः । आ । ववर्त ॥ २ ॥

अधारयतं पृथिवीमुत द्यां मित्रराजाना वरुणा महोभिः ।
वर्धयतमोषधीः पिन्वतं गा अव वृष्टिं सृजतं जीरदानू ॥ ३ ॥

अधारयतम् । पृथिवीम् । उत । द्याम् । मित्रऽराजाना ।
वरुणा । महःऽभिः ।
वर्धयतम् । ओषधीः । पिन्वतम् । गाः । अव । वृष्टिम् ।
सृजतम् । जीरदानू इति जीरऽदानू ॥ ३ ॥

आ वामश्वासः सुयुजो वहन्तु यतरश्मय उप यन्त्वर्वाक् ।
घृतस्य निर्णिगनु वर्तते वामुप सिन्धवः प्रदिवि क्षरन्ति ॥ ४ ॥

आ । वाम् । अश्वासः । सुऽयुजः । वहन्तु । यतऽरश्मयः ।
उप । यन्तु । अर्वाक् ।
घृतस्य । निःऽनिक् । अनु । वर्तते । वाम् । उप । सिन्धवः ।
प्रऽदिवि । क्षरन्ति ॥ ४ ॥

अनु श्रुताममतिं वर्धदुर्वी बर्हिरिव यजुषा रक्षमाणा ।
नमस्वन्ता धृतदक्षाधि गर्ते मित्रासाथे वरुणेळास्वन्तः ॥ ५ ॥

अनु । श्रुताम् । अमतिम् । वर्धत् । उर्वीम् । बर्हिःऽइव ।
यजुषा । रक्षमाणा ।
नमस्वन्ता । धृतऽदक्षा । अधि । गर्ते । मित्र । आसाथे इति ।
वरुण । इळासु । अन्तरिति ॥ ५ ॥

अक्रविहस्ता सुकृते परस्पा यं त्रासाथे वरुणेळास्वन्तः ।
राजाना क्षत्रमहृणीयमाना सहस्रस्थूणं बिभृथः सह द्वौ ॥६॥

अकविऽहस्ता । सुऽकृते । परऽपा । यम् । त्रासाथे इति ।
वरुणा । इळासु । अन्तरिति ।
राजाना । क्षत्रम् । अहृणीयमाना । सहस्रऽस्थूणम् । बिभृथः ।
सह । द्वौ ॥ ६ ॥

हिरण्यनिर्णिगयो अस्य स्थूणा वि भ्राजते
दिव्य१श्वाजनीव ।
भद्रे क्षेत्रे निमिता तिल्विले वा सनेम मध्वो अधिगर्त्यस्य ॥७॥

हिरण्यऽनिर्निक् । अयः । अस्य । स्थूणा । वि । भ्राजते ।
दिवि । अश्वाजनीऽइव ।
भद्रे । क्षेत्रे । निऽमिता । तिल्विले । वा । सनेम । मध्वः ।
अधिऽगर्त्यस्य ॥ ७ ॥

हिरण्यरूपमुषसो व्युष्टावयःस्थूणमुदिता सूर्यस्य ।
आ रोहथो वरुण मित्र गर्तमतश्चक्षाथे अदितिं दितिं च ॥८॥

हिरण्यऽरूपम् । उषसः । विऽउष्टौ । अयःऽस्थूणम् ।
उत्ऽइता । सूर्यस्य ।
आ । रोहथः । वरुण । मित्र । गर्तम् । अतः । चक्षाथे इति ।
अदितिम् । दितिम् । च ॥ ८ ॥

दाक्षायणयज्ञे यद् बंहिष्ठमिति नवमी द्वितीयस्याममावास्यायां मैत्रावरुणस्य हविषो याज्या। मैत्रावरुणे पशौ हविष एषैव याज्या॥

**यद् बंहिष्ठं नातिविधे सुदानू अच्छिद्रं शर्म भुवनस्य गोपा ।**
**तेन नो मित्रावरुणावविष्टं सिषासन्तो जिगीवांसः स्याम ॥९॥**

यत् । बंहिष्ठम् । न । अतिऽविधे । सुदानू इति सुऽदानू ।
अच्छिद्रम् । शर्म । भुवनस्य । गोपा ।
तेन । नः । मित्रावरुणौ । अविष्टम् । सिसासन्तः । जिगीवांसः ।
स्याम ॥ ९ ॥

---

# १३

## म. ५. सू. ८३

अच्छा वदेति दशर्चं [ षष्ठेऽनुवाके ] एकादशं सूक्तं भौमस्यात्रेरार्षम्। यत्पर्जन्येत्येषा नवम्यनुष्टुप्, वि वृक्षानित्याद्यास्तिस्रो जगत्यः, शिष्टाः षट् त्रिष्टुभः। पर्जन्यो देवता। अनेन सूक्तेन प्रत्यृचं वा दिश उपस्थेयाः॥

अच्छा वद तवसं गीर्भिराभिः स्तुहि पर्जन्यं नमसा विवास।
कनिक्रदद्वृषभो जीरदानू रेतो दधात्योषधीषु गर्भम् ॥ १ ॥

अच्छ। वद। तवसम्। गीःऽभिः। आभिः। स्तुहि। पर्जन्यम्।
नमसा। आ। विवास।
कनिक्रदत्। वृषभः। जीरऽदानुः। रेतः। दधाति।
ओषधीषु। गर्भम् ॥ १ ॥

वि वृक्षान् हन्त्युत हन्ति रक्षसो विश्वं बिभाय भुवनं
महावधात्।
उतानागा ईषते वृष्ण्यावतो यत्पर्जन्यः स्तनयन् हन्ति
दुष्कृतः ॥ २ ॥

वि । वृक्षान् । हन्ति । उत । हन्ति । रक्षसः । विश्वम् ।
विभाय । भुवनम् । महाऽवधात् ।
उत । अनागाः । ईषते । वृष्ण्यऽवत । यत् । पर्जन्यः ।
स्तनयन् । हन्ति । दुःऽकृतः ॥ २ ॥

रथीव कशयाश्वाँ अभिक्षिपन्नाविर्दूतान्कृणुते वर्ष्याँ३ अह ।
दूरात्सिंहस्य स्तनथा उदीरते यत्पर्जन्यः कृणुते वर्ष्यं१ नभः ॥ ३ ॥

रथीऽइव । कशया । अश्वान् । अभिऽक्षिपन् । आविः ।
दूतान् । कृणुते । वर्ष्यान् । अह ।
दूरात् । सिंहस्य । स्तनथाः । उत् । ईरते । यत् । पर्जन्यः ।
कृणुते । वर्ष्यम् । नभः ॥ ३ ॥

प्र वाता इति चतुर्थी पर्जन्यस्य चरोर्याज्या ॥

**प्र वाता वान्ति पतयन्ति विद्युत उदोषधीर्जिहते पिन्वते स्वः ।**
**इरा विश्वस्मै भुवनाय जायते यत्पर्जन्यः पृथिवीं रेतसावति ॥ ४ ॥**

प्र । वाताः । वान्ति । पतयन्ति । विऽद्युतः । उत् ।
ओषधीः । जिहते । पिन्वते । स्वरिति स्वः ।
इरा । विश्वस्मै । भुवनाय । जायते । यत् । पर्जन्यः ।
पृथिवीम् । रेतसा । अवति ॥ ४ ॥

**यस्य व्रते पृथिवी नन्नमीति यस्य व्रते शफवज्जर्भुरीति ।**
**यस्य व्रत ओषधीर्विश्वरूपाः स नः पर्जन्य महि शर्म यच्छ ॥ ५ ॥**

यस्य । व्रते । पृथिवी । नन्नमीति । यस्य । व्रते । शफऽवत् ।
जर्भुरीति ।
यस्य । व्रते । ओषधीः । विश्वऽरूपाः । सः । नः । पर्जन्य ।
महि । शर्म । यच्छ ॥ ५ ॥

दिवो नो वृष्टिं मरुतो ररीध्वं प्र पिन्वत वृष्णो अश्वस्य धाराः ।
अर्वाङेतेन स्तनयित्नुनेह्यपो निषिञ्चन्नसुरः पिता नः ॥ ६ ॥

दिवः । नः । वृष्टिम् । मरुतः । ररीध्वम् । प्र । पिन्वत ।
वृष्णः । अश्वस्य । धाराः ।
अर्वाङ् । एतेन । स्तनयित्नुना । आ । इहि । अपः ।
निऽसिञ्चन् । असुरः । पिता । नः ॥ ६ ॥

अभि क्रन्द स्तनय गर्भमा धा उदन्वता परि दीया रथेन ।
दृतिं सु कर्ष विषितं न्यञ्चं समा भवन्तूद्वतो निपादाः ॥ ७ ॥

अभि । क्रन्द । स्तनय । गर्भम् । आ । धाः । उदन्ऽवता ।
परि । दीय । रथेन ।
दृतिम् । सु । कर्ष । विऽसितम् । न्यञ्चम् । समाः ।
भवन्तु । उत्ऽवतः । निऽपादाः ॥ ७ ॥

महान्तंमु कोशमुदचा नि षिञ्च स्यन्दन्तां कुल्या विषिता:
पुरस्तात् ।
घृतेन द्यावापृथिवी व्युन्धि सुप्रपाणं भवत्वघ्न्याभ्य: ।। ८ ।।

महान्तम् । कोशम् । उत् । अच । नि । सिञ्च । स्यन्दन्ताम् ।
कुल्या: । विऽसिता: । पुरस्तात् ।
घृतेन । द्यावापृथिवी इति । वि । उन्धि । सुऽप्रपानम् ।
भवतु । अघ्न्याभ्य: ।। ८ ।।

यत्पर्जन्य कनिक्रदत्स्तनयन् हंसि दुष्कृत: ।
प्रतीदं विश्वं मोदते यत्किं च पृथिव्यामधि ।। ९ ।।

यत् । पर्जन्य । कनिक्रदत् । स्तनयन् । हंसि । दु:ऽकृत: ।
प्रति । इदम् । विश्वम् । मोदते । यत् । किम् । च ।
पृथिव्याम् । अधि ।। ९ ।।

अवर्षीर्वर्षमुदु षू गृभायाकर्धन्वान्यत्येतवा उ ।
अजीजन ओषधीर्भोजनाय कमुत प्रजाभ्योऽविदो मनीषाम्
॥ १० ॥

अवर्षीः । वर्षम् । उत् । ऊँ इति । सु । गृभाय । अकः ।
धन्वानि । अतिऽएतवै । ऊँ इति ।
अजीजनः । ओषधीः । भोजनाय । कम् । उत । प्रऽजाभ्यः ।
अविदः । मनीषाम् ॥ १० ॥

---

१४

म. ५. सू. ८४

बळित्थेति तृचात्मकं [षष्ठेऽनुवाके] द्वादशं सूक्तं भौमस्यात्रेरार्षं पृथिवीदेवताकमानुष्टुभम्। सूक्तविनियोगो लैङ्गिकः। आद्या देवाना हविष्षु पृथिव्या अनुवाक्या ॥

बळित्था पर्वतानां खिद्रं बिभर्षि पृथिवि ।
प्र या भूमिं प्रवत्वति मह्ना जिनोषि महिनि ॥ १ ॥

बट् । इत्था । पर्वतानाम् । खिद्रम् । बिभर्षि । पृथिवि ।
प्र । या । भूमिम् । प्रवत्वति । मह्ना । जिनोषि ।
महिनि ॥ १ ॥

स्तोमासस्त्वा विचारिणि प्रति ष्टोभन्त्यक्तुभिः ।
प्र या वाजं न हेषन्तं पेरुमस्यस्यर्जुनि ॥ २ ॥

स्तोमासः । त्वा । विऽचारिणि । प्रति । स्तोभन्ति ।
अक्तुऽभिः ।
प्र । या । वाजम् । न । हेषन्तम् । पेरुम् । अस्यसि ।
अर्जुनि ॥ २ ॥

देवाना हविःषु दृळ्हा चिदिति पृथिव्या याज्या । एषैव भूमिस्तोमे निष्केवल्ये सूक्तमुखीया ॥

दृळ्हा चिद्या वनस्पतीन्क्ष्मया दर्धर्ष्योजसा ।
यत्ते अभ्रस्य विद्युतो दिवो वर्षन्ति वृष्टयः ॥ ३ ॥

दृळ्हा । चित् । या । वनस्पतीन् । क्ष्मया । दर्धर्षि । ओजसा ।

यत् । ते । अभ्रस्य । विऽद्युतः । दिवः । वर्षन्ति । वृष्टयः ॥ ३ ॥

---

१५

म. ५. सू. ८५

प्र सम्राज इत्यष्टर्चं [षष्ठेऽनुवाके] त्रयोदशं सूक्तमात्रेयं त्रैष्टुभं वारुणम्। विनियोगो लैङ्गिकः॥

प्र सम्राजे बृहदर्चा गभीरं ब्रह्म प्रियं वरुणाय श्रुताय।

वि यो जघान शमितेव चर्मोपस्तिरे पृथिवीं सूर्याय॥ १॥

प्र । सम्ऽराजे । बृहत् । अर्च । गभीरम् । ब्रह्म । प्रियम् । वरुणाय । श्रुताय ।

वि । यः । जघान । शमिताऽइव । चर्म । उपऽस्तिरे । पृथिवीम् । सूर्याय ॥ १ ॥

वनेषु व्य१न्तरिक्षं ततान वाजमर्वत्सु पय उस्रियासु ।
हृत्सु क्रतुं वरुणो अप्स्व१ग्निं दिवि सूर्यमदधात्सोममद्रौ ॥ २ ॥

वनेषु । वि । अन्तरिक्षम् । ततान । वाजम् । अर्वत्ऽसु । पयः । उस्रियासु ।
हृत्ऽसु । क्रतुम् । वरुणः । अप्ऽसु । अग्निम् । दिवि । सूर्यम् । अदधात् । सोमम् । अद्रौ ॥ २ ॥

नीचीनबारं वरुणः कवन्धं प्र ससर्ज रोदसी अन्तरिक्षम् ।
तेन विश्वस्य भुवनस्य राजा यवं न वृष्टिर्व्युनत्ति भूम ॥ ३ ॥

नीचीनऽबारम् । वरुणः । कवन्धम् । प्र । ससर्ज । रोदसी इति । अन्तरिक्षम् ।
तेन । विश्वस्य । भुवनस्य । राजा । यवम् । न । वृष्टिः । वि । उनत्ति । भूम ॥ ३ ॥

उनत्ति भूमिं पृथिवीमुत द्यां यदा दुग्धं वरुणो वष्ट्यादित् ।
समभ्रेण वसत पर्वतासस्तविषीयन्तः श्रथयन्त वीराः ॥ ४॥

उनत्ति । भूमिम् । पृथिवीम् । उत । द्याम् । यदा ।
दुग्धम् । वरुणः । वष्टि । आत् । इत् ।
सम् । अभ्रेण । वसत । पर्वतासः । तविषीऽयन्तः ।
श्रथयन्त । वीराः ॥ ४ ॥

इमामू ष्वासुरस्य श्रुतस्य महीं मायां वरुणस्य प्र वोचम् ।
मानेनेव तस्थिवाँ अन्तरिक्षे वि यो ममे पृथिवीं सूर्येण
॥ ५ ॥

इमाम् । ऊँ इति । सु । आसुरस्य । श्रुतस्य । महीम् ।
मायाम् । वरुणस्य । प्र । वोचम् ।
मानेनऽइव । तस्थिऽवान् । अन्तरिक्षे । वि । यः । ममे ।
पृथिवीम् । सूर्येण ॥ ५ ॥

इमामू नु कवितमस्य मायां महीं देवस्य नकिरा दधर्ष ।
एकं यदुद्ना न पृणन्त्येनीरासिञ्चन्तीरवनयः समुद्रम्
॥ ६ ॥

इमाम् । ऊँ इति । नु । कविऽतमस्य । मायाम् । महीम् ।
देवस्य । नकिः । आ । दधर्ष ।
एकम् । यत् । उद्ना । न । पृणन्ति । एनीः ।
आऽसिञ्चन्तीः । अवनयः । समुद्रम् ॥ ६ ॥

अर्यम्यं वरुण मित्र्यं वा सखायं वा सदमिद् भ्रातरं वा ।
वेशं वा नित्यं वरुणारणं वा यत्सीमागश्चकृमा शिश्रथस्तत्
॥ ७ ॥

अर्यम्यम् । वरुण । मित्र्यम् । वा । सखायम् । वा ।
सदम् । इत् । भ्रातरम् । वा ।
वेशम् । वा । नित्यम् । वरुण । अरणम् । वा । यत् ।
सीम् । आगः । चकृम । शिश्रथः । तत् ॥ ७ ॥

कितवासो यद्रिरिपुर्न दीवि यद्वा घा सत्यमुत यन्न विद्म ।
सर्वा ता वि ष्य शिथिरेव देवाधा ते स्याम वरुण प्रियासः ॥ ८ ॥

कितवासः । यत् । रिरिपुः । न । दीवि । यत् । वा ।
घ । सत्यम् । उत । यत् । न । विद्म ।
सर्वा । ता । वि । स्य । शिथिराऽइव । देव । अध ।
ते । स्याम । वरुण । प्रियासः ॥ ८ ॥

---

## १६

### म. ६. सू. ५८

शुक्रं त इति चतुर्ऋचम् [ पञ्चमेऽनुवाके ] नवमं सूक्तं भरद्वाजस्यार्षं पौष्णम् । द्वितीया जगती शिष्टास्त्रिष्टुभ. । वैश्वदेवे पर्वणि पौष्णस्य हविष. शुक्र त इति याज्या । एकादशिनस्य पौष्णस्य पशोर्वपाया एषैव याज्या । प्रवर्ग्याभिष्टवऽप्येषा ॥

शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि ।
विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु ॥ १ ॥

शुक्रम् । ते । अन्यत् । यजतम् । ते । अन्यत् । विपुरूपे
इति विपुऽरूपे । अहनी इति । द्यौःऽइव । असि ।
विश्वाः । हि । मायाः । अवसि । स्वधाऽवः । भद्रा । ते ।
पूषन् । इह । रातिः । अस्तु ॥ १ ॥

अजाश्वः पशुपा वाजपस्त्यो धियंजिन्वो भुवने विश्वे अर्पितः ।
अष्ट्रां पूषा शिथिरामुद्वरीवृजत्संचक्षाणो भुवना देव ईयते
॥ २ ॥

अजऽअश्वः । पशुऽपाः । वाजऽपस्त्यः । धियम्ऽजिन्वः ।
भुवने । विश्वे । अर्पितः ।
अष्ट्राम् । पूषा । शिथिराम् । उत्ऽवरीवृजत् । सम्ऽचक्षाणः ।
भुवना । देवः । ईयते ॥ २ ॥

पौष्णस्य पशोर्वपापुरोडाशयोर्यास्ते पूषन्नित्यादिके द्वे ऋचौ अनुवाक्ये ॥

यास्ते पूषन्नावो अन्तः समुद्रे हिरण्ययीरन्तरिक्षे चरन्ति ।
ताभिर्यासि दूत्यां सूर्यस्य कामेन कृत श्रव इच्छमानः
॥ ३ ॥

याः । ते । पूषन् । नावः । अन्तरिति । समुद्रे । हिरण्ययीः ।
अन्तरिक्षे । चरन्ति ।
ताभिः । यासि । दूत्याम् । सूर्यस्य । कामेन । कृत ।
श्रवः । इच्छमानः ॥ ३ ॥

पूषा सुबन्धुर्दिव आ पृथिव्या इळस्पतिर्मघवा दस्मवर्चाः ।
यं देवासो अददुः सूर्यायै कामेन कृतं तवसं स्वञ्चम् ॥ ४ ॥

पूषा । सुऽबन्धुः । दिवः । आ । पृथिव्याः । इळः । पतिः ।
मघऽवा । दस्मऽवर्चाः ।
यम् । देवासः । अददुः । सूर्यायै । कामेन । कृतम् । तवसम् ।
सुऽअञ्चम् ॥ ४ ॥

## १७

### म. ७. सू. ८३

युवां नरेति दशर्चम् [पञ्चमेऽनुवाके] त्रयोदशं सूक्तं वसिष्ठस्यार्षं जागतमैन्द्रावरुणम्। आभिप्लविकेपूक्थ्येषु स्तोमवृद्धौ प्रशास्तुरिदं सूक्तमावापार्थम्॥

युवां नरा पश्यमानास आप्यं प्राचा गव्यन्तः पृथुपर्शवो ययुः।
दासा च वृत्रा हतमार्याणि च सुदासमिन्द्रावरुणावसावतम् ॥ १ ॥

युवाम्। नरा। पश्यमानासः। आप्यम्। प्राचा। गव्यन्तः। पृथुऽपर्शवः। ययुः।
दासा। च। वृत्रा। हतम्। आर्याणि। च। सुऽदासम्। इन्द्रावरुणा। अवसा। अवतम् ॥ १ ॥

यत्रा नरः समयन्ते कृतध्वजो यस्मिन्नाजा भवति किं चन प्रियम्।
यत्रा भयन्ते भुवना स्वर्दृशस्तत्रा न इन्द्रावरुणाधि वोचतम् ॥ २ ॥

यत्र । नरः । सम्ऽअयन्ते । कृतऽध्वजः । यस्मिन् । आजा ।
भवति । किम् । चन । प्रियम् ।
यत्र । भयन्ते । भुवना । स्वःऽदृशः । तत्र । नः ।
इन्द्रावरुणा । अधि । वोचतम् ॥ २ ॥

सं भूम्या अन्ता ध्वसिरा अदृक्षतेन्द्रावरुणा दिवि घोष आरुहत् ।
अस्थुर्जनानामुप मामरातयोऽर्वागवसा हवनश्रुता गतम् ॥ ३ ॥

सम् । भूम्याः । अन्ताः । ध्वसिराः । अदृक्षत ।
इन्द्रावरुणा । दिवि । घोषः । आ । अरुहत् ।
अस्थुः । जनानाम् । उप । माम् । अरातयः । अर्वाक् ।
अवसा । हवनऽश्रुता । आ । गतम् ॥ ३ ॥

इन्द्रावरुणा वधनाभिरप्रति भेदं वन्वन्ता प्र सुदासमावतम् ।
ब्रह्माण्येषां शृणुतं हवीमनि सत्या तृत्सूनामभवत्पुरोहितिः ॥ ४ ॥

इन्द्रावरुणा । वधनाभि: । अप्रति । भेदम् । वन्वन्ता ।
प्र । सुऽदासम् । आवतम् ।
ब्रह्माणि । एषाम् । शृणुतम् । हवीमनि । सत्या ।
तृत्सूनाम् । अभवत् । पुरःऽहिति : ।। ४ ।।

**इन्द्रावरुणावभ्या तपन्ति माघान्यर्यो वनुषामरातय: ।**
**युवं हि वस्व उभयस्य राजथोऽध स्मा नोऽवतं पार्ये दिवि**
**।। ५ ।।**

इन्द्रावरुणौ । अभि । आ । तपन्ति । मा । अघानि ।
अर्य: । वनुषाम् । अरातय: ।
युवम् । हि । वस्व: । उभयस्य । राजथ: । अध । स्म ।
न: । अवतम् । पार्ये । दिवि ।। ५ ।।

**युवां हवन्त उभयास आजिष्विन्द्रं च वस्वो वरुणं च सातये ।**
**यत्र राजभिर्दशभिर्निबाधितं प्र सुदासमावतं तृत्सुभि: सह**
**।। ६ ।।**

युवाम् । हवन्ते । उभयासः । आजिषु । इन्द्रम् । च ।
वस्वः । वरुणम् । च । सातये ।
यत्र । राजऽभिः । दशऽभिः । निऽबाधितम् । प्र । सुऽदासम् ।
आवतम् । तृत्सुऽभिः । सह ॥ ६ ॥

दश राजानः समिता अयज्यवः सुदासमिन्द्रावरुणा न युयुधुः ।
सत्या नृणामद्मसदामुपस्तुतिर्देवा एषामभवन्देवहूतिषु ॥ ७ ॥

दश । राजानः । सम्ऽइताः । अयज्यवः । सुऽदासम् ।
इन्द्रावरुणा । न । युयुधुः ।
सत्या । नृणाम् । अद्मऽसदाम् । उपऽस्तुतिः । देवाः ।
एषाम् । अभवन् । देवऽहूतिषु ॥ ७ ॥

दाशराज्ञे परियत्ताय विश्वतः सुदास इन्द्रावरुणावशिक्षतम् ।
श्वित्यञ्चो यत्र नमसा कपर्दिनो धिया धीवन्तो असपन्त
तृत्सवः ॥ ८ ॥

दाशऽराज्ञे । परिऽयत्ताय । विश्वतः । सुऽदासे । इन्द्रावरुणौ । अशिक्षतम् ।

श्वित्यञ्चः । यत्र । नमसा । कपर्दिनः । धिया । धीऽवन्तः । असपन्त । तृत्सवः ॥ ८ ॥

वृत्राण्यन्यः समिथेषु जिघ्नते व्रतान्यन्यो अभि रक्षते सदा ।
हवामहे वां वृषणा सुवृक्तिभिरस्मे इन्द्रावरुणा शर्म यच्छतम् ॥ ९ ॥

वृत्राणि । अन्यः । सम्ऽइथेषु । जिघ्नते । व्रतानि । अन्यः । अभि । रक्षते । सदा ।

हवामहे । वाम् । वृषणा । सुवृक्तिऽभिः । अस्मे इति । इन्द्रावरुणा । शर्म । यच्छतम् ॥ ९ ॥

अस्मे इन्द्रो वरुणो मित्रो अर्यमा द्युम्नं यच्छन्तु महि शर्म सप्रथः ।
अवध्रं ज्योतिरदितेर्ऋतावृधो देवस्य श्लोकं सवितुर्मनामहे ॥ १० ॥

अस्मे इति । इन्द्रः । वरुणः । मित्रः । अर्यमा । द्युम्नम् ।
यच्छन्तु । महि । शर्म । सऽप्रथः ।
अवध्रम् । ज्योतिः । अदितेः । ऋतऽवृधः । देवस्य ।
श्लोकम् । सवितुः । मनामहे ॥ १० ॥

---

## १८

### म. ७. सू. ८६

धीरा त्वस्येत्यष्टर्चम् [पञ्चमेऽनुवाके] षोडशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वरुणदेवत्यम्। गतो विनियोगः॥

धीरा त्वस्य महिना जनूंषि वि यस्तस्तम्भ रोदसी चिदुर्वी ।
प्र नाकमृष्वं नुनुदे बृहन्तं द्विता नक्षत्रं पप्रथच्च भूम ॥ १ ॥

धीरा । तु । अस्य । महिना । जनूंषि । वि । यः ।
तस्तम्भ । रोदसी इति । चित् । उर्वी इति ।
प्र । नाकम् । ऋष्वम् । नुनुदे । बृहन्तम् । द्विता । नक्षत्रम् ।
पप्रथत् । च । भूम ॥ १ ॥

उत स्वया तन्वा३ सं वदे तत्कदा न्व१न्तर्वरुणे भुवानि।
किं मे हव्यमहृणानो जुषेत कदा मृळीकं सुमना अभि ख्यम्
॥ २ ॥

उत । स्वया । तन्वा । सम् । वदे । तत् । कदा । नु ।
अन्तः । वरुणे । भुवानि ।
किम् । मे । हव्यम् । अहृणानः । जुषेत । कदा । मृळीकम् ।
सुऽमनाः । अभि । ख्यम् ॥ २ ॥

पृच्छे तदेनो वरुण दिदृक्षूपो एमि चिकितुषो विपृच्छम् ।
समानमिन्मे कवयश्चिदाहुरयं ह तुभ्यं वरुणो हृणीते ॥ ३ ॥

पृच्छे । तत् । एनः । वरुण । दिदृक्षु । उपो इति ।
एमि । चिकितुषः । विऽपृच्छम् ।
समानम् । इत् । मे । कवयः । चित् । आहुः । अयम् ।
ह । तुभ्यम् । वरुणः । हृणीते ॥ ३ ॥

किमाग आस वरुण ज्येष्ठं यत्स्तोतारं जिघांससि सखायम् ।
प्र तन्मे वोचो दूळभ स्वधावोऽव त्वानेना नमसा तुर इयाम् ॥ ४ ॥

किम् । आगः । आस । वरुण । ज्येष्ठम् । यत् । स्तोतारम् । जिघांससि । सखायम् ।
प्र । तत् । मे । वोचः । दुःऽदभ । स्वधाऽवः । अव । त्वा । अनेनाः । नमसा । तुरः । इयाम् ॥ ४ ॥

अव द्रुग्धानि पित्र्या सृजा नोऽव या वयं चकृमा तनूभिः ।
अव राजन्पशुतृपं न तायुं सृजा वत्सं न दाम्नो वसिष्ठम् ॥ ५ ॥

अव । द्रुग्धानि । पित्र्या । सृज । नः । अव । या । वयम् । चकृम । तनूभिः ।
अव । राजन् । पशुऽतृपम् । न । तायुम् । सृज । वत्सम् । न । दाम्नः । वसिष्ठम् ॥ ५ ॥

न स स्वो दक्षो वरुण ध्रुतिः सा सुरा मन्युर्विभीदको अचित्तिः ।
अस्ति ज्यायान्कनीयस उपारे स्वप्नश्चनेदनृतस्य प्रयोता ॥ ६ ॥

न । सः । स्वः । दक्षः । वरुण । ध्रुतिः । सा । सुरा । मन्युः । विऽभीदकः । अचित्तिः ।
अस्ति । ज्यायान् । कनीयसः । उपऽअरे । स्वप्नः । चन । इत् । अनृतस्य । प्रऽयोता ॥ ६ ॥

अरं दासो न मीळ्हुषे कराण्यहं देवाय भूर्णयेऽनागाः ।
अचेतयदचितो देवो अर्यो गृत्सं राये कवितरो जुनाति ॥ ७ ॥

अरम् । दासः । न । मीळ्हुषे । कराणि । अहम् । देवाय । भूर्णये । अनागाः ।
अचेतयत् । अचितः । देवः । अर्यः । गृत्सम् । राये । कविःऽतरः । जुनाति ॥ ७ ॥

एकादशिने वारुणे पशावयमिति पुरोडाशस्यानुवाक्या ॥

अयं सु तुभ्यं वरुण स्वधावो हृदि स्तोम उपश्रितश्चिदस्तु ।
शं नः क्षेमे शमु योगे नो अस्तु यूयं पात स्वस्तिभिः सदा
नः ॥ ८ ॥

अयम् । सु । तुभ्यम् । वरुण । स्वधाऽवः । हृदि । स्तोमः ।
उपऽश्रितः । चित् । अस्तु ।
शम् । नः । क्षेमे । शम् । ऊँ इति । योगे । नः । अस्तु ।
यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ८ ॥

---

## १९

### म. ७. सू. ८८

प्र शुन्ध्युवमिति सप्तर्चम् [ पञ्चमेऽनुवाके ] अष्टादशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वारुणम् । गतो विनियोगः ॥

प्र शुन्ध्युवं वरुणाय प्रेष्ठां मतिं वसिष्ठ मीळ्हुषे भरस्व ।
य ईमर्वाञ्चं करते यजत्रं सहस्रामघं वृषणं बृहन्तम्
॥ १ ॥

प्र । शुन्ध्युवम् । वरुणाय । प्रेष्ठाम् । मतिम् । वसिष्ठ ।
मीळ्हुषे । भरस्व ।
यः । ईम् । अर्वाञ्चम् । करते । यजत्रम् । सहस्रऽमघम् ।
वृषणम् । बृहन्तम् ॥ १ ॥

अधा न्वस्य संदृशं जगन्वानग्नेरनीकं वरुणस्य मंसि ।
स्व१र्यदश्मन्नधिपा उ अन्धोभि मा वपुर्दृशये निनीयात्
॥ २ ॥

अध । नु । अस्य । सम्ऽदृशम् । जगन्वान् । अग्नेः ।
अनीकम् । वरुणस्य । मंसि ।
स्वः । यत् । अश्मन् । अधिऽपाः । ऊँ इति । अन्धः ।
अभि । मा । वपुः । दृशये । निनीयात् ॥ २ ॥

आ यद्रुहाव वरुणश्च नावं प्र यत्समुद्रमीरयाव मध्यम् ।
अधि यदपां स्नुभिश्चराव प्र प्रेङ्ख ईङ्खयावहै शुभे कम्
॥ ३ ॥

आ । यत् । रुहाव । वरुणः । च । नावम् । प्र । यत् ।
समुद्रम् । ईरयाव । मध्यम् ।
अधि । यत् । अपाम् । स्नुऽभिः । चराव । प्र । प्रऽईङ्खे ।
ईङ्खयावहै । शुभे । कम् ॥ ३ ॥

वसिष्ठं ह वरुणो नाव्याधादृषिं चकार स्वपा महोभिः ।
स्तोतारं विप्रः सुदिनत्वे अह्नां यान्नु द्यावस्ततनन्यादुषासः
॥ ४ ॥

वसिष्ठम् । ह । वरुणः । नावि । आ । अधात् । ऋषिम् ।
चकार । सुऽअपाः । महःऽभिः ।
स्तोतारम् । विप्रः । सुदिनऽत्वे । अह्नाम् । यात् । नु ।
द्यावः । ततनन् । यात् । उषसः ॥ ४ ॥

क्व १ त्यानि नौ सख्या बभूवुः सचावहे यदवृकं पुरा
चित् ।
बृहन्तं मानं वरुण स्वधावः सहस्रद्वारं जगमा गृहं ते
॥ ५ ॥

क्व । त्यानि । नौ । सख्या । बभूवुः । सचावहे इति ।
यत् । अवृकम् । पुरा । चित् ।
बृहन्तम् । मानम् । वरुण । स्वधाऽवः । सहस्रऽद्वारम् ।
जगम । गृहम् । ते ॥ ५ ॥

य आपिर्नित्यो वरुण प्रियः सन्त्वामागांसि कृणवत्सखा ते ।
मा त एनस्वन्तो यक्षिन्भुजेम यन्धि ष्मा विप्रः स्तुवते
वरूथम् ॥ ६ ॥

यः । आपिः । नित्यः । वरुण । प्रियः । सन् । त्वाम् ।
आगांसि । कृणवत् । सखा । ते ।
मा । ते । एनस्वन्तः । यक्षिन् । भुजेम । यन्धि । स्म ।
विप्रः । स्तुवते । वरूथम् ॥ ६ ॥

अत्र ऋग्विधानम्। ध्रुवासु त्वासु क्षितिषु जपन् बन्धात् प्रमुच्यते।
तिष्ठन् रात्रौ जपेदेता पिशाचस्त न गच्छति॥

ध्रुवासु त्वासु क्षितिषु क्षियन्तो व्य१स्मत्पाशं वरुणो
मुमोचत् ।
अवो वन्वाना अदितेरुपस्थाद्यूयं पात स्वस्तिभिः सदा नः
॥ ७ ॥

ध्रुवासु । त्वा । आसु । क्षितिषु । क्षियन्तः । वि ।
अस्मत् । पाशम् । वरुणः । मुमोचत् ।
अवः । वन्वानाः । अदितेः । उपऽस्थात् । यूयम् । पात ।
स्वस्तिऽभिः । सदा । नः ॥ ७ ॥

---

## २०

### म. ८. सू. १०

यत्स्थ इति षड्चम् [द्वितीयेऽनुवाके] पञ्चमं सूक्तं कण्वपुत्रस्य प्रगाथस्यार्षमाश्विनम्। आद्या बृहती। द्वितीया मध्येज्योतिस्त्रिष्टुप्। तृतीयाऽनुष्टुप्। चतुर्थ्यास्तारपङ्क्तिः। पञ्चमी बृहती षष्ठी सतोबृहती। प्रातरनुवाकाश्विने क्रतौ बार्हते छन्दस्याश्विनशस्त्रे चेदं सूक्तम्॥

**यत्स्थो दीर्घप्रसद्मनि यद्वादो रोचने दिवः ।**
**यद्वा समुद्रे अध्याकृते गृहेत आ यातमश्विना ॥ १ ॥**

यत् । स्थः । दीर्घऽप्रसद्मनि । यत् । वा । अदः ।
रोचने । दिवः ।
यत् । वा । समुद्रे । अधि । आऽकृते । गृहे । अतः ।
आ । यातम् । अश्विना ॥ १ ॥

यद्वा यज्ञं मनवे संमिमिक्षथुरेवेत्काण्वस्य बोधतम् ।
बृहस्पतिं विश्वान्देवाँ अहं हुव इन्द्राविष्णू अश्विनावाशुहेषसा ॥ २ ॥

यत् । वा । यज्ञम् । मनवे । सम्ऽमिमिक्षथुः । एव । इत् । काण्वस्य ।
बोधतम् । बृहस्पतिम् । विश्वान् । देवान् । अहम् । हुवे । इन्द्राविष्णू इति । अश्विनौ । आशुऽहेषसा ॥ २ ॥

त्या न्व१श्विना हुवे सुदंससा गृभे कृता ।
ययोरस्ति प्र णः सख्यं देवेष्वध्याप्यम् ॥ ३ ॥

त्या । नु । अश्विना । हुवे । सुऽदंससा । गृभे । कृता । ययोः ।
अस्ति । प्र । नः । सख्यम् । देवेषु । अधि । आप्यम् ॥ ३ ॥

यद्योरधि प्र यज्ञा असूरे सन्ति सूरयः ।
ता यज्ञस्याध्वरस्य प्रचेतसा स्वधाभिर्या पिबतः सोम्यं मधु
॥ ४ ॥

ययोः । अधि । प्र । यज्ञाः । असूरे । सन्ति । सूरयः ।
ता । यज्ञस्य । अध्वरस्य । प्रऽचेतसा । स्वधाभिः । या ।
पिबतः । सोम्यम् । मधु ॥ ४ ॥

यदद्याश्विनावपाग्यत्प्राक्स्थो वाजिनीवसू ।
यद् द्रुह्यव्यनवि तुर्वशे यदौ हुवे वामथ मा गतम् ॥ ५ ॥

यत् । अद्य । अश्विनौ । अपाक् । यत् । प्राक् । स्थः ।
वाजिनीवसू इति वाजिनीऽवसू ।
यत् । द्रुह्यवि । अनवि । तुर्वशे । यदौ । हुवे । वाम् ।
अथ । मा । आ । गतम् ॥ ५ ॥

यदन्तरिक्षे पतथः पुरुभुजा यद्वेमे रोदसी अनु ।
यद्वा स्वधाभिरधितिष्ठथो रथमत आ यातमश्विना ॥ ६ ॥

यत् । अन्तरिक्षे । पतथ: । पुरुऽभुजा । यत् । वा ।
इमे इति । रोदसी इति । अनु ।
यत् । वा । स्वधाभि: । अधिऽतिष्ठथ: । रथम् । अत: ।
आ । यातम् । अश्विना ॥ ६ ॥

---

## २१

### म. ९. सू. ११

उपास्मा इति नवर्चम् [प्रथमेऽनुवाके] एकादशं सूक्तम्। असितो देवल ऋषिः। तौ च कश्यपगोत्रजौ। गायत्रं छन्दः। सोमः पवमानो देवता। ग्रावस्तोत्रेऽर्बुदसूक्तस्य प्रागुत्तमाया इदमादिकं सर्वं पावमानं विकल्पेनावपनीयम्। अभिष्टवे घर्मदुघावत्सेऽपनीयमाने नमसेदुपेत्येषा॥

उपास्मै गायता नर: पवमानायेन्दवे । अभि देवाँ इयक्षते
॥ १ ॥

उप । अस्मै । गायत । नर: । पवमानाय । इन्दवे ।
अभि । देवान् । इयक्षते ॥ १ ॥

अभि ते मधुना पयोऽथर्वाणो अशिश्रयु: । देवं देवाय देवयु
॥ २ ॥

अभि । ते । मधुना । पयः । अथर्वाणः । अशिश्रयुः ।

देवम् । देवाय । देवऽयु ॥ २ ॥

स नः पवस्व शं गवे शं जनाय शमर्वते । शं राजन्नोषधीभ्यः ॥ ३ ॥

सः । नः । पवस्व । शम् । गवे । शम् । जनाय ।

शम् । अर्वते । शम् । राजन् । ओषधीभ्यः ॥ ३ ॥

बभ्रवे नु स्वतवसेऽरुणाय दिविस्पृशे । सोमाय गाथमर्चत ॥ ४ ॥

बभ्रवे । नु । स्वऽतवसे । अरुणाय । दिविऽस्पृशे । सोमाय ।

गाथम् । अर्चत ॥ ४ ॥

हस्तच्युतेभिरद्रिभिः सुतं सोमं पुनीतन । मधावा धावता मधु ॥ ५ ॥

हस्तऽच्युतेभिः । अद्रिऽभिः । सुतम् । सोमम् । पुनीतन ।

मधौ । आ । धावत । मधु ॥ ५ ॥

नमसेदुप सीदत दध्नेदभि श्रीणीतन इन्दुमिन्द्रे दधातन ॥ ६ ॥

नमसा । इत् । उप । सीदत । दध्ना । इत् । अभि ।
श्रीणीतन । इन्दुम् । इन्द्रे । दधातन ॥ ६ ॥

अमित्रहा विचर्षणिः पवस्व सोम शं गवे । देवेभ्यो अनुकामकृत् ॥ ७ ॥

अमित्रऽहा । विऽचर्षणिः । पवस्व । सोम । शम् । गवे ।
देवेभ्यः । अनुकामऽकृत् ॥ ७ ॥

इन्द्राय सोम पातवे मदाय परि षिच्यसे । मनश्चिन्मनसस्पतिः ॥ ८ ॥

इन्द्राय । सोम । पातवे । मदाय । परि । सिच्यसे ।
मनःऽचित् । मनसः । पतिः ॥ ८ ॥

पवमान सुवीर्यं रयिं सोम रिरीहि नः । इन्दविन्द्रेण नो युजा ॥ ९ ॥

पवमान । सुऽवीर्यम् । रयिम् । सोम । रिरीहि । नः । इन्दो
इति । इन्द्रेण । नः । युजा ॥ ९ ॥

---

## २२

### म. १०. सू. १४

परेयिवांसमिति षोडशर्चं चतुर्दशं सूक्तं विवस्वतः पुत्रस्य यमस्यार्षम् । अङ्गिरसो नः पितरो नवग्वा इति षष्ठ्या अङ्गिरःपित्रथर्वभृगुलक्षणा लिङ्गोक्ता देवताः । प्रेहीत्याद्यास्तिस्रो लिङ्गोक्तदेवताकाः पितृदेवताका वा । अति द्रव सारमेयावित्यादिकस्तृचः सरमापुत्रौ यौ श्वानौ परलोकमार्गमभितः स्थितौ तद्देवताकः । शिष्टा यमदेवत्याः । यमाय सोममिति त्रयोदश्याद्या अनुष्टुभः । यमाय मधुमत्तममित्येषा बृहती । आदितो द्वादश त्रिष्टुभः । गतः सूक्तविनियोगः । महापितृयज्ञे यमयागस्या याज्या ॥

**परेयिवांसं प्रवतो महीरनु बहुभ्यः पन्थामनुपस्पशानम् ।**
**वैवस्वतं सङ्गमनं जनानां यमं राजानं हविषा दुवस्य ॥ १ ॥**

परेयिऽवांसम् । प्रऽवतः । महीः । अनु । बहुऽभ्यः । पन्थाम् ।
अनुऽपस्पशानम् ।

वैवस्वतम् । सम्ऽगमनम् । जनानाम् । यमम् । राजानम् ।
हविषा । दुवस्य ॥ १ ॥

यमो नो गातुं प्रथमो विवेद नैषा गव्यूतिरपभर्तवा उ ।
यत्रा नः पूर्वे पितरः परेयुरेना जज्ञानाः पथ्या ३ अनु स्वाः
॥ २ ॥
यमः । नः । गातुम् । प्रथमः । विवेद । न । एषा ।
गव्यूतिः । अपऽभर्तवै । ऊँ इति ।
यत्र । नः । पूर्वे । पितरः । पराऽईयुः । एना । जज्ञानाः ।
पथ्याः । अनु । स्वाः ॥ २ ॥

आग्निमारुते मातली कव्यैरित्येषा धाय्या ॥

मातली कव्यैर्यमो अङ्गिरोभिर्बृहस्पतिर्ऋक्वभिर्वावृधानः ।
यांश्च देवा वावृधुर्ये च देवान्त्स्वाहान्ये स्वधयान्ये मदन्ति
॥ ३ ॥
मातली । कव्यैः । यमः । अङ्गिरःऽभिः । बृहस्पतिः ।
ऋक्वऽभिः । ववृधानः ।
यान् । च । देवाः । ववृधुः । ये । च । देवान् । स्वाहा ।
अन्ये । स्वधया । अन्ये । मदन्ति ॥ ३ ॥

महापितृयज्ञे यमस्येमं यमेत्यादिके द्वे अनुवाक्ये। मैषाग्निनाग्नेऽपि धाय्या ॥

इमं यम प्रस्तरमा हि सीदाङ्गिरोभिः पितृभिः संविदानः।
आ त्वा मन्त्राः कविशस्ता वहन्त्वेना राजन् हविषा मादयस्व ॥ ४ ॥

इमम्। यम। प्रऽस्तरम्। आ। हि। सीद। अङ्गिरःऽभिः। पितृऽभिः। सम्ऽविदानः।
आ। त्वा। मन्त्राः। कविऽशस्ताः। वहन्तु। एना। राजन्। हविषा। मादयस्व ॥ ४ ॥

अङ्गिरोभिरा गहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व।
विवस्वन्तं हुवे यः पिता तेऽस्मिन्यज्ञे बर्हिष्या निषद्य ॥ ५ ॥

अङ्गिरःऽभिः। आ। गहि। यज्ञियेभिः। यम। वैरूपैः। इह। मादयस्व।
विवस्वन्तम्। हुवे। यः। पिता। ते। अस्मिन्। यज्ञे। बर्हिषि। आ। निऽसद्य ॥ ५ ॥

अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः ।
तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥ ६ ॥

अङ्गिरसः । नः । पितरः । नवऽग्वाः । अथर्वाणः । भृगवः ।
सोम्यासः ।
तेषाम् । वयम् । सुऽमतौ । यज्ञियानाम् । अपि । भद्रे ।
सौमनसे । स्याम ॥ ६ ॥

मन्त्रमध्ये दीक्षितस्य मरणे प्रेहीत्याद्याः पञ्चर्चस्तृतीयावर्जिता होत्रा शमनीया ॥

प्रेहि प्रेहि पथिभिः पूर्व्येभिर्यत्रा नः पूर्वे पितरः परेयुः ।
उभा राजाना स्वधया मदन्ता यमं पश्यासि वरुणं च
देवम् ॥ ७ ॥

प्र । इहि । प्र । इहि । पथिऽभिः । पूर्व्येभिः । यत्र । नः ।
पूर्वे । पितरः । पराऽईयुः ।
उभा । राजाना । स्वधया । मदन्ता । यमम् । पश्यासि ।
वरुणम् । च । देवम् ॥ ७ ॥

सं गच्छस्व पितृभिः सं यमेनेष्टापूर्तेन परमे व्योमन् ।

हित्वायावद्यं पुनरस्तमेहि सं गच्छस्व तन्वा सुवर्चाः ॥ ८ ॥

सम् । गच्छस्व । पितृऽभिः । सम् । यमेन । इष्टाऽपूर्तेन ।

परमे । विऽओमन् ।

हित्वाय । अवद्यम् । पुनः । अस्तम् । आ । इहि । सम् ।

गच्छस्व । तन्वा । सुऽवर्चाः ॥ ८ ॥

पैतृमेधिके कर्मणि श्मशानायतनं प्रोक्षत्यपेत वीतेति ॥

अपेत वीत वि च सर्पतातोऽस्मा एतं पितरो लोकमक्रन् ।

अहोभिरद्भिरक्तुभिर्व्यक्तं यमो ददात्यवसानमस्मै ॥ ९ ॥

अप । इत । वि । इत । वि । च । सर्पत । अतः ।

अस्मै । एतम् । पितरः । लोकम् । अक्रन् ।

अहःऽभिः । अत्ऽभिः । अक्तुऽभिः । विऽअक्तम् । यमः ।

ददाति । अवऽसानम् । अस्मै ॥ ९ ॥

अनुस्तरण्या वृक्कौ पार्श्वयोराम्रफलाकृती। तावुद्धृत्य प्रेतस्य हस्तयोर्निदधात्यति द्रव सारमेयाविति द्वाभ्याम् ॥

अति द्रव सारमेयौ श्वानौ चतुरक्षौ शबलौ साधुना पथा ।
अथा पितॄन्त्सुविदत्रौं उपेहि यमेन ये सधमादं मदन्ति ॥ १० ॥

अति । द्रव । सारमेयौ । श्वानौ । चतुःऽअक्षौ । शबलौ । साधुना । पथा ।
अथ । पितॄन् । । सुऽविदत्रान् । उप । इहि । यमेन । ये । सधऽमादम् । मदन्ति ॥ १० ॥

यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसौ ।
ताभ्यामेनं परि देहि राजन्त्स्वस्ति चास्मा अनमीवं च धेहि ॥ ११ ॥

यौ । ते । श्वानौ । यम । रक्षितारौ । चतुःऽअक्षौ । पथिरक्षी इति पथिऽरक्षी । नृऽचक्षसौ ।
ताभ्याम् । एनम् । परि । देहि । राजन् । स्वस्ति । च । अस्मै । अनमीवम् । च । धेहि ॥ ११ ॥

उरूणसावसुतृपा उदुम्बलौ यमस्य दूतौ चरतो जनाँ अनु ।
तावस्मभ्यं दृशये सूर्याय पुनर्दातामसुमद्येह भद्रम् ॥ १२ ॥

उरुऽनसौ । असुऽतृपौ । उदुम्बलौ । यमस्य । दूतौ ।
चरतः । जनान् । अनु ।
तौ । अस्मभ्यम् । दृशये । सूर्याय । पुनः । दाताम् ।
असुम् । अद्य । इह । भद्रम् ॥ १२ ॥

यमाय सोमं सुनुत यमाय जुहुता हविः ।
यमं ह यज्ञो गच्छत्यग्निदूतो अरंकृतः ॥ १३ ॥

यमाय । सोमम् । सुनुत । यमाय । जुहुत । हविः ।
यमम् । ह । यज्ञः । गच्छति । अग्निऽदूतः । अरम्ऽकृतः
॥ १३ ॥

यमाय घृतवद्धविर्जुहोत प्र च तिष्ठत ।
स नो देवेष्वा यमद्दीर्घमायुः प्र जीवसे ॥ १४ ॥

यमाय । घृतऽवत् । हविः । जुहोत । प्र । च । तिष्ठत ।
सः । नः । देवेषु । आ । यमत् । दीर्घम् । आयुः ।
प्र । जीवसे ॥ १४ ॥

यमाय मधुमत्तमं राज्ञे हव्यं जुहोतन ।
इदं नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः ॥ १५ ॥

यमाय । मधुमत्ऽतमम् । राज्ञे । हव्यम् । जुहोतन । इदम् ।
नमः ।
ऋषिऽभ्यः । पूर्वऽजेभ्यः । पूर्वेभ्यः । पथिकृत्ऽभ्यः ॥ १५ ॥

त्रिकद्रुकेभिः पतति षळुर्वीरेकमिद् बृहत् ।
त्रिष्टुब्गायत्री छन्दांसि सर्वा ता यम आहिता ॥ १६ ॥

त्रिऽकद्रुकेभिः । पतति । षट् । उर्वीः । एकम् । इत् ।
बृहत् ।
त्रिऽस्तुप् । गायत्री । छन्दांसि । सर्वा । ता । यमे ।
आऽहिता ॥ १६ ॥

## २३

### म. १०. सू. ३४

प्रावेपा इति चतुर्दशर्चं [तृतीयेऽनुवाके] पञ्चमं सूक्तमैलूषस्य कवषस्यार्षं मुजवतः पुत्रस्याक्षाख्यस्य वा। सप्तमी जगती शिष्टास्त्रयोदश त्रिष्टुभ.। अत्र द्वादश्यक्षान् स्तौति नवम्याद्या च सप्तमी [च]। अतस्ता-स्तद्देवत्याः। त्रयोदशी कृषिं स्तौति। अतस्तस्याः सा देवता। एवं पञ्च गताः। शिष्टाभिर्नवभिः कितवोऽक्षाश्च निन्द्यन्ते अतस्ता अपि तद्देवत्या.। गतो विनियोगः ॥

प्रावेपा मा बृहतो मादयन्ति प्रवातेजा इरिणे वर्वृताना: ।
सोमस्येव मौजवतस्य भक्षो विभीदको जागृविर्मह्यमच्छान्
॥ १ ॥.

प्रावेपाः । मा । बृहतः । मादयन्ति । प्रवातेऽजाः ।
इरिणे । वर्वृताना: ।
सोमस्यऽइव । मौजऽवतस्य । भक्षः । विऽभीदकः ।
जागृविः । मह्यम् । अच्छान् ॥ १ ॥

न मा मिमेथ न जिहीळ एषा शिवा सखिभ्य उत
मह्यमासीत् ।
अक्षस्याहमेकपरस्य हेतोरनुव्रतामप जायामरोधम् ॥ २ ॥

न । मा । मिमेथ । न । जिहीळे । एषा । शिवा ।
सखिऽभ्यः । उत । मह्यम् । आसीत् ।
अक्षस्य । अहम् । एकऽपरस्य । हेतोः । अनुऽव्रताम् ।
अप । जायाम् । अरोधम् ॥ २ ॥

द्वेष्टि श्वश्रूरप जाया रुणद्धि न नाथितो विन्दते मर्डितारम् ।
अश्वस्येव जरतो वस्न्यस्य नाहं विन्दामि कितवस्य भोगम्
॥ ३ ॥

द्वेष्टि । श्वश्रूः । अप । जाया । रुणद्धि । न । नाथितः ।
विन्दते । मर्डितारम् ।
अश्वस्यऽइव । जरतः । वस्न्यस्य । न । अहम् । विन्दामि ।
कितवस्य । भोगम् ॥ ३ ॥

अन्ये जायां परि मृशन्त्यस्य यस्यागृधद्वेदने वाज्य१क्षः ।
पिता माता भ्रातर एनमाहुर्न जानीमो नयता बद्धमेतम्
॥ ४ ॥

अन्ये । जायाम् । परि । मृशन्ति । अस्य । यस्य ।
अगृधत् । वेदने । वाजी । अक्षः ।
पिता । माता । भ्रातरः । एनम् । आहुः । न ।
जानीमः । नयत । बद्धम् । एतम् ॥ ४ ॥

यदादीध्ये न दविषाण्येभिः परायद्भ्योऽव हीये सखिभ्यः ।
न्युप्ताश्च बभ्रवो वाचमक्रतँ एमीदेषां निष्कृतं जारिणीव
॥ ५ ॥

यत् । आऽदीध्ये । न । दविषाणि । एभिः । परायत्ऽभ्यः ।
अव । हीये । सखिऽभ्यः ।
निऽउप्ताः । च । बभ्रवः । वाचम् । अक्रत । एमि । इत् ।
एषाम् । निःऽकृतम् । जारिणीऽइव ॥ ५ ॥

सभामेति कितवः पृच्छमानो जेष्यामीति तन्वा३ शूशुजानः ।
अक्षासो अस्य वि तिरन्ति कामं प्रतिदीव्ने दधत आ कृतानि
॥ ६ ॥

सभाम् । एति । कितवः । पृच्छमानः । जेष्यामि । इति ।
तन्वा । शूशुजानः ।
अक्षासः । अस्य । वि । तिरन्ति । कामम् । प्रतिऽदीव्ने ।
दधतः । आ । कृतानि ॥ ६ ॥

अक्षास इदङ्कुशिनो नितोदिनो निकृत्वानस्तपनास्तापयिष्णवः ।
कुमारदेष्णा जयतः पुनर्हणो मध्वा संपृक्ताः कितवस्य
बर्हणा ॥ ७ ॥

अक्षासः । इत् । अङ्कुशिनः । निऽतोदिनः । निऽकृत्वानः ।
तपनाः । तापयिष्णवः ।
कुमारऽदेष्णाः । जयतः । पुनःऽहनः । मध्वा । सम्ऽपृक्ताः ।
कितवस्य । बर्हणा ॥ ७ ॥

त्रिपञ्चाशः क्रीळति व्रात एषां देवइव सविता सत्यधर्मा ।
उग्रस्य चिन्मन्यवे ना नमन्ते राजा चिदेभ्यो नम इत्कृणोति
॥ ८ ॥

त्रिऽपञ्चाशः । क्रीळति । व्रातः । एषाम् । देवःऽइव । सविता । सत्यऽधर्मा ।

उग्रस्य । चित् । मन्यवे । न । नमन्ते । राजा । चित् । एभ्यः । नमः । इत् । कृणोति ॥ ८ ॥

नीचा वर्तन्त उपरि स्फुरन्त्यहस्तासो हस्तवन्तं सहन्ते ।

दिव्या अङ्गारा इरिणे न्युप्ताः शीताः सन्तो हृदयं निर्दहन्ति ॥ ९ ॥

नीचा । वर्तन्ते । उपरि । स्फुरन्ति । अहस्तासः । हस्तऽवन्तम् । सहन्ते ।

दिव्याः । अङ्गाराः । इरिणे । निऽउप्ताः । शीताः । सन्तः । हृदयम् । निः । दहन्ति ॥ ९ ॥

जाया तप्यते कितवस्य हीना माता पुत्रस्य चरतः क्व स्वित् ।

ऋणावा बिभ्यद्धनमिच्छमानोऽन्येषामस्तमुप नक्तमेति ॥ १० ॥

जाया । तप्यते । कितवस्य । हीना । माता । पुत्रस्य ।
चरतः । क्व । स्वित् ।
ऋणऽवा । बिभ्यत् । धनम् । इच्छमानः । अन्येषाम् ।
अस्तम् । उप । नक्तम् । एति ॥ १० ॥

स्त्रियं दृष्ट्वाय कितवं ततापान्येषां जायां सुकृतं च योनिम् ।
पूर्वाह्णे अश्वान्युयुजे हि बभ्रून्त्सो अग्नेरन्ते वृषलः पपाद
॥ ११ ॥

स्त्रियम् । दृष्ट्वाय । कितवम् । ताप । अन्येषाम् । जायाम् ।
सुऽकृतम् । च । योनिम् ।
पूर्वाह्णे । अश्वान् । युयुजे । हि । बभ्रून् । सः । अग्नेः ।
अन्ते । वृषलः । पपाद ॥ ११ ॥

यो वः सेनानीर्महतो गणस्य राजा व्रातस्य प्रथमो बभूव ।
तस्मै कृणोमि न धना रुणध्मि दशाहं प्राचीस्तदृतं वदामि
॥ १२ ॥

यः । वः । सेनाऽनीः । महतः । गणस्य । राजा । व्रातस्य । प्रथमः । बभूव ।
तस्मै । कृणोमि । न । धना । रुणध्मि । दश । अहम् । प्राचीः । तत् । ऋतम् । वदामि ॥ १२ ॥

अक्षैर्मा दीव्यः कृषिमित्कृषस्व वित्ते रमस्व बहु मन्यमानः ।
तत्र गावः कितव तत्र जाया तन्मे वि चष्टे सवितायमर्यः ॥ १३ ॥

अक्षैः । मा । दीव्यः । कृषिम् । इत् । कृषस्व । वित्ते । रमस्व । बहु । मन्यमानः ।
तत्र । गावः । कितव । तत्र । जाया । तत् । मे । वि । चष्टे । सविता । अयम् । अर्यः ॥ १३ ॥

मित्रं कृणुध्वं खलु मृळता नो मा नो घोरेण चरताभि धृष्णु ।
नि वो नु मन्युर्विशतामरातिरन्यो बभ्रूणां प्रसितौ न्वस्तु ॥ १४ ॥

मित्रम् । कृणुध्वम् । खलु । मृळत । नः । मा । नः ।
घोरेण । चरत । अभि । धृष्णु ।
नि । वः । नु । मन्युः । विशताम् । अरातिः । अन्यः ।
बभ्रूणाम् । प्रऽसितौ । नु । अस्तु ॥ १४ ॥

---

## २४

### म. १०. सू. ७५

प्र सु व इति नवर्चं [षष्ठेऽनुवाके] सप्तमं सूक्तम्। प्रियमेधपुत्रस्य सिन्धुक्षित आर्षं जागतं नदीदेवताकम्। गतो विनियोगः॥

**प्र सु व आपो महिमानमुत्तमं कारुर्वोचाति सदने विवस्वतः।**
**प्र सप्तसप्त त्रेधा हि चक्रमुः प्र सृत्वरीणामति सिन्धुरोजसा**
**॥ १ ॥**

प्र । सु । वः । आपः । महिमानम् । उत्ऽतमम् । कारुः ।
वोचाति । सदने । विवस्वतः ।
प्र । सप्तऽसप्त । त्रेधा । हि । चक्रमुः । प्र । सृत्वरीणाम् ।
अति । सिन्धुः । ओजसा ॥ १ ॥

प्र तेऽरदद्वरुणो यातवे पथः सिन्धो यद्वाजाँ अभ्यद्रवस्त्वम् ।
भूम्या अधि प्रवता यासि सानुना यदेषामग्रं जगतामिरज्यसि ॥ २ ॥

प्र । ते । अरदत् । वरुणः । यातवे । पथः । सिन्धो इति । यत् । वाजान् । अभि । अद्रवः । त्वम् ।
भूम्याः । अधि । प्रऽवता । यासि । सानुना । यत् । एषाम् । अग्रम् । जगताम् । इरज्यसि ॥ २ ॥

दिवि स्वनो यतते भूम्योपर्यनन्तं शुष्ममुदियर्ति भानुना ।
अभ्रादिव प्र स्तनयन्ति वृष्टयः सिन्धुर्यदेति वृषभो न रोरुवत् ॥ ३ ॥

दिवि । स्वनः । यतते । भूम्याः । उपरि । अनन्तम् । शुष्मम् । उत् । इयर्ति । भानुना ।
अभ्रात्ऽइव । प्र । स्तनयन्ति । वृष्टयः । सिन्धुः । यत् । एति । वृषभः । न । रोरुवत् ॥ ३ ॥

अभि त्वा सिन्धो शिशुमिन्न मातरो वाश्रा अर्षन्ति पयसेव धेनवः ।
राजेव युध्वा नयसि त्वमित्सिचौ यदासामग्रं प्रवतामिनक्षसि ॥ ४ ॥

अभि । त्वा । सिन्धो इति । शिशुम् । इत् । न । मातरः ।
वाश्राः । अर्षन्ति । पयसाऽइव । धेनवः ।
राजाऽइव । युध्वा । नयसि । त्वम् । इत् । सिचौ । यत् ।
आसाम् । अग्रम् । प्रऽवताम् । इनक्षसि ॥ ४ ॥

इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या ।
असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया ॥ ५ ॥

इमम् । मे । गङ्गे । यमुने । सरस्वति । शुतुद्रि । स्तोमम् ।
सचत । परुष्णि । आ ।
असिक्न्या । मरुत्ऽवृधे । वितस्तया । आर्जीकीये । शृणुहि ।
आ । सुऽसोमया ॥ ५ ॥

तृष्टामया प्रथमं यातवे सजूः सुसर्त्वा रसया श्वेत्या त्या ।
त्वं सिन्धो कुभया गोमतीं क्रुमुं मेहत्न्वा सरथं याभिरीयसे
॥ ६ ॥

तृष्टऽअमया । प्रथमम् । यातवे । सऽजूः । सुऽसर्त्वा ।
रसया । श्वेत्या । त्या ।
त्वम् । सिन्धो इति । कुभया । गोऽमतीम् । क्रुमुम् ।
मेहत्न्वा । सऽरथम् । याभिः । ईयसे ॥ ६ ॥

ऋजीत्येनी रुशती महित्वा परि ज्रयांसि भरते रजांसि ।
अदब्धा सिन्धुरपसामपस्तमाश्वा न चित्रा वपुषीव दर्शता
॥ ७ ॥

ऋजीती । एनी । रुशती । महिऽत्वा । परि । ज्रयांसि ।
भरते । रजांसि ।
अदब्धा । सिन्धुः । अपसाम् । अपःऽतमा । अश्वा । न ।
चित्रा । वपुषीऽइव । दर्शता ॥ ७ ॥

स्वश्वा सिन्धुः सुरथा सुवासा हिरण्ययी सुकृता वाजिनीवती ।
ऊर्णावती युवतिः सीलमावत्युताधि वस्ते सुभगा मधुवृधम्
॥ ८ ॥

सुऽअश्वा । सिन्धुः । सुऽरथा । सुऽवासाः । हिरण्ययी ।
सुऽकृता । वाजिनीऽवती ।
ऊर्णाऽवती । युवतिः । सीलमाऽवती । उत । अधि ।
वस्ते । सुऽभगा । मधुऽवृधम् ॥ ८ ॥

सुखं रथं युयुजे सिन्धुरश्विनं तेन वाजं सनिषदस्मिन्नाजौ ।
महान्ह्यस्य महिमा पनस्यतेऽदब्धस्य स्वयशसो विरप्शिनः
॥ ९ ॥

सुऽखम् । रथम् । युयुजे । सिन्धुः । अश्विनम् । तेन ।
वाजम् । सनिषत् । अस्मिन् । आजौ ।
महान् । हि । अस्य । महिमा । पनस्यते । अदब्धस्य ।
स्वऽयशसः । विऽरप्शिनः ॥ ९ ॥

२५

म. १०. सू. ८२

चक्षुष इति सप्तर्चम् [षष्ठेऽनुवाके] चतुर्दशं सूक्तं भुवनपुत्रस्य विश्वकर्मण आर्षं त्रैष्टुभं विश्वकर्मदेवत्यम्। गतः सूक्तविनियोगः॥

चक्षुषः पिता मनसा हि धीरो घृतमेने अजनन्नम्नमाने।
यदेदन्ता अददृहन्त पूर्व आदिद् द्यावापृथिवी अप्रथेताम्॥ १॥

चक्षुषः। पिता। मनसा। हि। धीरः। घृतम्। एने इति।
अजनत्। नम्नमाने इति।
यदा। इत्। अन्ताः। अददृहन्त। पूर्वे। आत्। इत्।
द्यावापृथिवी इति। अप्रथेताम्॥ १॥

वैश्वकर्मणस्य पशोर्हविष एषानुवाक्या॥

विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत संदृक्।
तेषामिष्टानि समिषा मदन्ति यत्रा सप्तऋषीन् पर एकमाहुः॥ २॥

विश्वऽकर्मा । विऽमनाः । आत् । विऽहायाः । धाता ।
विऽधाता । परमा । उत । सम्ऽदृक् ।
तेषाम् । इष्टानि । सम् । इषा । मदन्ति । यत्र ।
सप्तऽऋषीन् । परः । एकम् । आहुः ॥ २ ॥

पूर्वोक्त एव पशौ पुरोडाशस्य यो नः पितेत्येषा याज्या ॥

यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा ।
यो देवानां नामधा एक एव तं संप्रश्नं भुवना यन्त्यन्या ॥ ३ ॥

यः । नः । पिता । जनिता । यः । विऽधाता । धामानि ।
वेद । भुवनानि । विश्वा ।
यः । देवानाम् । नामऽधाः । एकः । एव । तम् ।
सम्ऽप्रश्नम् । भुवना । यन्ति । अन्या ॥ ३ ॥

त आयजन्त द्रविणं समस्मा ऋषयः पूर्वे जरितारो न भूना ।
असूर्ते सूर्ते रजसि निषत्ते ये भूतानि समकृण्वन्निमानि ॥ ४ ॥

ते । आ । अयजन्त । द्रविणम् । सम् । अस्मै । ऋषयः ।
पूर्वे । जरितारः । न । भूना ।
असूर्ते । सूर्ते । रजसि । निऽसत्ते । ये । भूतानि ।
सम्ऽअकृण्वन् । इमानि ॥ ४ ॥

परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्यदस्ति ।
कं स्विद् गर्भं प्रथमं दध्र आपो यत्र देवाः समपश्यन्त विश्वे
॥ ५ ॥

परः । दिवा । परः । एना । पृथिव्या । परः । देवेभिः ।
असुरैः । यत् । अस्ति ।
कम् । स्वित् । गर्भम् । प्रथमम् । दध्रे । आपः । यत्र ।
देवाः । सम्ऽअपश्यन्त । विश्वे ॥ ५ ॥

तमिद् गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे ।
अजस्य नाभावध्येकमर्पितं यस्मिन्विश्वानि भुवनानि तस्थुः ॥ ६ ॥

तम् । इत् । गर्भम् । प्रथमम् । दध्रे । आपः । यत्र ।
देवाः । सम्ऽअगच्छन्त । विश्वे ।
अजस्य । नाभौ । अधि । एकम् । अर्पितम् । यस्मिन् ।
विश्वानि । भुवनानि । तस्थुः ॥ ६ ॥

न तं विदाथ [redacted] इमा जजानान्यद्युष्माकमन्तरं बभूव ।
नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति ॥ ७ ॥

न । तम् । विदाथ । यः । इमा । जजान । अन्यत् ।
युष्माकम् । अन्तरम् । बभूव ।
नीहारेण । प्रावृताः । जल्प्या । च । असुऽतृपः । उक्थऽशासः ।
चरन्ति ॥ ७ ॥

# २६

## म. १०. सू. ९५

हये जाय इत्यष्टादशर्चम् [अष्टमेऽनुवाके] पञ्चमं सूक्तं त्रैष्टुभम्। हये जाये, इषुर्न श्रिये, या सुजूर्णि॰, कदा सूनु॰, सुदेवो अद्य, अन्तरिक्षप्रां, सचा यदासु जहतीष्वित्याद्यास्तिस्रश्चेति नवर्चः (१, ३, ६, १२, १४, १७, ८–१०) ऐळस्य पुरूरवसो वाक्यानि। अतस्तासां स ऋषिः। शिष्टा नवोर्वश्या वाक्यानि। अतस्तासु सर्षिका। उभयोर्वाक्येषु योऽर्थः प्रतिपाद्यते सा देवता। गतो विनियोगः॥

[पुरूरवाः —]

हये जाये मनसा तिष्ठ घोरे वचांसि मिश्रा कृणवावहै नु।
न नौ मन्त्रा अनुदितास एते मयस्करन् परतरे चनाहन्
॥ १ ॥

हये। जाये। मनसा। तिष्ठ। घोरे। वचांसि। मिश्रा।
कृणवावहै। नु।
न। नौ। मन्त्राः। अनुदितासः। एते। मयः। करन्।
परऽतरे। चन। अहन्॥ १॥

[उर्वशी--]

किमेता वाचा कृणवा तवाहं प्राक्रमिषमुषसामग्रियेव ।

पुरूरवः पुनरस्तं परेहि दुरापना वातइवाहमस्मि ॥ २ ॥

किम् । एता । वाचा । कृणव । तव । अहम् । प्र ।

अक्रमिषम् । उषसाम् । अग्रियाऽइव ।

पुरूरवः । पुनः । अस्तम् । परा । इहि । दुःऽआपना ।

वातःऽइव । अहम् । अस्मि ॥ २ ॥

[पुरूरवाः—]

इषुर्न श्रिय इषुधेरसना गोषाः शतसा न रंहिः ।

अवीरे क्रतौ वि दविद्युतन्नोरा न मायुं चितयन्त धुनयः ॥ ३ ॥

इषुः । न । श्रिये । इषुऽधेः । असना । गोऽसाः ।

शतऽसाः । न । रंहिः ।

अवीरे । क्रतौ । वि । दविद्युतत् । न । उरा । न ।

मायुम् । चितयन्त । धुनयः ॥ ३ ॥

[उर्वशी—]

सा वसु दधती श्वशुराय वय उषो यदि वष्ट्यन्तिगृहात् ।

अस्तं ननक्षे यस्मिञ्चाकन् . . . . . . ॥ ४ ॥

सा । वसु । दधती । श्वशुराय । वयः । उषः । यदि ।
वष्टि । अन्तिऽगृहात् ।

अस्तम् । ननक्षे । यस्मिन् । चाकन् । . . . . . ॥ ४ ॥

. . . . . . . . . . .

पुरूरवोऽनु ते केतमायं राजा मे वीर तन्व१स्तदासीः ॥ ५ ॥

. . . . . . . . . . .

पुरूरवः । अनु । ते । केतम् । आयम् । राजा । मे ।
वीर । तन्वः । तत् । आसीः ॥ ५ ॥

[पुरूरवाः—]

या सुजूर्णिः श्रेणिः सुम्नआपिर्ह्रदेचक्षुर्न ग्रन्थिनी चरण्युः ।

ता अञ्जयोऽरुणयो न सस्रुः श्रिये गावो न धेनवोऽनवन्त ॥ ६ ॥

या । सुऽजूर्णिः । श्रेणिः । सुम्नेऽआपिः । ह्रदेऽचक्षुः । न ।
ग्रन्थिनी । चरण्युः ।
ताः । अञ्जयः । अरुणयः । न । सस्रुः । श्रिये । गावः ।
न । धेनवः । अनवन्त ॥ ६ ॥

[उर्वशी--]

समस्मिञ्जायमान आसत ग्ना उतेमवर्धन्नद्यः स्वगूर्ताः ।
महे यत्त्वा पुरूरवो रणायावर्धयन्दस्युहत्याय देवाः ॥ ७ ॥

सम् । अस्मिन् । जायमाने । आसत । ग्नाः । उत ।
ईम् । अवर्धन् । नद्यः । स्वऽगूर्ताः ।
महे । यत् । त्वा । पुरूरवः । रणाय । अवर्धयन् ।
दस्युऽहत्याय । देवाः ॥ ७ ॥

[पुरूरवाः--]

सचा यदासु जहतीष्वत्कममानुषीषु मानुषो निषेवे ।
अप स्म मत्तरसन्ती न भुज्युस्ता अत्रसन् रथस्पृशो नाश्वाः ॥८॥

सचा । यत् । आसु । जहतीषु । अत्कम् । अमानुषीषु ।
मानुषः । निऽसेवे ।
अप । स्म । मत् । तरसन्ती । न । भुज्युः । ताः । अत्रसन् ।
रथऽस्पृशः । न । अश्वाः ॥ ८ ॥

यदासु मर्तो अमृतासु निस्पृक्सं क्षोणीभिः क्रतुभिर्न पृङ्क्ते ।
ता आतयो न तन्वः शुम्भत स्वा अश्वासो न क्रीळयो
दन्दशानाः ॥ ९ ॥

यत् । आसु । मर्तः । अमृतासु । निऽस्पृक् । सम् ।
क्षोणीभिः । क्रतुऽभिः । न । पृङ्क्ते ।
ताः । आतयः । न । तन्वः । शुम्भत । स्वाः । अश्वासः ।
न । क्रीळयः । दन्दशानाः ॥ ९ ॥

विद्युन्न या पतन्ती दविद्योद्भरन्ती मे अप्या काम्यानि ।
जनिष्टो अपो नर्यः सुजातः प्रोर्वशी तिरत दीर्घमायुः ॥ १० ॥

विऽद्युत् । न । या । पतन्ती । दविद्योत् । भरन्ती । मे ।
अप्या । काम्यानि ।
जनिष्टो इति । अपः । नर्यः । सुऽजातः । प्र । उर्वशी ।
तिरत । दीर्घम् । आयुः ॥ १० ॥

[उर्वशी--]

जज्ञिष इत्था गोपीथ्याय हि दधाथ तत्पुरूरवो म ओजः ।
अशासं त्वा विदुषी सस्मिन्नहन्न म आशृणोः किमभुग्वदासि
॥ ११ ॥

जज्ञिषे । इत्था । गोऽपीथ्याय । हि । दधाथ । तत् ।
पुरूरवः । मे । ओजः ।
अशासम् । त्वा । विदुषी । सस्मिन् । अहन् । न । मे ।
आ । अशृणोः । किम् । अभुक् । वदासि ॥ ११ ॥

[पुरूरवाः—]

कदा सूनुः पितरं जात इच्छाच्चक्रन्नाश्रु वर्तयद्विजानन् ।
को दम्पती समनसा वि यूयोदध यदग्निः श्वशुरेषु दीदयत्
॥ १२ ॥

कदा । सूनुः । पितरम् । जातः । इच्छात् । चक्रन् । न ।
अश्रु । वर्तयत् । विऽजानन् ।
कः । दम्पती इति दम्ऽपती । सऽमनसा । वि । यूयोत् ।
अध । यत् । अग्निः । श्वशुरेषु । दीदयत् ॥ १२ ॥

[उर्वशी—]

प्रति ब्रवाणि वर्तयते अश्रु चक्रन्न क्रन्ददाध्ये शिवायै ।
प्र तत्ते हिनवा यत्ते अस्मे परेह्यस्तं नहि मूर मापः ॥ १३ ॥

प्रति । ब्रवाणि । वर्तयते । अश्रु । चक्रन् । न । क्रन्दत् ।
आऽध्ये । शिवायै ।
प्र । तत् । ते । हिनव । यत् । ते । अस्मे इति । परा । इहि ।
अस्तम् । नहि । मूर । मा । आपः ॥ १३ ॥

[पुरूरवाः—]

सुदेवो अद्य प्रपतेदनावृत्परावतं परमां गन्तवा उ ।
अधा शयीत निर्ऋतेरुपस्थेऽधैनं वृका रभसासो अद्युः ।। १४ ।।

सुऽदेवः । अद्य । प्रऽपतेत् । अनावृत् । पराऽवतम् ।
परमाम् । गन्तवै । ऊँ इति ।
अध । शयीत । निःऽऋतेः । उपऽस्थे । अध । एनम् ।
वृकाः । रभसासः । अद्युः ।। १४ ।।

[उर्वशी—]

पुरूरवो मा मृथा मा प्र पप्तो मा त्वा वृकासो अशिवास उ क्षन् ।
न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणां हृदयान्येता ।।१५।।

पुरूरवः । मा । मृथाः । मा । प्र । पप्तः । मा । त्वा ।
वृकासः । अशिवासः । ऊँ इति । क्षन् ।
न । वै । स्त्रैणानि । सख्यानि । सन्ति । सालावृकाणाम् ।
हृदयानि । एता ।। १५ ।।

यद्विरूपाचरं मर्त्येष्ववसं रात्रीः शरदश्चतस्रः ।

घृतस्य स्तोकं सकृदह्न आश्नां तादेवेदं तातृपाणा चरामि

॥ १६ ॥

यत् । विऽरूपा । अचरम् । मर्त्येषु । अवसम् । रात्रीः ।
शरदः । चतस्रः ।

घृतस्य । स्तोकम् । सकृत् । अह्नः । आश्नाम् । तात् ।
एव । इदम् । ततृपाणा । चरामि ॥ १६ ॥

[पुरूरवाः--]

अन्तरिक्षप्रां रजसो विमानीमुप शिक्षाम्युर्वशीं वसिष्ठः ।

उप त्वा रातिः सुकृतस्य तिष्ठान्नि वर्तस्व हृदयं तप्यते मे ॥१७॥

अन्तरिक्षऽप्राम् । रजसः । विऽमानीम् । उप । शिक्षामि ।
उर्वशीम् । वसिष्ठः ।

उप । त्वा । रातिः । सुऽकृतस्य । तिष्ठात् । नि ।
वर्तस्व । हृदयम् । तप्यते । मे ॥ १७ ॥

[उर्वशी—]

इति त्वा देवा इम आहुरैळ यथेमेतद्भवसि मृत्युबन्धुः ।
प्रजा ते देवान्हविषा यजाति स्वर्ग उ त्वमपि मादयासे ॥ १८ ॥

इति । त्वा । देवाः । इमे । आहुः । ऐळ । यथा । ईम् ।
एतत् । भवसि । मृत्युऽबन्धुः ।
प्रऽजा । ते । देवान् । हविषा । यजाति । स्वःऽगे ।
ऊँ इति । त्वम् । अपि । मादयासे ॥ १८ ॥

---

## २७

### म. १०. सू. १०८

किमिच्छन्तीत्येकादशर्चं [नवमेऽनुवाके] नवमं सूक्तं त्रैष्टुभम्। ऐन्द्रपुरोहितस्य बृहस्पतेर्गोषु वलनाम्नोऽसुरस्य भटैः पणिनामकैरसुरैरपहृत्य गुहायां निहितासु सतीषु बृहस्पतिप्रेरितेनेन्द्रेण गवामन्वेषणाय सरमा नाम देवशुनी प्रेषिता। सा च महतीं नदीमुत्तीर्य वलपुरं प्राप्य गुप्तस्थाने नीतास्ता गा ददर्श। अथ तस्मिन्नन्तरे पणय इदं वृत्तान्तमवगच्छन्त एनां मित्रीकर्तुं संवादमकुर्वन्। तत्र प्रथमातृतीयाद्या अयुजोऽन्त्यावर्जिताः पणीनां वाक्यानि। अत्र त ऋषयः सरमा देवता। द्वितीयाचतुर्थ्याद्या युज एकादशी च षट् सरमाया वाक्यानि। अतस्तासु सर्पिः पणयो देवता। गतो विनियोगः ॥

[पणयः—]

किमिच्छन्ती सरमा प्रेदमानड् दूरे ह्यध्वा जगुरिः पराचैः।
कास्मेहितिः का परितक्म्यासीत्कथं रसाया अतरः पयांसि ॥१॥

किम् । इच्छन्ती । सरमा । प्र । इदम् । आनट् । दूरे ।
हि । अध्वा । जगुरिः । पराचैः ।
का । अस्मेऽहितिः । का । परिऽतक्म्या । आसीत् । कथम् ।
रसायाः । अतरः । पयांसि ॥ १ ॥

[सरमा—]

इन्द्रस्य दूतीरिषिता चरामि मह इच्छन्ती पणयो निधीन्वः ।
अतिष्कदो भियसा तन्न आवत्तथा रसायाः अतरं पयांसि ॥२॥

इन्द्रस्य । दूतीः । इषिता । चरामि । महः । इच्छन्ती ।
पणयः । निऽधीन् । वः ।
अतिऽस्कदः । भियसा । तत् । नः । आवत् । तथा ।
रसायाः । अतरम् । पयांसि ॥ २ ॥

[ पणयः— ]

कीदृङ्ङिन्द्रः सरमे का दृशीका यस्येदं दूतीरसरः पराकात् ।
आ च गच्छान्मित्रमेना दधामाथा गवां गोपतिर्नो भवाति ॥३॥

कीदृङ् । इन्द्रः । सरमे । का । दृशीका । यस्य । इदम् ।
दूतीः । असरः । पराकात् ।
आ । च । गच्छात् । मित्रम् । एन । दधाम । अथ ।
गवाम् । गोऽपतिः । नः । भवाति ॥ ३ ॥

[ सरमा— ]

नाहं तं वेद दभ्यं दभत्स यस्येदं दूतीरसरं पराकात् ।
न तं गूहन्ति स्रवतो गभीरा हता इन्द्रेण पणयः शयध्वे ॥४॥

न । अहम् । तम् । वेद । दभ्यम् । दभत् । सः । यस्य । इदम् ।
दूतीः । असरम् । पराकात् ।
न । तम् । गूहन्ति । स्रवतः । गभीराः । हताः । इन्द्रेण ।
पणयः । शयध्वे ॥ ४ ॥

[ पणयः— ]

इमा गावः सरमे या ऐच्छः परि दिवो अन्तान्त्सुभगे पतन्ती ।

कस्त एना अव सृजादयुध्व्युतास्माकमायुधा सन्ति तिग्मा ॥ ५ ॥

इमाः । गावः । सरमे । याः । ऐच्छः । परि । दिवः ।

अन्तान् । सुऽभगे । पतन्ती ।

कः । ते । एनाः । अव । सृजात् । अयुध्वी । उत ।

अस्माकम् । आयुधा । सन्ति । तिग्मा ॥ ५ ॥

[ सरमा— ]

असेन्या वः पणयो वचांस्यनिषव्यास्तन्वः सन्तु पापीः ।

अधृष्टो व एतवा अस्तु पन्था बृहस्पतिर्व उभया न मृळात् ॥ ६ ॥

असेन्या । वः । पणयः । वचांसि । अनिषव्याः । तन्वः ।

सन्तु । पापीः ।

अधृष्टः । वः । एतवै । अस्तु । पन्थाः । बृहस्पतिः ।

वः । उभया । न । मृळात् ॥ ६ ॥

[पणयः—]

अयं निधिः सरमे अद्रिबुध्नो गोभिरश्वेभिर्वसुभिर्न्यृष्टः ।
रक्षन्ति तं पणयो ये सुगोपा रेकु पदमलकमा जगन्थ ॥ ७ ॥

अयम् । निऽधिः । सरमे । अद्रिऽबुध्नः । गोभिः । अश्वेभिः । वसुऽभिः । निऽऋृष्टः ।
रक्षन्ति । तम् । पणयः । ये । सुऽगोपाः । रेकु । पदम् । अलकम् । आ । जगन्थ ॥ ७ ॥

[सरमा—]

एह गमन्नृषयः सोमशिता अयास्यो अङ्गिरसो नवग्वाः ।
त एतमूर्वं वि भजन्त गोनामथैतद्वचः पणयो वमन्नित् ॥ ८ ॥

आ । इह । गमन् । ऋषयः । सोमऽशिताः । अयास्यः । अङ्गिरसः । नवऽग्वाः ।
ते । एतम् । ऊर्वम् । वि । भजन्त । गोनाम् । अथ । एतत् । वचः । पणयः । वमन् । इत् ॥ ८ ॥

[ पणयः-- ]

एवा च त्वं सरम आजगन्थ प्रबाधिता सहसा दैव्येन ।
स्वसारं त्वा कृणवै मा पुनर्गा अप ते गवां सुभगे भजाम ॥९॥

एव । च । त्वम् । सरमे । आऽजगन्थ । प्रऽबाधिता ।
सहसा । दैव्येन ।
स्वसारम् । त्वा । कृणवै । मा । पुनः । गाः । अप । ते ।
गवाम् । सुऽभगे । भजाम ॥ ९ ॥

[ सरमा-- ]

नाहं वेद भ्रातृत्वं नो स्वसृत्वमिन्द्रो विदुरङ्गिरसश्च घोराः ।
गोकामा मे अच्छदयन्यदायमपात इत पणयो वरीयः ॥१०॥

न । अहम् । वेद । भ्रातृऽत्वम् । नो इति । स्वसृऽत्वम् ।
इन्द्रः । विदुः । अङ्गिरसः । च । घोराः ।
गोऽकामाः । मे । अच्छदयन् । यत् । आयम् । अप । अतः ।
इत । पणयः । वरीयः ॥ १० ॥

दूरमित पणयो वरीय उद् गावो यन्तु मिनतीर्ऋतेन ।
बृहस्पतिर्या अविन्दन्निगूळ्हाः सोमो ग्रावाण ऋषयश्च विप्राः ॥११

दूरम् । इत । पणयः । वरीयः । उत् । गावः । यन्तु ।
मिनतीः । ऋतेन ।
बृहस्पतिः । याः । अविन्दत् । निऽगूळ्हाः । सोमः ।
ग्रावाणः । ऋषयः । च । विप्राः ॥११॥

---

## २८

### म. १०. सू. ११७

न वेति नवमं [दशमेऽनुवाके] पञ्चमं सूक्तम्। भिक्षुर्नामाङ्गिरस ऋषिः। प्रथमाद्वितीये जगत्यौ शिष्टाः सप्त त्रिष्टुभः। अत्र धनस्यान्नस्य च दानं स्तूयते। अतस्तद्दैवत्यमिदम्। गतो विनियोगः ॥

न वा उ देवाः क्षुधमिद्वधं ददुरुताशितमुप गच्छन्ति मृत्यवः ।
उतो रयिः पृणतो नोप दस्यत्युतापृणन् मर्डितारं न विन्दते
॥ १ ॥

न । वै । ऊँ इति । देवाः । क्षुधम् । इत् । वधम् । ददुः ।

उत । आशितम् । उप । गच्छन्ति । मृत्यवः ।

उतो इति । रयिः । पृणतः । न । उप । दस्यति । उत ।

अपृणन् । मर्डितारम् । न । विन्दते ॥ १ ॥

**य आध्राय चकमानाय पित्वोऽन्नवान्त्सन् रफितायोपजग्मुषे ।**

**स्थिरं मनः कृणुते सेवते पुरोतो चित्स मर्डितारं न विन्दते ॥२॥**

यः । आध्राय । चकमानाय । पित्वः । अन्नऽवान् । सन् ।

रफिताय । उपऽजग्मुषे ।

स्थिरम् । मनः । कृणुते । सेवते । पुरा । उतो इति ।

चित् । सः । मर्डितारम् । न । विन्दते ॥ २ ॥

**स इद्भोजो यो गृहवे ददात्यन्नकामाय चरते कृशाय ।**

**अरमस्मै भवति यामहूता उतापरीषु कृणुते सखायम् ॥ ३ ॥**

सः । इत् । भोजः । यः । गृहवे । ददाति । अन्नऽकामाय ।
चरते । कृशाय ।
अरम् । अस्मै । भवति । यामऽहूतौ । उत । अपरीषु ।
कृणुते । सखायम् ॥ ३ ॥

न स सखा यो न ददाति सख्ये सचाभुवे सचमानाय पित्वः ।
अपास्मात्प्रेयान्न तदोको अस्ति पृणन्तमन्यमरणं चिदिच्छेत्
॥४॥

न । सः । सखा । यः । न । ददाति । सख्ये । सचाऽभुवे ।
सचमानाय । पित्वः ।
अप । अस्मात् । प्र । इयात् । न । तत् । ओकः । अस्ति ।
पृणन्तम् । अन्यम् । अरणम् । चित् । इच्छेत् ॥ ४ ॥

पृणीयादिन्नाधमानाय तव्यान्द्राघीयांसमनु पश्येत पन्थाम् ।
ओ हि वर्तन्ते रथ्येव चक्रान्यमन्यमुप तिष्ठन्त रायः ॥५॥

पृणीयात् । इत् । नाधमानाय । तव्यान् । द्राघीयांसम् ।
अनु । पश्येत । पन्थाम् ।
ओ इति । हि । वर्तन्ते । रथ्याऽइव । चक्रा । अन्यम्ऽअन्यम् ।
उप । तिष्ठन्त । रायः ॥ ५ ॥

मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत् स तस्य ।
नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी ॥६॥

मोघम् । अन्नम् । विन्दते । अप्रऽचेताः । सत्यम् । ब्रवीमि ।
वधः । इत् । सः । तस्य ।
न । अर्यमणम् । पुष्यति । नो इति । सखायम् । केवलऽअघः ।
भवति । केवलऽआदी ॥ ६ ॥

कृषन्नित्फाल आशितं कृणोति यन्नध्वानमप वृङ्क्ते चरित्रैः ।
वदन्ब्रह्मावदतो वनीयान्पृणन्नापिरपृणन्तमभि ष्यात् ॥ ७ ॥

कृपन् । इत् । फालः । आशितम् । कृणोति । यन् । अध्वानम् ।
अप । वृङ्क्ते । चरित्रैः ।
वदन् । ब्रह्मा । अवदतः । वनीयान् । पृणन् । आपिः ।
अपृणन्तम् । अभि । स्यात् ॥ ७ ॥

एकपाद् भूयो द्विपदो वि चक्रमे द्विपात् त्रिपादमभ्येति पश्चात् ।
चतुष्पादेति द्विपदामभिस्वरे संपश्यन् पङ्क्तीरुपतिष्ठमानः ॥ ८ ॥

एकऽपात् । भूयः । द्विऽपदः । वि । चक्रमे । द्विऽपात् ।
त्रिऽपादम् । अभि । एति । पश्चात् ।
चतुःऽपात् । एति । द्विऽपदाम् । अभिऽस्वरे । सम्ऽपश्यन् ।
पङ्क्तीः । उपऽतिष्ठमानः ॥ ८ ॥

समौ चिद्धस्तौ न समं विविष्टः संमातरा चिन्न समं दुहाते ।
यमयोश्चिन्न समा वीर्याणि ज्ञाती चित्सन्तौ न समं पृणीतः॥९॥

समौ । चित् । हस्तौ । न । समम् । विविष्टः । सम्ऽमातरा ।

चित् । न । समम् । दुहाते इति ।

यमयोः । चित् । न । समा । वीर्याणि । ज्ञाती इति ।

चित् । सन्तौ । न । समम् । पृणीतः ॥ ९ ॥

---

२९

म. १०. सू. १२१

हिरण्यगर्भ इति दशर्चं [दशमेऽनुवाके] नवमं सूक्तं प्रजापतिपुत्रस्य हिरण्यगर्भाख्यस्यार्षं त्रैष्टुभम्। कशब्दाभिधेयः प्रजापतिर्देवता। गतः सूक्तविनियोगः ॥

**हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।**
**स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ १ ॥**

हिरण्यऽगर्भः । सम् । अवर्तत । अग्रे । भूतस्य । जातः ।

पतिः । एकः । आसीत् ।

सः । दाधार । पृथिवीम् । द्याम् । उत । इमाम् । कस्मै ।

देवाय । हविषा । विधेम ॥ १ ॥

य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः ।
यस्य छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ।। २ ।।

यः । आत्मऽदाः । बलऽदाः । यस्य । विश्वे । उपऽआसते ।
प्रऽशिषम् । यस्य । देवाः ।
यस्य । छाया । अमृतम् । यस्य । मृत्युः । कस्मै । देवाय ।
हविषा । विधेम ।। २ ।।

यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव ।
य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ।। ३ ।।

यः । प्राणतः । निऽमिषतः । महिऽत्वा । एकः । इत् ।
राजा । जगतः । बभूव ।
यः । ईशे । अस्य । द्विऽपदः । चतुःऽपदः । कस्मै । देवाय ।
हविषा । विधेम ।। ३ ।।

यस्येमे हिमवन्तो महित्वा यस्य समुद्रं रसया सहाहुः ।
यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम ॥ ४ ॥

यस्य । इमे । हिमऽवन्तः । महिऽत्वा । यस्य । समुद्रम् ।
रसया । सह । आहुः ।
यस्य । इमाः । प्रऽदिशः । यस्य । बाहू इति । कस्मै ।
देवाय । हविषा । विधेम ॥ ४ ॥

येन द्यौरुग्रा पृथिवी च दृळ्हा येन स्वः स्तभितं येन नाकः ।
यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ॥ ५ ॥

येन । द्यौः । उग्रा । पृथिवी । च । दृळ्हा । येन ।
स्व१रिति स्वः । स्तभितम् । येन । नाकः ।
यः । अन्तरिक्षे । रजसः । विऽमानः । कस्मै । देवाय ।
हविषा । विधेम ॥ ५ ॥

यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने ।
यत्राधि सूर उदितो विभाति कस्मै देवाय हविषा विधेम ॥ ६ ॥

यम् । क्रन्दसी इति । अवसा । तस्तभाने इति । अभि ।
ऐक्षेताम् । मनसा । रेजमाने इति ।
यत्र । अधि । सूरः । उत्ऽइतः । विऽभाति । कस्मै ।
देवाय । हविषा । विधेम ॥ ६ ॥

आपो ह यद् बृहतीर्विश्वमायन् गर्भं दधाना जनयन्तीरग्निम् ।
ततो देवानां समवर्ततासुरेकः कस्मै देवाय हविषा विधेम ॥ ७ ॥

आपः । ह । यत् । बृहतीः । विश्वम् । आयन् । गर्भम् ।
दधानाः । जनयन्तीः । अग्निम् ।
ततः । देवानाम् । सम् । अवर्तत । असुः । एकः । कस्मै ।
देवाय । हविषा । विधेम ॥ ७ ॥

यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयन्तीर्यज्ञम् ।

यो देवेष्वधि देव एक आसीत्कस्मै देवाय हविषा विधेम ॥ ८ ॥

यः । चित् । आपः । महिना । परिऽअपश्यत् । दक्षम् ।

दधानाः । जनयन्तीः । यज्ञम् ।

यः । देवेषु । अधि । देवः । एकः । आसीत् । कस्मै ।

देवाय । हविषा । विधेम ॥ ८ ॥

मा नो हिंसीज्जनिता यः पृथिव्या यो वा दिवं सत्यधर्मा जजान ।

यश्चापश्चन्द्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम ॥ ९ ॥

मा । नः । हिंसीत् । जनिता । यः । पृथिव्याः । यः ।

वा । दिवम् । सत्यऽधर्मा । जजान ।

यः । च । अपः । चन्द्राः । बृहतीः । जजान । कस्मै ।

देवाय । हविषा । विधेम ॥ ९ ॥

इळादधाख्य इष्टचयने प्राजापत्यस्य हविष. प्रजापत इत्येषानुवाक्या । केशनखकीटादिभिर्दुष्टानि हवींष्यनयैवाप्सु प्रक्षिपेत्। चौलादिकर्मस्वप्येषा होमार्था ॥

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥ १० ॥

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो
रयीणाम् ॥ १० ॥

---

३०

म. १०. सू. १२५

अहमित्यष्टर्चं [दशमेऽनुवाके] त्रयोदश सूक्तम्। अम्भृणस्य महर्षेर्दुहिता वाङ्नाम्नी ब्रह्मविदुषी स्वात्मानमस्तौत्। अतः सर्षिः। सच्चित्सुखात्मक सर्वगत परमात्मा देवता। तेन ह्येषा तादात्म्यमनुभवन्ती सर्वजगद्रूपेण सर्वस्याधिष्ठानत्वेन चाहमेव सर्वं भवामीति स्वात्मानं स्तौति। द्वितीया जगती शिष्टा. सप्त त्रिष्टुभ.। गतो विनियोगः ॥

अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः ।
अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा ॥ १ ॥

अहम् । रुद्रेभिः । वसुऽभिः । चरामि । अहम् । आदित्यैः ।
उत । विश्वऽदेवैः ।
अहम् । मित्रावरुणा । उभा । बिभर्मि । अहम् । इन्द्राग्नी
इति । अहम् । अश्विना । उभा ॥ १ ॥

अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगम् ।
अहं दधामि द्रविणं हविष्मते सुप्राव्ये३ यजमानाय सुन्वते ॥२॥

अहम् । सोमम् । आहनसम् । बिभर्मि । अहम् । त्वष्टारम् ।
उत । पूषणम् । भगम् ।
अहम् । दधामि । द्रविणम् । हविष्मते । सुप्रऽअव्ये ।
यजमानाय । सुन्वते ॥ २ ॥

अहं राष्ट्री संगमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम् ।
तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्यावेशयन्तीम् ॥ ३ ॥

अहम् । राष्ट्री । सम्ऽगमनी । वसूनाम् । चिकितुषी ।
प्रथमा । यज्ञियानाम् ।
ताम् । मा । देवाः । वि । अदधुः । पुरुऽत्रा । भूरिऽस्थात्राम् ।
भूरि । आऽवेशयन्तीम् ॥ ३ ॥

मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं
शृणोत्युक्तम् ।
अमन्तवो मां त उप क्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि ॥४॥

मया । सः । अन्नम् । अत्ति । यः । विऽपश्यति । यः ।
प्राणिति । यः । ईम् । शृणोति । उक्तम् ।
अमन्तवः । माम् । ते । उप । क्षियन्ति । श्रुधि । श्रुत ।
श्रद्धिऽवम् । ते । वदामि ॥ ४ ॥

अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः ।
यं कामये तंतमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥५॥

अहम् । एव । स्वयम् । इदम् । वदामि । जुष्टम् । देवेभिः ।
उत । मानुषेभिः ।
यम् । कामये । तम्ऽतम् । उग्रम् । कृणोमि । तम् ।
ब्रह्माणम् । तं । ऋषिम् । तम् । सुऽमेधाम् ॥ ५ ॥

अहं रुद्राय धनुरा तनोमि ब्रह्मद्विषे शरवे हन्तवा उ ।
अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आ विवेश ॥ ६ ॥

अहम् । रुद्राय । धनुः । आ । तनोमि । ब्रह्मऽद्विषे ।
शरवे । हन्तवै । ऊँ इति ।
अहम् । जनाय । सऽमदम् । कृणोमि । अहम् । द्यावापृथिवी
इति । आ । विवेश ॥ ६ ॥

अहं सुवे पितरमस्य मूर्धन्मम योनिरप्स्व१न्तः समुद्रे ।
ततो वि तिष्ठे भुवनानु विश्वोतामूं द्यां वर्ष्मणोप स्पृशामि ॥७॥

अहम् । सुवे । पितरम् । अस्य । मूर्धन् । मम । योनिः ।

अप्ऽसु । अन्तरिति । समुद्रे ।

ततः । वि । तिष्ठे । भुवना । अनु । विश्वा । उत ।

अमूम् । द्याम् । वर्ष्मणा । उप । स्पृशामि ॥ ७ ॥

अहमेव वातइव प्र वाम्यारभमाणा भुवनानि विश्वा ।

परो दिवा पर एना पृथिव्यैतावती महिना सं बभूव ॥ ८ ॥

अहम् । एव । वातःऽइव । प्र । वामि । आऽरभमाणा ।

भुवनानि । विश्वा ।

परः । दिवा । परः । एना । पृथिव्या । एतावती । महिना ।

सम् । बभूव ॥ ८ ॥

———o———

## ३१

### म. १०. सू. १२७

रात्रीत्यष्टर्चं [दशमेऽनुवाके] पञ्चदशं सूक्तं सोभरिपुत्रस्य कुशिकस्यार्षम्। यद्वा भारद्वाजस्य सुता रात्र्याख्यास्य सूक्तस्यर्षिका। गायत्रं रात्रिदेवताकम्। दुःस्वप्नदर्शने उपोषितेन कर्त्रा पायसेन होतव्यम्। तत्रैतत्सूक्तं करणत्वेन विनियुक्तम्॥

रात्री व्यख्यदायती पुरुत्रा देव्य१क्षभिः।
विश्वा अधि श्रियोऽधित॥ १॥

रात्री। वि। अख्यत्। आऽयती। पुरुऽत्रा। देवी। अक्षऽभिः। विश्वाः। अधि। श्रियः। अधित॥ १॥

ओर्वप्रा अमर्त्या निवतो देव्यु१द्वतः।
ज्योतिषा बाधते तमः॥ २॥

आ। उरु। अप्राः। अमर्त्या। निऽवतः। देवी। उत्ऽवतः। ज्योतिषा। बाधते। तमः॥ २॥

निरु स्वसारमस्कृतोषसं देव्यायती ।

अपेदु हासते तमः ॥ ३ ॥

निः । ऊँ इति । स्वसारम् । अकृत । उषसम् । देवी ।
आऽयती । अप । इत् । ऊँ इति । हासते । तमः ॥ ३ ॥

सा नो अद्य यस्या वयं नि ते यामन्नविक्ष्महि ।

वृक्षे न वसतिं वयः ॥ ४ ॥

सा । नः । अद्य । यस्याः । वयम् । नि । ते । यामन् ।
अविक्ष्महि । वृक्षे । न । वसतिम् । वयः ॥ ४ ॥

नि ग्रामासो अविक्षत नि पद्वन्तो नि पक्षिणः ।

नि श्येनासश्चिदर्थिनः ॥ ५ ॥

नि । ग्रामासः । अविक्षत । नि । पत्ऽवन्तः । नि ।
पक्षिणः । नि । श्येनासः । चित् । अर्थिनः ॥ ५ ॥

यावया वृक्यं१वृकं यवय स्तेनमूर्म्ये ।
अथा नः सुतरा भव ॥ ६ ॥

यवय । वृक्यम् । वृकम् । यवय । स्तेनम् । ऊर्म्ये ।
अथ । नः । सुऽतरा । भव ॥ ६ ॥

उप मा पेपिशत्तमः कृष्णं व्यक्तमस्थित ।
उप ऋणेव यातय ॥ ७ ॥

उप । मा । पेपिशत् । तमः । कृष्णम् । विऽअक्तम् ।
अस्थित । उषः । ऋणाऽइव । यातय ॥ ७ ॥

उप ते गाइवाकरं वृणीष्व दुहितर्दिवः ।
रात्रि स्तोमं न जिग्युषे ॥ ८ ॥

उप । ते । गाःऽइव । आ । अकरम् । वृणीष्व । दुहितः ।
दिवः । रात्रि । स्तोमम् । न । जिग्युषे ॥ ८ ॥

# ३२

## म. १०. सू. १२९

नासदासीदिति [एकादशेऽनुवाके] सप्तर्चं प्रथमं सूक्तं त्रैष्टुभम्। परमेष्ठी नाम प्रजापतिर्ऋषिः। वियदादिभावाना सृष्टिस्थितिप्रलयादीनामत्र प्रतिपाद्यत्वात्तेषां कर्ता परमात्मा देवता। गतो विनियोगः ॥

नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमा परो यत्।
किमावरीवः कुह कस्य शर्मन्नम्भः किमासीद् गहनं गभीरम्
॥ १ ॥

न। असत्। आसीत्। नो इति। सत्। आसीत्।
तदानीम्। न। आसीत्। रजः। नो इति। विऽओम।
परः। यत्।

किम्। आ। अवरीवरिति। कुह। कस्य। शर्मन्।
अम्भः। किम्। आसीत्। गहनम्। गभीरम् ॥ १ ॥

न मृत्युरासीदमृतं न तर्हि न राऽया अह्न आसीत्प्रकेतः।
आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किं चनास ॥ २ ॥

न । मृत्युः । आसीत् । अमृतम् । न । तर्हि । न ।

राज्याः । अह्नः । आसीत् । प्रऽकेतः ।

आनीत् । अवातम् । स्वधया । तत् । एकम् । तस्मात् ।

ह । अन्यत् । न । परः । किम् । चन । आस ॥ २ ॥

तम आसीत्तमसा गूळ्हमग्रेऽप्रकेतं सलिलं सर्वमा इदम् ।

तुच्छ्येनाभ्वपिहितं यदासीत्तपसस्तन्महिनाजायतैकम् ॥ ३ ॥

तमः । आसीत् । तमसा । गूळ्हम् । अग्रे । अप्रऽकेतम् ।

सलिलम् । सर्वम् । आः । इदम् ।

तुच्छ्येन । आभु । अपिऽहितम् । यत् । आसीत् । तपसः ।

तत् । महिना । अजायत । एकम् ॥ ३ ॥

कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत् ।

सतो बन्धुमसति निरविन्दन्हृदि प्रतीष्या कवयो मनीषा ॥ ४ ॥

कामः । तत् । अग्रे । सम् । अवर्तत । अधि । मनसः ।

रेतः । प्रथमम् । यत् । आसीत् ।

सतः । बन्धुम् । असति । निः । अविन्दन् । हृदि ।

प्रतिऽइष्य । कवयः । मनीषा ॥ ४ ॥

तिरश्चीनो विततो रश्मिरेषामधः स्विदासी३दुपरि स्विदासी३त् ।

रेतोधा आसन्महिमान आसन्त्स्वधा अवस्तात्प्रयतिः

परस्तात् ॥ ५ ॥

तिरश्चीनः । विऽततः । रश्मिः । एषाम् । अधः । स्वित् ।

आसी३त् । उपरि । स्वित् । आसी३त् ।

रेतःऽधाः । आसन् । महिमानः । आसन् । स्वधा ।

अवस्तात् । प्रऽयतिः । परस्तात् ॥ ५ ॥

को अद्धा वेद क इह प्र वोचत्कुत आजाता कुत इयं विसृष्टिः ।

अर्वाग्देवा अस्य विसर्जनेनाथा को वेद यत आ बभूव ॥ ६ ॥

कः । अद्धा । वेद । कः । इह । प्र । वोचत् । कुतः ।
आऽजाता । कुतः । इयम् । विऽसृष्टिः ।
अर्वाक् । देवाः । अस्य । विऽसर्जनेन । अथ । कः । वेद ।
यतः । आऽबभूव ॥ ६ ॥

इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न ।
यो अस्याध्यक्षः परमे व्योमन्त्सो अङ्ग वेद यदि वा न वेद ॥७॥

इयम् । विऽसृष्टिः । यतः । आऽबभूव । यदि । वा । दधे ।
यदि । वा । न ।
यः । अस्य । अधिऽअक्षः । परमे । विऽओमन् । सः ।
अङ्ग । वेद । यदि । वा । न । वेद ॥ ७ ॥

# ३३

## म. १०. सू. १४६

अरण्यानीति षड्ऋचम् [एकादशेऽनुवाके] अष्टादशं सूक्तमिरंमद-पुत्रस्य देवमुनेरार्षम्। महदरण्यमरण्यानी तद्देवताकम्। । आनुष्टुभम्। गतो विनियोगः।।

अरण्यान्यरण्यान्यसौ या प्रेव नश्यसि ।
कथा ग्रामं न पृच्छसि न त्वा भीरिव विन्दतीँ३ ।। १ ।।

अरण्यानि । अरण्यानि । असौ । या । प्रऽइव । नश्यसि ।
कथा । ग्रामम् । न । पृच्छसि । न । त्वा । भीःऽइव ।
विन्दतीँ३ ।। १ ।।

वृषारवाय वदते यदुपावति चिच्चिकः ।
आघाटिभिरिव धावयन्नरण्यानिर्महीयते ।। २ ।।

वृषऽरवाय । वदते । यत् । उपऽअवति । चिच्चिकः ।
आघाटिभिःऽइव । धावयन् । अरण्यानिः । महीयते ।। २ ।।

उत गावइवादन्त्युत वेश्मेव दृश्यते ।
उतो अरण्यानिः सायं शकटीरिव सर्जति ।। ३ ।।

उत । गावःऽइव । अदन्ति । उत । वेश्मऽइव । दृश्यते ।

उतो इति । अरण्यानिः । सायम् । शकटीःऽइव । सर्जति ॥ ३ ॥

गामङ्गैष आ ह्वयति दार्वङ्गैषो अपावधीत् ।

वसन्नरण्यान्यां सायमक्रुक्षदिति मन्यते ॥ ४ ॥

गाम् । अङ्ग । एषः । आ । ह्वयति । दारु । अङ्ग । एषः ।

अप । अवधीत् ।

वसन् । अरण्यान्याम् । सायम् । अक्रुक्षत् । इति । मन्यते ॥४॥

न वा अरण्यानिर्हन्त्यन्यश्चेन्नाभिगच्छति ।

स्वादोः फलस्य जग्ध्वाय यथाकामं नि पद्यते ॥ ५ ॥

न । वै । अरण्यानिः । हन्ति । अन्यः । च । इत् । न ।

अभिऽगच्छति ।

स्वादोः । फलस्य । जग्ध्वाय । यथाऽकामम् । नि ।

पद्यते ॥ ५ ॥

आञ्जनगन्धिं सुरभिं बह्वन्नामकृषीवलाम् ।

प्राहं मृगाणां मातरमरण्यानिमशंसिषम् ॥ ६ ॥

आञ्जनऽगन्धिम् । सुरभिम् । बहुऽअन्नाम् । अकृषिऽवलाम् ।

प्र । अहम् । मृगाणाम् । मातरम् । अरण्यानिम् ।

अशंसिषम् ॥ ६ ॥

---

## ३४

### म. १०. सू. १९०

ऋतमिति तृचम् [द्वादशेऽनुवाके] एकोनचत्वारिंशं सूक्तं मधुच्छन्दसः पुत्रस्याघमर्षणस्यार्षमानुष्टुभम्। ऋतादीनां भावानां सृष्ट्यादिप्रतिपादकत्वात्तद्वृत्त एवार्थो देवता। लिङ्गाद्विनियोगोऽवगन्तव्यः ॥

ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत ।

ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥ १ ॥

ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत ।
ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥ १ ॥

समुद्रादर्णवादधि संवत्सरो अजायत ।
अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥ २ ॥

समुद्रादर्णवादधि संवत्सरो अजायत ।
अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥ २ ॥

सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।
दिवं च पृथिवीं चान्तरिक्षमथो स्वः ॥ ३ ॥

सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।
दिवं च पृथिवी चान्तरिक्षमथो स्वः ॥ ३ ॥

---

[ इदमधिकमत्रानुसन्धेयम् । ]

[ यच्चिद् (२ : म. १. सू. २५) इति सूक्तस्य ] विशेषविनियोगस्तु अभिप्लवषडहे इदं सूक्तं होत्रकशस्त्रे स्तोमनिमित्तमावापार्थम् ॥

[ अप न. (५ : म १. सू ९७) इति ] अत्रेदमाख्यानम् । दीर्घजिह्वी नाम राक्षसी सर्वान् यज्ञान् बबाधे । तां हन्तुमिन्द्रोऽशक्तः सन् सर्वस्य मित्रभूतं कुत्समब्रवीदेषा त्वया हन्तव्येति । स चावधीत् । तं वागभ्यवदत् । अनुचितमिदं त्वया चरितं यत् त्वं सर्वेषां मित्रभूतः सन् क्रूरमकार्षीरिति । सोऽपि शोकः प्राप्नोत् । स ऋषिरनेन सूक्तेनाग्निं स्तुत्वा शोकमपागमयत् ॥

[ हये जाये (२६ : म. १०. सू. ९५) इति ] अत्र वाजसनेयकम् । उर्वशी हाप्सरा पुरूरवसमैळं चकमे । तं ह विन्दमानोवाच . . . . मो स्म त्वा नग्नं दर्शमेष वै न स्त्रीणामुपचार इति । सा हास्मिञ् ज्योगुवासापि हास्माद् गर्भिण्यास तावज् ज्योगघास्मिन्नुवास । ततो ह गन्धर्वाः सैमूदिरे ज्योग् वा इयमुर्वशी मनुष्येष्ववात्सीदुपजानीत यथेयं पुनरागच्छेदिति । तस्यै हाविद्वर्युरणा शयन उपबद्धास । ततो ह गन्धर्वा अन्यतरमुरण प्रमेथु. । मा होवाचावीर इव बत मेऽजन इव पुत्रं हरन्तीति । द्वितीयं प्रमेथु । सा ह तथैवोवाच । अथ हायमीक्षाञ्चक्रे कथ नु तदवीरं कथमजनं स्याद् यत्राहं स्यामिति स नग्न एवानूत्पपात, चिरं तन् मेने यद् वास पर्यधास्यत । ततो ह गन्धर्वा विद्युतं जनयाञ्चक्रुस्तं यथा दिवैव नग्नं ददर्श । ततो हैवेयं तिरोबभूव पुनरैमीत्येत् तिरोभूतां स आध्या जल्पन् कुरुक्षेत्रं समया चचार । अन्यत.प्लक्षेति बिसवती तस्यै हाध्यन्तेन वव्राज । तद्ध ता अप्सरस आतयो भूत्वा परिपुप्लुविरे । तं हेयं ज्ञात्वोवाच अयं वै स मनुष्यो यस्मिन्नहमवात्समिति । ता होचुस्तस्मै या आविरसामेति । तथेति तस्मै हाविरासु । तां हायं ज्ञात्वाभि परोवाद हये जाये मनसेत्यादि ॥

# यजुर्वेदः

## ३५

शु. य. वा. अ. १

अत्र इषे त्वा द्वावध्यायौ दर्शपूर्णमासमन्त्राः। परमेष्ठिनः प्राजापत्यस्यार्षं देवानां वा प्राजापत्यानाम्। तत्रास्मिन्नध्याये सर्वाण्येव यजूंषि॥

हरिः ॐ। *इषे त्वोर्जे त्वा वायव स्थ देवो वः सविता
प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्न्या इन्द्राय भागं
प्रजावतीरनमीवा अयक्ष्मा मा व स्तेन ईशत माघशꣳसो ध्रुवा
अस्मिन्गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि ॥ १ ॥
वसोः पवित्रमसि द्यौरसि पृथिव्यसि मातरिश्वनो घर्मोऽसि
विश्वधा असि। परमेण धाम्ना दृꣳहस्व मा ह्वार्मा ते
यज्ञपतिर्ह्वार्षीत् ॥ २ ॥

---

*इमे पाठा (पृ० १७३–१८२) वाजसनेयिमाध्यन्दिनशुक्लयजुर्वेदसंहिताया उद्धृता। अर्थावबोधसौकर्याय अत्र अकारप्रश्लेषः अवग्रहेण निर्दिष्टः। संहितापाठिनस्तु स्वरे परे विसर्गलोपं सन्ध्यभावं च अवग्रहेण निर्दिशन्ति न अकारप्रश्लेषम्॥

वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम् ।
देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा
कामधुक्षः ॥ ३ ॥

सा विश्वायुः सा विश्वकर्मा सा विश्वधायाः । इन्द्रस्य त्वा
भागꣳ सोमेनातनच्मि विष्णो हव्यꣳ रक्ष ॥ ४ ॥

अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् ।
इदमहमनृतात्सत्यमुपैमि ॥ ५ ॥

कस्त्वा युनक्ति स त्वा युनक्ति कस्मै त्वा युनक्ति तस्मै
त्वा युनक्ति । कर्मणे वां वेषाय वाम् ॥ ६ ॥

प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयो निष्टप्तꣳ रक्षो निष्टप्ता
अरातयः । उर्वन्तरिक्षमन्वेमि ॥ ७ ॥

धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान्धूर्वति तं धूर्व यं वयं
धूर्वामः ।

देवानामसि वह्नितमᳪ सस्नितमं पप्रितमं जुष्टतमं देवहूतमम् ॥ ८ ॥

अह्रुतमसि हविर्धानं दृᳪहस्व मा ह्वार्मा ते यज्ञपतिर्ह्वार्षीत् । विष्णुस्त्वाक्रमतामुरु वातायापहतᳪ रक्षो यच्छन्तां पञ्च ॥ ९ ॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । अग्नये जुष्टं गृह्णाम्यग्नीषोमाभ्यां जुष्टं गृह्णामि ॥ १० ॥

भूताय त्वा नारातये स्वरभिविख्येषं दृᳪहन्तां दुर्याः पृथिव्याम् । उर्वन्तरिक्षमन्वेमि पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थेऽग्ने हव्यᳪ रक्ष ॥ ११ ॥

पवित्रे स्थो वैष्णव्यौ सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः । देवीरापो अग्रेगुवो अग्रेपुवोऽग्र इममद्य यज्ञं नयताग्रे यज्ञपतिᳪ सुधातुं यज्ञपतिं देवयुवम् ॥ १२ ॥

युष्मा इन्द्रोऽवृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्ये प्रोक्षिता: स्थ । अग्नये त्वा जुष्टं प्रोक्षाम्यग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामि । दैव्याय कर्मणे शुन्धध्वं देवयज्यायै यद्वोऽशुद्धाः पराजघ्नुरिदं वस्तच्छुन्धामि ॥ १३ ॥

शर्मास्यवधूतꣳ रक्षोऽवधूता अरातयोऽदित्यास्त्वगसि प्रति त्वादितिर्वेत्तु । अद्रिरसि वानस्पत्यो ग्रावासि पृथुबुध्नः प्रति त्वादित्यास्त्वग्वेत्तु ॥ १४ ॥

अग्नेस्तनूरसि वाचो विसर्जनं देववीतये त्वा गृह्णामि बृहद्ग्रावासि वानस्पत्यः स इदं देवेभ्यो हविः शमीष्व सुशमि शमीष्व । हविष्कृदेहि हविष्कृदेहि ॥ १५ ॥

कुक्कुटोऽसि मधुजिह्व इषमूर्जमावद त्वया वयꣳ संघातꣳ-संघातं जेष्म वर्षवृद्धमसि प्रति त्वा वर्षवृद्धं वेत्तु परापूतꣳ रक्षः परापूता अरातयः । अपहतꣳ रक्षो वायुर्वो विविनक्तु

देवो यः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना ॥ १६ ॥

धृष्टिरस्यपाग्ने अग्निमामादं जहि निष्क्रव्यादꣳ सेधा देवयजं वह । ध्रुवमसि पृथिवीं दृꣳह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय ॥ १७ ॥

अग्ने ब्रह्म गृभ्णीष्व धरुणमस्यन्तरिक्षं दृꣳह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय । धर्त्रमसि दिवं दृꣳह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय । विश्वाभ्यस्त्वाशाभ्य उपदधामि चितः स्थोर्ध्वचितो भृगूणामङ्गिरसां तपसा तप्यध्वम् ॥ १८ ॥

शर्मास्यवधूतꣳ रक्षोऽवधूता अरातयोऽदित्यास्त्वगसि प्रति त्वादितिर्वेत्तु । धिषणासि पर्वती प्रति त्वादित्यास्त्वग्वेत्तु

दिवः स्कम्भनीरसि धिषणासि पार्वतेयी प्रति त्वा पर्वती वेत्तु ॥ १९ ॥

धान्यमसि धिनुहि देवान्प्राणाय त्वोदानाय त्वा व्यानाय त्वा। दीर्घामनु प्रसितिमायुषे धां देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा महीनां पयोऽसि ॥ २० ॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्। संवपामि समाप ओषधीभिः समोषधयो रसेन। सᳬं रेवतीर्जगतीभिः पृच्यन्ताᳬं सं मधुमतीर्मधुमतीभिः पृच्यन्ताम् ॥ २१ ॥

जनयत्यै त्वा संयौमीदमग्नेरिदमग्नीषोमयोरिषे त्वा घर्मोऽसि विश्वायुरुरुप्रथा उरु प्रथस्वोरु ते यज्ञपतिः प्रथतामग्निष्टे त्वचं मा हिᳬंसीद्देवस्त्वा सविता श्रपयतु वर्षिष्ठेऽधि नाके ॥ २२ ॥

मा भेर्मा संविक्था अतमेरुर्यज्ञोऽतमेरुर्यजमानस्य प्रजा भूयात् ।
त्रिताय त्वा द्विताय त्वैकताय त्वा ॥ २३ ॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।
आददेऽध्वरकृतं देवेभ्य इन्द्रस्य बाहुरसि दक्षिणः सहस्र-
भृष्टिः शततेजा वायुरसि तिग्मतेजा द्विषतो वधः ॥ २४ ॥

पृथिवि देवयजन्योषध्यास्ते मूलं मा हिꣳसिषं व्रजं गच्छ
गोष्ठानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां पृथिव्याꣳ
शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक्
॥ २५ ॥

अपाररुं पृथिव्यै देवयजनाद्वध्यासं व्रजं गच्छ गोष्ठानं वर्षतु
ते द्यौर्बधान देव सवितः परमस्यां पृथिव्याꣳ शतेन पाशै-
र्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतोमा मौक् । अररो दिवं
मा पप्तो द्रप्सस्ते द्यां मा स्कन् व्रजं० मौक् ॥ २६ ॥

गायत्रेण त्वा छन्दसा परिगृह्णामि त्रैष्टुभेन त्वा छन्दसा परिगृह्णामि जागतेन त्वा छन्दसा परिगृह्णामि । सुक्ष्मा चासि शिवा चासि स्योना चासि सुषदा चास्यूर्जस्वती चासि पयस्वती च ॥ २७ ॥

पुरा क्रूरस्य विसृपो विरप्शिन्नुदादाय पृथिवीं जीवदानुम् । यामैरयंश्चन्द्रमसि स्वधाभिस्तामु धीरासो अनुदिश्य यजन्ते । प्रोक्षणीरासादय द्विषतो वधोऽसि ॥ २८ ॥

प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयो निष्टप्तꣳ रक्षो निष्टप्ता अरातयः । अनिशितोऽसि सपत्नक्षिद्वाजिनं त्वा वाजेध्यायै संमार्ज्मि । प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयो निष्टप्तꣳ रक्षो निष्टप्ता अरातयः । अनिशितासि सपत्नक्षिद्वाजिनीं त्वा वाजेध्यायै संमार्ज्मि ॥ २९ ॥

अदित्यै रास्नासि विष्णोर्वेष्योऽस्यूर्जे त्वाऽदब्धेन त्वा चक्षुषावपश्यामि। अग्नेर्जिह्वासि सुहूर्देवेभ्यो धाम्नेधाम्ने मे भव यजुषेयजुषे ॥ ३० ॥

सवितुस्त्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः। सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः। तेजोऽसि शुक्रमस्यमृतमसि धाम नामासि प्रियं देवानामनाधृष्टं देवयजनमसि ॥ ३१ ॥

---

## ३६

### शु. य. वा. अ. ३४

यज्जाग्रत· षट् कण्डिकास्त्रिष्टुभो मनोदेवत्या.। अस्मिन्नध्याये लैङ्गिको विनियोग ॥

यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति।
दूरंगमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसंकल्पमस्तु ॥ १ ॥

येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः ।
यदपूर्वं यक्षमन्तः प्रजानां तन्मे मनः शिवसंकल्पमस्तु ॥ २ ॥
यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु ।
यस्मान्न ऋते किं चन कर्म क्रियते तन्मे मनः शिवसंकल्पमस्तु
॥ ३ ॥
येनेदं भूतं भुवनं भविष्यत्परिगृहीतममृतेन सर्वम् ।
येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसंकल्पमस्तु ॥ ४ ॥
यस्मिन्नृचः साम यजूꣳषि यस्मिन्प्रतिष्ठिता रथनाभाविवाराः ।
यस्मिꣴश्चित्तꣳ सर्वमोतं प्रजानां तन्मे मनः शिवसंकल्पमस्तु
॥ ५ ॥
सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिन इव ।
हृत्प्रतिष्ठं यदजिरं जविष्ठं तन्मे मनः शिवसंकल्पमस्तु ॥ ६ ॥

———o———

३७

कृ. य. तै. का. ३. प्रपा. ५. अनु. ६

अथ षष्ठेऽनुवाके पत्नीविषया मन्त्रा उच्यन्ते ॥

*सं त्वा नह्यामि पयसा घृतेन सं त्वा नह्याम्यप ओषधीभिः ।
सं त्वा नह्यामि प्रजयाऽहमद्य सा दीक्षिता सनवो वाजमस्मे ।
प्रैतु ब्रह्मणस्पत्नी वेदिं वर्णेन सीदतु ।
अथाहमनुकामिनी स्वे लोके विशा इह ।
सुप्रजसस्त्वा वयꣳ सुपत्नीरुप सेदिम ।
अग्ने सपत्नदम्भनमदब्धासो अदाभ्यम् ।
इमं वि ष्यामि वरुणस्य पाशम् (१) यमबध्नीत सविता सुकेतः ।
धातुश्च योनौ सुकृतस्य लोके स्योनं मे सह पत्या करोमि ।
प्रेह्युदेह्युतस्य वामीरन्वग्निस्तेऽग्रं नयत्वदितिर्मध्यं ददताꣳ
रुद्रावसृष्टाऽसि युवा नाम मा मा हिꣳसीर्वसुभ्यो रुद्रेभ्य

* इमे पाठा (पृ० १८३–१९१) कृष्णयजुर्वेदीयतैत्तिरीयसंहिताया उद्धृताः ॥

आदित्येभ्यो विश्वेभ्यो वो देवेभ्यः पन्नेजनीर्गृह्णामि यज्ञाय वः पन्नेजनीः सादयामि विश्वस्य ते विश्वावतो वृष्णियावतः (२) तवाग्ने वामीरनु संदृशि विश्वा रेताꣳसि धिषीयागन् देवान्यज्ञो नि देवीर्देवेभ्यो यज्ञमशिषन्नस्मिन्त्सुन्वति यजमान आशिषः स्वाहाकृताः समुद्रेष्ठा गन्धर्वमा तिष्ठतानु । वातस्य पत्मन्निड ईडिताः (३) ॥

---

## ३८

कृ. य. तै. का. ४ प्रपा. २. अनु. ६

अथ षष्ठे [ अनुवाके ] ओषधिवापो विधीयते ॥

या जाता ओषधयो देवेभ्यस्त्रियुगं पुरा ।

मन्दामि बभ्रूणामहꣳ शतं धामानि सप्त च ॥ १ ॥

शतं वो अम्ब धामानि सहस्रमुत वो रुहः ।

अथा शतक्रत्वो यूयमिमं मे अगदं कृत ॥ २ ॥

पुष्पावतीः प्रसूवतीः फलिनीरफला उत ।
अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः ॥ ३ ॥

ओषधीरिति मातरस्तद्वो देवीरुप ब्रुवे ।
रपाꣳसि विघ्नतीरित रपः (१) चातयमानाः ॥ ४ ॥

अश्वत्थे वो निषदनं पर्णे वो वसतिः कृता ।
गोभाज इत्किलासथ यत्सनवथ पूरुषम् ॥ ५ ॥

यदहं वाजयन्निमा ओषधीर्हस्त आदधे ।
आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ॥ ६ ॥

यदोषधयः संगच्छन्ते राजानः समिताविव ।
विप्रः स उच्यते भिषग्रक्षोहाऽमीवचातनः ॥ ७ ॥

निष्कृतिर्नाम वो माताऽथा यूयꣳ स्थ संकृतीः ।
सराः पतत्रिणीः (२) स्थन यदामयति निष्कृत ॥८॥

अन्या वो अन्यामवत्वन्याऽन्यस्या उपावत ।

ताः सर्वा ओषधयः संविदाना इदं मे प्रावता वचः ॥ ९ ॥

उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते ।

धनꣳ सनिष्यन्तीनामात्मानं तव पूरुष ॥ १० ॥

अति विश्वाः परिष्ठाः स्तेन इव व्रजमक्रमुः ।

ओषधयः प्राचुच्यवुर्यत् किं च तनुवाꣳ रपः ॥ ११ ॥

याः (३) त आतस्थुरात्मानं या आविविशुः परुःपरुः ।

तास्ते यक्ष्मं वि बाधन्तामुग्रो मध्यमशीरिव ॥ १२ ॥

साकं यक्ष्म प्र पत श्येनेन किकिदीविना ।

साकं वातस्य ध्राज्या साकं नश्य निहाकया ॥ १३ ॥

अश्वावतीꣳ सोमवतीमूर्जयन्तीमुदोजसम् ।

आ वित्सि सर्वा ओषधीरस्मा अरिष्टतातये ॥ १४ ॥

याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः ।

बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः ॥ १५ ॥

याः (४) ओषधयः सोमराज्ञीः प्रविष्टाः पृथिवीमनु ।

तासां त्वमस्युत्तमा प्र णो जीवातवे सुव ॥ १६ ॥

अवपतन्तीरवदन्दिव ओषधयः परि ।

यं जीवमश्नवामहै न स रिष्याति पूरुषः ॥ १७ ॥

याश्चेदमुपशृण्वन्ति याश्च दूरं परागताः ।

इह संगत्य ताः सर्वा अस्मै सं दत्त भेषजम् ॥ १८ ॥

मा वो रिषत्खनिता यस्मै चाहं खनामि वः ।

द्विपच्चतुष्पदस्माकꣳ सर्वमस्त्वनातुरम् ॥ १९ ॥

ओषधयः सं वदन्ते सोमेन सह राज्ञा ।

यस्मै करोति ब्राह्मणस्तꣳ राजन् पारयामसि (५) ॥ २० ॥



३९

कृ. य. तै. का. ४. प्रप. ६. अनु. ६

अथ षष्ठे [अनुवाके] अश्वमेधकर्तृ रथमज्जीकरणभावीनि कवचस्वीकारादीन्यङ्गान्युच्यन्ते ॥

जीमूतस्येव भवति प्रतीकं यद्वर्मी याति समदामुपस्थे ।
अनाविद्धया तनुवा जय त्वꣳ स त्वा वर्मणो महिमा पिपर्तु
॥ १ ॥

धन्वना गा धन्वनाऽऽजिं जयेम धन्वना तीव्राः समदो जयेम ।
धनुः शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम ॥२॥

वक्ष्यन्तीवेदा गनीगन्ति कर्णं प्रियꣳ सखायं परिषस्वजाना ।
योषेव शिङ्क्ते वितताऽधि धन्वन् (१) ज्या इयꣳ समने
पारयन्ती ॥ ३ ॥

ते आचरन्ती समनेव योषा मातेव पुत्रं बिभृतामुपस्थे ।
अप शत्रून्विध्यताꣳ संविदाने आर्त्नी इमे विष्फुरन्ती
अमित्रान् ॥ ४ ॥

बह्वीनां पिता बहुरस्य पुत्रश्चिश्चा कृणोति समनाऽवगत्य ।
इषुधिः सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः
॥ ५ ॥

रथे तिष्ठन्नयति वाजिनः पुरो यत्रयत्र कामयते सुषारथिः ।
अभीशूनां महिमानम् (२) पनायत मनः पश्चादनु यच्छन्ति
रश्मयः ॥ ६ ॥

तीव्रान्घोषान्कृण्वते वृषपाणयोऽश्वा रथेभिः सह वाजयन्तः ।
अवक्रामन्तः प्रपदैरमित्रान्क्षिणन्ति शत्रूꣳ रनपव्ययन्तः ॥ ७ ॥
रथवाहनꣳ हविरस्य नाम यत्राऽऽयुधं निहितमस्य वर्म ।
तत्रा रथमुप शग्मꣳ सदेम विश्वाहा वयꣳ सुमनस्यमानाः
॥ ८ ॥

स्वादुषꣳ सदः पितरो वयोधाः कृच्छ्रेश्रितः शक्तीवन्तो गभीराः ।
चित्रसेना इषुबला अमृध्राः सतोवीरा उरवो व्रातसाहाः ॥ ९ ॥
ब्राह्मणासः (३) पितरः सोम्यासः शिवे नो द्यावापृथिवी

अनेहसा । पूषा नः पातु दुरितादृतावृधो रक्षा माकिर्नो अघशꣳस ईशत ॥ १० ॥

सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः संनद्धा पतति प्रसूता । यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यꣳसन् ॥ ११ ॥

ऋजीते परि वृङ्ग्धि नोऽश्मा भवतु नस्तनूः । सोमो अधि ब्रवीतु नोऽदितिः (४) शर्म यच्छतु ॥ १२ ॥

आ जङ्घन्ति सान्वेषां जघनाꣳ उप जिघ्नते । अश्वाजनि प्रचेतसोऽश्वान्त्समत्सु चोदय ॥ १३ ॥

अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः । हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमाꣳसं परि पातु विश्वतः ॥ १४ ॥

वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः । गोभिः संनद्धो असि वीडयस्वाऽऽस्थाता ते जयतु जेत्वानि ॥ १५ ॥

दिवः पृथिव्याः परि (५) ओज उद्भृतं वनस्पतिभ्यः पर्याभृतꣳ सहः ।
अपामोज्मानं परि गोभिरावृतमिन्द्रस्य वज्रꣳ हविषा रथं यज ॥ १६ ॥

इन्द्रस्य वज्रो मरुतामनीकं मित्रस्य गर्भो वरुणस्य नाभिः ।
सेमां नो हव्यदातिं जुषाणो देव रथ प्रति हव्या गृभाय ॥ १७ ॥

उप श्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुतां विष्ठितं जगत् ।
स दुन्दुभे सजूरिन्द्रेण देवैर्दूराद् (६) दवीयो अप सेध शत्रून् ॥ १८ ॥

आ क्रन्दय बलमोजो न आ धा निष्टनिहि दुरिता बाधमानः ।
अप प्रोथ दुन्दुभे दुच्छुनाꣳ इत इन्द्रस्य मुष्टिरसि वीडयस्व ॥ १९ ॥

आऽमूरज प्रत्यावर्तयेमाः केतुमद् दुन्दुभिर्वावदीति ।
समश्वपर्णाश्चरन्ति नो नरोऽस्माकमिन्द्र रथिनो जयन्तु (७) ॥ २० ॥

# अथर्ववेदः

४०

का. १. सू. १

[ ऋषिरथर्वा। वाचस्पत्यम्। चतुर्ऋचम्। आनुष्टुभम्। चतुर्थी चतुष्पदा विराडुरोबृहती ॥ ]

ये त्रिषप्ता इत्येतत् प्रथमं सूक्तम्। अस्य मेधाजननकर्मसु विनियोग। उपनयनदिवसेऽपि मेधाकामस्य ब्रह्मचारिणोऽनेन सूक्तेनाज्यहोम कार्यं। तथैव ब्रह्मचारिसंपत्कर्मस्वस्य सूक्तस्य विनियोगः। तथा ग्रामसंपत्कामस्य तत्साधनेष्वेतेषु दुम्बरपलाशकर्कन्धूतक्षणाधानसभोपस्तरणतृणाधानाभिमन्त्रिताम्नासवप्रदानेषु कर्मस्वस्य सूक्तस्य विनियोगः। तथा सर्वसंपत्कर्मस्वप्यस्य सूक्तस्य विनियोग। (तथा वर्चस्यकर्मण्यनेन सूक्तेन वर्चस्काम औदुम्बर्यादीनि त्रीणि कुर्यात्। तथा च) वर्चस्कामायाः कुमार्या दक्षिणोरोरभिमन्त्रण त्रीतवपाहोमोऽम्न्युपस्थानमित्येतानि कर्माण्यनेन सूक्तेन तेजस्कामोऽनुतिष्ठेत्। तथा शत्रुहस्तित्रासनकर्माण्यप्यनेनैव सग्रामजयकामो राजा कारयेत्। तथा पञ्च निर्ऋतिकर्माणि शान्तिकपौष्टिकेषु सर्वत्राङ्गत्वेन वा पापक्षयार्थं स्वातन्त्र्येण वा कर्तव्यत्वेन सूत्रकारेणोक्तानि। तत्राद्ययो कर्मणो सपातिताभिमन्त्रितभक्तप्राशन आज्यहोमे चैतत् सूक्त विनियुक्तम्। तथा पौष्टिकविशेषे चित्राकर्मणि सपातितसारूपवत्सौदनप्राशनपलाशादिसमिदाधानरूपेऽस्य सूक्तस्य विनियोग.। तेजोव्रते चैतत् सूक्त विनियुक्तम्। तथा पौष्टिकमन्त्राणामुपधानोपस्थानयोर्विनियोगविधानेन तन्मध्यपातिनोऽस्य सूक्तस्य तत्रापि विनियोगः। (उपधान नामाज्यादित्रयोदशद्रव्यहोम.।) [तथा] सर्वव्याधिष्वनेन सूक्तेनाज्य हुत्वोदपात्र सपात्यानेनैव व्याधितशरीर समार्जयेत्। तथानेनैव

सूक्तेन पुत्रकामायाः स्त्रिया मृतापत्यायाश्च संपातितोदकावसेकं पुरोडाश-भक्षणं कन्दुकक्रीडनमलंकारधारणं वा कारयेत्। तथोपाकर्मणि माणवक-वाचने विनियुक्तम्। तथा राज्ञः पुष्पाभिषेके ये त्रिषप्ता इत्यृचा शाला-दिभूतया पयोहोमः कार्यः॥

तदेवमाथर्वणमन्त्राणां सिद्धमन्त्रत्वेनापरिमितवीर्यत्वप्रदर्शनार्थमादिम-सूक्तस्य विस्तरतः सर्वेषु कर्मसूपलक्षणत्वेन सूत्रकृता विनियोगोऽभ्यधायि। ततः सर्वेषां मन्त्राणामभिलषितसर्वफलसाधनत्वं प्रत्येतव्यम्॥

ॐ ये त्रिषप्ताः परियन्ति विश्वा रूपाणि बिभ्रतः।
वाचस्पतिर्बला तेषां तन्वो अद्य दधातु मे॥ १॥

पुनरेहि वाचस्पते देवेन मनसा सह।
वसोष्पते नि रमय मय्येवास्तु मयि श्रुतम्॥ २॥

इहैवाभि वि तनूभे आर्त्नी इव ज्यया।
वाचस्पतिर्नि यच्छतु मय्येवास्तु मयि श्रुतम्॥ ३॥

उपहूतो वाचस्पतिरुपास्मान् वाचस्पतिर्ह्वयताम्।
सं श्रुतेन गमेमहि मा श्रुतेन वि राधिषि॥ ४॥

———०———

## ४१

### का. १. सू. ३२

[ ऋषिर्ब्रह्मा । द्यावापृथिवीयम् । आनुष्टुभम् । द्वितीया ककुम्मती ।। ]

इदं जनास इति सूक्तेन वन्ध्यायाः पुत्रप्रजननकर्मणि तस्याः शान्त्यौषधिसहितोदकाभिषेकं पुरोडाशकन्दुकालंकारप्रदानं च कुर्यात् । तथानेन सूक्तेन पुष्टिकामः संपत्कामो वा द्यावापृथिव्योर्यागमुपस्थानं वा कुर्यात् । अस्याद्या दर्शपूर्णमासयोः पत्न्यञ्जला उदपात्रनिनयने विनियुक्ता ।।

इदं जनासो विदथ महद् ब्रह्म वदिष्यति ।
न तत् पृथिव्यां नो दिवि येन प्राणन्ति वीरुधः ।। १ ।।

अन्तरिक्ष आसां स्थाम श्रान्तसदामिव ।
आस्थानमस्य भूतस्य विदुष्टद्वेधसो न वा ।। २ ।।

यद्रोदसी रेजमाने भूमिश्च निरतक्षतम् ।
आर्द्रं तदद्य सर्वदा समुद्रस्येव स्रोत्याः ।। ३ ।।

विश्वमन्यामभीवार तदन्यस्यामधिश्रितम् ।
दिवे च विश्ववेदसे पृथिव्यै चाकरं नमः ।। ४ ।।

---

## ४२

### का. २. सू. १

[ऋषिर्वेनः। ब्रह्मात्मदैवतम्। त्रैष्टुभम्। तृतीया जगती॥]

वेनस्तत् इत्यस्याभिमतफलसिद्धयसिद्धिविज्ञानकर्मसु विनियोगः। ...अत्र स नः पिता जनिता (३) इत्यस्या ऋचोऽग्निचयने षोडश-गृहीतोत्तरार्धाज्येन वैदवकर्मणहोमे विनियोगः॥

वेनस्तत् पश्यत् परमं गुहा यद् यत्र विश्वं भवत्येकरूपम्।
इदं पृश्निरदुहज्जायमानाः स्वर्विदो अभ्यनूषत व्राः॥ १॥

प्र तद् वोचेदमृतस्य विद्वान् गन्धर्वो धाम परमं गुहा यत्।
त्रीणि पदानि निहिता गुहास्य यस्तानि वेद स पितुष्पितासत्॥ २॥

स नः पिता जनिता स उत बन्धुर्धामानि वेद भुवनानि विश्वा।
यो देवानां नामध एक एव तं संप्रश्नं भुवना यन्ति सर्वा॥ ३॥

परि द्यावापृथिवी सद्य आयमुपातिष्ठे प्रथमजामृतस्य।
वाचमिव वक्तरि भुवनेष्ठा धास्युरेष नन्वेष्यो अग्निः॥ ४॥

परि विश्वा भुवनान्यायमृतस्य तन्तुं विततं दृशे कम् ।
यत्र देवा अमृतमानशानाः समाने योनावध्यैरयन्त ॥ ५ ॥

---

४३

का. २. सू. १२

[ऋषिर्भरद्वाजः । अष्टर्चम् । नानादेवत्यम् । त्रैष्टुभम् । द्वितीया जगती, सप्तम्यष्टमी चानुष्टुभौ ॥]

द्यावापृथिवी उरु इति सूक्तेनाभिचारकर्मणि दीक्षार्थं वेणुदण्डं वृश्चति । तथानेनैव सूक्तेन द्वेष्यनिषूदनकर्मणि दक्षिणाभिमुखं धावतः शत्रोः पदेषु वृक्षपत्राणि प्रक्षिप्य परशुना छित्वा सपांसून् पर्णच्छेदान् वधकपात्रे प्रक्षिप्यानीय भ्राष्ट्रे भर्जयेत् ॥

द्यावापृथिवी उर्व१न्तरिक्षं क्षेत्रस्य पत्न्युरुगायोऽद्भुतः ।
उतान्तरिक्षमुरु वातगोपं त इह तप्यन्तां मयि तप्यमाने ॥ १ ॥

इदं देवाः शृणुत ये यज्ञिया स्थ भरद्वाजो मह्यमुक्थानि शंसति ।
पाशे स बद्धो दुरिते नि युज्यतां यो अस्माकं मन इदं
हिनस्ति ॥ २ ॥

इदमिन्द्र शृणुहि सोमप यत् त्वा हृदा शोचता जोहवीमि ।

वृश्चामि तं कुलिशेनेव वृक्षं यो अस्माकं मन इदं हिनस्ति ॥ ३ ॥

अशीतिभिस्तिसृभिः सामगेभिरादित्येभिर्वसुभिरङ्गिरोभिः ।

इष्टापूर्तमवतु नः पितॄणामामुं ददे हरसा दैव्येन ॥ ४ ॥

द्यावापृथिवी अनु मा दीधीथां विश्वे देवासो अनु मा रभध्वम् ।

अङ्गिरसः पितरः सोम्यासः पापमार्छत्वपकामस्य कर्ता ॥ ५ ॥

अतीव यो मरुतो मन्यते नो ब्रह्म वा यो निन्दिषत् क्रियमाणम् ।

तपूंषि तस्मै वृजिनानि सन्तु ब्रह्मद्विषं द्यौरभिसंतपाति ॥ ६ ॥

सप्त प्राणानष्टौ मन्यस्तांस्ते वृश्चामि ब्रह्मणा ।

अया यमस्य सादनमग्निदूतो अरंकृतः ॥ ७ ॥

आ दधामि ते पदं समिद्धे जातवेदसि ।

अग्निः शरीरं वेवेष्ट्वसुं वागपि गच्छतु ॥ ८ ॥

---

४४

का. २. सू. ३६

[ पतिवेदन सूक्तम् । अष्टर्चम् । आग्नीषोमीयम् । त्रैष्टुभम् । प्रथमा भुरिक्, द्वितीया पञ्चम्याद्याः सप्तम्यन्ताश्चानुष्टुभः । अष्टमी निचृत्पुर-उष्णिक् ॥ ]

आ नो अग्ने इति सूक्तेन पतिलाभकर्मण्यागमकृसरं संपात्य कुमारीमाशयेत् । [ एवविधान्यकर्मस्वप्यस्य सूक्तस्य विनियोगः ]॥

आ नो॑ अग्ने सुम॒तिं सं॑भ॒लो ग॑मेदि॒मां कु॑मा॒रीं स॒ह नो॒ भगे॑न ।
जु॒ष्टा व॒रेषु॒ सम॑नेषु व॒ल्गुरो॒षं पत्या॒ सौभ॑गमस्त्व॒स्यै ॥ १ ॥

सोम॑जुष्टं ब्र॒ह्मजु॑ष्टमर्य॒म्णा संभृ॑तं॒ भग॑म् ।
धा॒तुर्दे॒वस्य॑ स॒त्येन॑ कृणोमि॒ पति॒वेद॑नम् ॥ २ ॥

इ॒यम॑ग्ने॒ नारी॒ पतिं॑ विदेष्ट॒ सोमो॒ हि राजा॑ सु॒भगां॑ कृ॒णोति॑ ।
सुवा॑ना पु॒त्रान् महि॑षी भवाति ग॒त्वा पतिं॑ सु॒भगा॒ वि रा॑जतु ॥ ३ ॥

यथा॑ख॒रो म॑घवं॒श्चारु॑रे॒ष प्रि॒यो मृ॒गाणां॑ सु॒षदा॑ ब॒भूव॑ ।
ए॒वा भग॑स्य जु॒ष्टेय॑मस्तु॒ नारी॒ संप्रि॑या॒ पत्या॒विरा॑धयन्ती ॥ ४ ॥

भगस्य नावमा रोह पूर्णामनुपदस्वतीम् ।
तयोपप्रतारय यो वरः प्रतिकाम्य: ॥ ५ ॥

आ क्रन्दय धनपते वरमाममसं कृणु ।
सर्वं प्रदक्षिणं कृणु यो वरः प्रतिकाम्य: ॥ ६ ॥

इदं हिरण्यं गुल्गुल्वयमौक्षो अथो भगः ।
एते पतिभ्यस्त्वामदुः प्रतिकामाय वेत्तवे ॥ ७ ॥

आ ते नयतु सविता नयतु पतिर्यः प्रतिकाम्य: ।
त्वमस्यै धेह्योपधे ॥ ८ ॥

---

४५

का. ३. सू. ३

[ऋषिरथर्वा। नानादेवत्यमुताग्नेयम्। त्रैष्टुभम्। तृतीया चतुष्पदा भुरिक्पङ्क्ति, पञ्चमी षष्ठी चानुष्टुभौ॥]

अचिक्रदत् इति सूक्तेन शत्रूत्सादितस्य राज्ञः पुनः स्वराष्ट्रप्रवेशार्थं शत्रुसेनाकारं पुरोडाशमुदकेषु दर्भान् सस्तीर्य तत्र निनयेत्। ततो निमज्जनार्थं तं पुरोडाशं लोष्टेन पूरयेत्। तथानेन सूक्तेन स्वराष्ट्रप्रवेशार्थं

क्षीरोदनं संपात्याभिमन्त्र्य राजानमाशयेत्। अत्र अचिक्रदत् (१) इत्यस्य साकमेधाख्यपर्वणि पूर्वेद्युः क्रियमाणायामाग्नेय्यामिष्ट्या प्रधानयागानुमन्त्रणे विनियोगः॥

अचिक्रदत् स्वपा इह भुवदग्ने व्यचस्व रोदसी उरूची ।
युञ्जन्तु त्वा मरुतो विश्ववेदस आमुं नय नमसा रातहव्यम्
॥ १ ॥

दूरे चित् सन्तमरुषास इन्द्रमा च्यावयन्तु सख्याय विप्रम् ।
यद् गायत्रीं बृहतीमर्कमस्मै सौत्रामण्या दधृषन्त देवाः ॥ २ ॥

अद्भ्यस्त्वा राजा वरुणो ह्वयतु सोमस्त्वा ह्वयतु पर्वतेभ्यः ।
इन्द्रस्त्वा ह्वयतु विड्भ्य आभ्यः श्येनो भूत्वा विश आ
पतेमाः ॥ ३ ॥

श्येनो हव्यं नयत्वा परस्मादन्यक्षेत्रे अपरुद्धं चरन्तम् ।
अश्विना पन्थां कृणुतां सुगं त इमं सजाता अभिसंविशध्वम्
॥ ४ ॥

ह्वयन्तु त्वा प्रतिजनाः प्रति मित्रा अवृषत ।

इन्द्राग्नी विश्वे देवास्ते विशि क्षेममदीधरन् ॥ ५ ॥

यस्ते हवं विवदत् सजातो यश्च निष्ट्यः ।

अपाञ्चमिन्द्र तं कृत्वायेममिहाव गमय ॥ ६ ॥

---

४६

का. ३. सू. ४

[ ऋषिरथर्वा । ऐन्द्रम् । सप्तकम् । त्रैष्टुभम् । आद्या जगती, चतुर्थी-पञ्चम्यौ भुरिजौ ॥ ]

आ त्वा गन् इति सूक्तेन स्वराष्ट्रप्रवेशकर्मण्येव पूर्वसूक्तोक्तानि कर्माणि कुर्यात् । अत्र पथ्या रेवती (७) इत्येषा प्रायणीयेष्ट्या पथ्या-स्वस्तियागानुमन्त्रणे विनियुक्ता ॥

आ त्वा गन् राष्ट्रं सह वर्चसोदिहि प्राङ् विशां पतिरेकराट्

त्वं वि राज ।

सर्वास्त्वा राजन् प्रदिशो ह्वयन्तूपसद्यो नमस्यो भवेह ॥ १ ॥

त्वां विशो वृणतां राज्या॒य त्वामिमाः प्रदिशः पञ्च देवीः ।
वर्ष्मन् राष्ट्रस्य ककुदि श्रयस्व ततो न उग्रो वि भजा
वसूनि ॥ २ ॥

अच्छ त्वा यन्तु हविनः सजाता अग्निर्दूतो अजिरः सं चराते ।
जायाः पुत्राः सुमनसो भवन्तु बहुं बलिं प्रति पश्यासा
उग्रः ॥ ३ ॥

अश्विना त्वाग्रे मित्रावरुणोभा विश्वे देवा मरुतस्त्वा ह्वयन्तु ।
अधा मनो वसुदेयाय कृणुष्व ततो न उग्रो वि भजा
वसूनि ॥ ४ ॥

आ प्र द्रव परमस्याः परावतः शिवे ते द्यावापृथिवी उभे स्ताम् ।
तदयं राजा वरुणस्तथाह स त्वायमह्वत् स उपेदमेहि ॥ ५ ॥

इन्द्रेन्द्र मनुष्या३ः परेहि सं ह्यज्ञास्था वरुणैः संविदानः ।
स त्वायमह्वत् स्वे सधस्थे स देवान् यक्षत् स उ कल्पयाद्
विशः ॥ ६ ॥

पथ्या रेवतीर्बहुधा विरूपाः सर्वाः संगत्य वरीयस्ते अक्रन् ।

तास्त्वा सर्वाः संविदाना ह्वयन्तु दशमीमुग्रः सुमना वशेह ॥ ७ ॥

---

## ४७

### का. ३. सू. १५

[ऋषिरथर्वा (पण्यकामः)। अष्टर्चम्। वैश्वदेवमुतैन्द्राग्नम्। त्रैष्टुभम्। आद्या भुरिक्, चतुर्थी त्र्यवसाना षट्पदा बृहतीगर्भा विराडत्यष्टिः, पञ्चमी विराड्जगती, सप्तम्यनुष्टुप्, अष्टमी निचृत्॥]

इन्द्रमहं वणिजम् इति वाणिज्यलाभार्थं विनियुज्यते। विक्रयार्थं पण्यानि विपणिं नयन् वणिक् कर्म वाणिज्यलाभार्थं कुर्यात्। तथानेनैव सूक्तेन पण्यकाम इन्द्रं यजते, उपतिष्ठते वा। तथा क्रव्याच्छमने कर्मणि विश्वाहा ते (८) इत्यृचा पूर्णाहुतिं जुहोति॥

इन्द्रमहं वणिजं चोदयामि स न ऐतु पुरएता नो अस्तु ।

नुदन्नरातिं परिपन्थिनं मृगं स ईशानो धनदा अस्तु मह्यम् ॥ १ ॥

ये पन्थानो बहवो देवयाना अन्तरा द्यावापृथिवी संचरन्ति ।

ते मा जुषन्तां पयसा घृतेन यथा क्रीत्वा धनमाहराणि ॥ २ ॥

इध्मेनाग्न इच्छमानो घृतेन जुहोमि हव्यं तरसे बलाय ।
यावदीशे ब्रह्मणा वन्दमान इमां धियं शतसेयाय देवीम् ॥ ३ ॥

इमामग्ने शरणिं मीमृषो नो यमध्वानमगाम दूरम् ।
शुनं नो अस्तु प्रपणो विक्रयश्च प्रतिपणः फलिनं मा कृणोतु ।
इदं हव्यं संविदानौ जुषेथां शुनं नो अस्तु चरितमुत्थितं च ॥ ४ ॥

येन धनेन प्रपणं चरामि धनेन देवा धनमिच्छमानः ।
तन्मे भूयो भवतु मा कनीयोऽग्ने सातघ्नो देवान् हविषा नि षेध ॥ ५ ॥

येन धनेन प्रपणं चरामि धनेन देवा धनमिच्छमानः ।
तस्मिन् म इन्द्रो रुचिमा दधातु प्रजापतिः सविता सोमो अग्निः ॥ ६ ॥

उप त्वा नमसा वयं होतर्वैश्वानर स्तुमः ।
स नः प्रजास्वात्मसु गोषु प्राणेषु जागृहि ॥ ७ ॥

विश्वाहा ते सदमिद्भरेमाश्वायेव तिष्ठते जातवेदः ।

रायस्पोषेण समिषा मदन्तो मा ते अग्ने प्रतिवेशा रिषाम

॥ ८ ॥

---

४८

का. ३. सू. ३०

[ऋषिरथर्वा । सप्तर्चम् । चान्द्रमसम् । सामनस्यम् । आनुष्टुभम् । पञ्चमी विराड्जगती, षष्ठी प्रस्तारपङ्क्तिः, सप्तमी त्रिष्टुभ् ॥]

सहृदयं सांमनस्यम् इति सूक्तेन सामनस्यकर्मणि ग्राममध्ये संपातितोदकुम्भनिनयनं, तद्वत् सुराकुम्भनिनयनं, त्रिवर्षवत्सिकाया गोः पिशितानां प्राशनं, संपातितान्नप्राशनं, संपातितसुरायाः पायनं, तथाविधप्रपोदकपायनं च कुर्यात् । तथोपाकर्मण्यप्याज्यहोमेऽस्य सूक्तस्य विनियोगः ॥

सहृदयं सांमनस्यमविद्वेषं कृणोमि वः ।

अन्यो अन्यमभि हर्यत वत्सं जातमिवाघ्न्या ॥ १ ॥

अनुव्रतः पितुः पुत्रो मात्रा भवतु संमनाः ।

जाया पत्ये मधुमतीं वाचं वदतु शन्तिवाम् ॥ २ ॥

मा भ्राता भ्रातरं द्विक्षन्मा स्वसारमुत स्वसा ।

सम्यञ्चः सव्रता भूत्वा वाचं वदत भद्रया ॥ ३ ॥

येन देवा न वियन्ति नो च विद्विषते मिथः ।
तत् कृण्मो ब्रह्म वो गृहे संज्ञानं पुरुषेभ्यः ॥ ४ ॥

ज्यायस्वन्तश्चित्तिनो मा वि यौष्ट संराधयन्तः सधुराश्चरन्तः ।
अन्यो अन्यस्मै वल्गु वदन्त एत सध्रीचीनान् वः संमनस-
स्कृणोमि ॥ ५ ॥

समानी प्रपा सह वोऽन्नभागः समाने योक्त्रे सह वो युनज्मि ।
सम्यञ्चोऽग्निं सपर्यतारा नाभिमिवाभितः ॥ ६ ॥

सध्रीचीनान् वः संमनसस्कृणोम्येकश्नुष्टीन्त्संवननेन सर्वान् ।
देवा इवामृतं रक्षमाणाः सायंप्रातः सौमनसो वो अस्तु ॥७॥

---

## ४९

का. ४. सू. ८

[ ऋषिरथर्वाङ्गिरा । राज्याभिषेकम् । चान्द्रमसमाप्यम् । आनुष्टुभम् । आद्या सप्तमी च भुरिक्त्रिष्टुभौ, तृतीया त्रिष्टुभ्, पञ्चमी विराट् प्रस्तारपङ्क्तिः ॥ ]

भूतो भूतेषु इति सूक्तेन महति लघौ वा राजाभिषेककर्मणि शान्त्युदककलशेनोदपात्रेण चाभिषेकं जपं च पुरोहितः कुर्यात् । तथा सपातित-

स्थालीपाकप्राशनमभिमन्त्रितमश्वमारोह्यापराजितदिशं प्रति गमनं च कारयेत्। तथा राजसूय आसन्द्यारोहणे राजाभिषेके चैतत् सूक्तम्।।

भूतो भूतेषु पय आ दधाति स भूतानामधिपतिर्बभूव ।
तस्य मृत्युश्चरति राजसूयं स राजा राज्यमनु मन्यतामिदम्
।। १ ।।

अभि प्रेहि माप वेन उग्रश्चेत्ता सपत्नहा ।
आ तिष्ठ मित्रवर्धन तुभ्यं देवा अधि ब्रुवन् ।। २ ।।

आतिष्ठन्तं परि विश्वे अभूषंछ्रियं वसानश्चरति स्वरोचिः ।
महत् तद् वृष्णो असुरस्य नामा विश्वरूपो अमृतानि तस्थौ
।। ३ ।।

व्याघ्रो अधि वैयाघ्रे वि क्रमस्व दिशो महीः ।
विशस्त्वा सर्वा वाञ्छन्त्वापो दिव्याः पयस्वतीः ।। ४ ।।

या आपो दिव्याः पयसा मदन्त्यन्तरिक्ष उत वा पृथिव्याम् ।
तासां त्वा सर्वासामपामभि षिञ्चामि वर्चसा ।। ५ ।।

अभि त्वा वर्चसासिचन्नापो दिव्याः पयस्वतीः ।
यथासो मित्रवर्धनस्तथा त्वा सविता करत् ॥ ६ ॥

एना व्याघ्रं परिषस्वजानाः सिंहं हिन्वन्ति महते सौभगाय ।
समुद्रं न सुभुवस्तस्थिवांसं मर्मृज्यन्ते द्वीपिनमप्स्व१न्तः ॥ ७ ॥

---

५०

का. ४. सू. १६

[ऋषिर्ब्रह्मा। नवर्चम्। सत्यानृतानुवीक्षणसूक्तम्। वारुणम्। त्रैष्टुभम्। आद्यानुष्टुप्, पञ्चमी भुरिक्, सप्तमी जगती, अष्टमी त्रिपदा महाबृहती, नवमी विराण्नामत्रिपाद्गायत्री॥]

तत्र बृहन्नेषाम् इति सूक्तेनाभिचारकर्मणि शत्रुं क्रोशन्तमनुब्रूयात्। धूमकेतूत्पातशान्तौ वारुणपशुप्रयोगे उतेयं भूमिः (३) इत्येषा॥

बृहन्नेषामधिष्ठाता अन्तिकादिव पश्यति ।
यस्तायन्मन्यते चरन्त्सर्वं देवा इदं विदुः ॥ १ ॥

यस्तिष्ठति चरति यश्च वञ्चति यो निलायं चरति यः प्रतङ्कम् ।
द्वौ संनिषद्य यन्मन्त्रयेते राजा तद् वेद वरुणस्तृतीयः ॥ २ ॥

उतेयं भूमिर्वरुणस्य राज्ञ उतासौ द्यौर्बृहती दूरेअन्ता ।
उतो समुद्रौ वरुणस्य कुक्षी उतास्मिन्नल्प उदके निलीनः ॥ ३ ॥

उत यो द्यामतिसर्पात् परस्तान्न स मुच्यातै वरुणस्य राज्ञः ।
दिव स्पशः प्र चरन्तीदमस्य सहस्राक्षा अति पश्यन्ति
भूमिम् ॥ ४ ॥

सर्वं तद् राजा वरुणो वि चष्टे यदन्तरा रोदसी यत् परस्तात् ।
संख्याता अस्य निमिषो जनानामक्षानिव श्वघ्नी नि मिनोति
तानि ॥ ५ ॥

ये ते पाशा वरुण सप्तसप्त त्रेधा तिष्ठन्ति विषिता रुशन्तः ।
छिनन्तु सर्वे अनृतं वदन्तं यः सत्यवाद्यति तं सृजन्तु ॥ ६ ॥

शतेन पाशैरभि धेहि वरुणैनं मा ते मोच्यनृतवाङ् नृचक्षः ।
आस्तां जाल्म उदरं श्रंशयित्वा कोश इवाबन्धः परिकृत्य-
मानः ॥ ७ ॥

यः समाम्यो३ वरुणो यो व्याम्यो३ यः संदेश्यो३ वरुणो यो
विदेश्यः ।
यो दैवो वरुणो यश्च मानुषः ॥ ८ ॥
तैस्त्वा सर्वैरभि ष्यामि पाशैरसावामुष्यायणामुष्याः पुत्र ।
तानु ते सर्वाननुसंदिशामि ॥ ९ ॥

---

## ५१

### का. ५. सू. ११

[ऋषिरथर्वा । एकादशर्चम् । वारुणम् । त्रैष्टुभम् । आद्या भुरिक्, तृतीया पङ्क्तिः, षष्ठी पञ्चपदातिशक्वरी, एकादशी त्र्यवसाना षट्पदात्यष्टिः ॥]

सर्वसंपत्कर्मसु कथं महे इति सूक्तेन मादानककाष्ठभृतं क्षीरौदनं संपात्याभिमन्त्र्याश्नाति । तथा तत्रैवानेन सूक्तेन चमसे सरूपवत्साया दुग्धे व्रीहियवाववधाय मूर्छयित्वा [=चूर्णीकृत्वा] मध्वासिच्य संपात्याभिमन्त्र्याशयति ॥

[अथर्वा—]

कथं महे असुरायाब्रवीरिह कथं पित्रे हरये त्वेषनृम्णः ।
पृश्निं वरुण दक्षिणां ददावान् पुनर्मघ त्वं मनसा-
चिकित्सीः ॥ १ ॥

[ वरुणः— ]

न कामेन पुनर्मघो भवामि सं चक्षे कं पृश्निमेतामुपाजे ।
केन नु त्वमथर्वन् काव्येन केन जातेनासि जातवेदाः ॥ २ ॥

*सत्यमहं गभीरः काव्येन सत्यं जातेनास्मि जातवेदाः ।
न मे दासो नार्यो महित्वा व्रतं मीमाय यदहं धरिष्ये ॥ ३ ॥

[ अथर्वा— ]

न त्वदन्यः कवितरो न मेधया धीरतरो वरुण स्वधावन् ।
त्वं ता विश्वा भुवनानि वेत्थ स चिन्नु त्वज्जनो मायी बिभाय ॥ ४ ॥

त्वं ह्य१ङ्ग वरुण स्वधावन् विश्वा वेत्थ जनिमा सुप्रणीते ।
किं रजस एना परो अन्यदस्त्येना किं परेणावरममुर ॥ ५ ॥

---

* इमामृचमथर्वा वक्तीति स्मृरादय । वरुण इति रोथ ॥

*एकं रजस एना परो अन्यदस्त्येना पर एकेन दुर्णशं चिदर्वाक् ।
तत् ते विद्वान् वरुण प्र ब्रवीम्यधोवचसः पणयो भवन्तु
नीचैर्दासा उप सर्पन्तु भूमिम् ॥ ६ ॥

त्वं ह्यङ्ग वरुण ब्रवीषि पुनर्मघेष्ववद्यानि भूरि ।
मो षु पणीँरभ्ये३तावतो भून् मा त्वा वोचन्नराधसं जनासः ॥ ७ ॥

[ वरुणः— ]

मा मा वोचन्नराधसं जनासः पुनस्ते पृश्निं जरितर्ददामि ।
स्तोत्रं मे विश्वमा याहि शचीभिरन्तर्विश्वासु मानुषीषु दिक्षु ॥ ८ ॥

[ अथर्वा — ]

आ ते स्तोत्राण्युद्यतानि यन्त्वन्तर्विश्वासु मानुषीषु दिक्षु ।
देहि नु मे यन्मे अदत्तो असि युज्यो मे सप्तपदः सखासि ॥ ९ ॥

---

* इमामृचं वरुणो वक्तीति रॉथादय.। 'वरुण' इत्यस्य स्थाने 'वरुणः' इति पाठं कल्पयन्ति ॥

समा नौ बन्धुर्वरुण समा जा वेदाहं तद्यन्नावेषा समा जा ।

[ वरुणः— ]

ददामि तद् यत् ते अदत्तो अस्मि युज्यस्ते सप्तपदः सखास्मि ॥ १० ॥

देवो देवाय गृणते वयोधा विप्रो विप्राय स्तुवते सुमेधाः ।

[ ऋषिः— ]

अजीजनो हि वरुण स्वधावन्नथर्वाणं पितरं देवबन्धुम् ।

तस्मा उ राधः कृणुहि सुप्रशस्तं सखा नो असि परमं च बन्धुः ॥ ११ ॥

---

## ५२

का. ५. सू. २४

[ ऋषिरथर्वा । सप्तदशकम् । ब्रह्मकर्म । आत्मदेवत्यम् । अतिशाक्वरम् ॥ ]

पौरोहित्य करिष्यन् सविता प्रसवानाम् इति सूक्तेन शूद्रेणाहृताः समिध आदधाति । तथास्य सूक्तस्य विवाह आज्यहोमे विनियोगः । तथा चातुर्मास्ये वैश्वदेवपर्वणि सावित्र यामं सविता प्रसवानाम् इति ब्रह्मानुमन्त्रयेत ॥

सविता प्रसवानामधिपतिः स मावतु ।

अस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां पुरोधायामस्यां प्रतिष्ठायामस्यां चित्त्यामस्यामाकूत्यामस्यामाशिष्यस्यां देवहूत्यां स्वाहा ॥ १ ॥

अग्निर्वनस्पतीनामधिपतिः स ०।० ॥ २ ॥

द्यावापृथिवी दातॄणामधिपत्नी ते मावताम् ।० ॥ ३ ॥

वरुणोऽपामधिपतिः स मावतु ।० ॥ ४ ॥

मित्रावरुणौ वृष्ट्याधिपती तौ मावताम् ।० ॥ ५ ॥

मरुतः पर्वतानामधिपतयस्ते मावन्तु ।० ॥ ६ ॥

सोमो वीरुधामधिपतिः स मावतु ।० ॥ ७ ॥

वायुरन्तरिक्षस्याधिपतिः स ०।० ॥ ८ ॥

सूर्यश्चक्षुषामधिपतिः स ०।० ॥ ९ ॥

चन्द्रमा नक्षत्राणामधिपतिः स ०।० ॥ १० ॥

इन्द्रो दिवोऽधिपतिः स ०।० ॥ ११ ॥

मरुतां पिता पशूनामधिपतिः स ०।० ॥ १२ ॥

मृत्युः प्रजानामधिपतिः स ०।० ॥ १३ ॥

यमः पितृणामधिपतिः स ०।० ॥ १४ ॥

पितरः परे ते मावन्तु ।० ॥ १५ ॥

तता अवरे ते ०।० ॥ १६ ॥

ततस्ततामहास्ते मावन्तु ।

अस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां पुरोधायामस्यां प्रतिष्ठायामस्यां

चित्यामस्यामाकूत्यामस्यामाशिष्यस्यां देवहूत्यां स्वाहा ॥ १७ ॥

---

५३

का. ६. सू. ७८

[ ऋषिरथर्वा। प्रथमाद्वितीये चान्द्रमस्यौ, तृतीया त्वाष्ट्री। आनुष्टभम् ॥ ]

तेन भूतेन इति तृचेन विवाह आज्यं हुत्वा वरवध्वोर्मूर्ध्नि संपातानानयेत्। तथा तत्रैव कर्मणि तेनैव तृचेन रसान् स्थालीपाकं च संपात्या-

भिमन्त्र्य भोजनसमये जायापती प्राशयेत्। तथा तस्मिन्नेव कर्मण्यनेन तृचेनाज्यमिश्रैर्यवैरञ्जलिं परिपूर्य जुहुयात्॥

तेन भूतेन हविषायमा प्यायतां पुनः ।

जायां यामस्मा आवाक्षुस्तां रसेनाभि वर्धताम् ॥ १ ॥

अभि वर्धतां पयसाभि राष्ट्रेण वर्धताम् ।

रय्या सहस्रवर्चसेमौ स्तामनुपक्षितौ ॥ २ ॥

त्वष्टा जायामजनयत् त्वष्टास्यै त्वां पतिम् ।

त्वष्टा सहस्रमायूंषि दीर्घमायुः कृणोतु वाम् ॥ ३ ॥

---

## ५४

का. ७. सू. १

[ ऋषिरथर्वा (ब्रह्मवर्चसकाम)। द्व्यृचम्। आत्मदेवत्यम्। त्रैष्टुभम्। द्वितीया विराड् जगती॥ ]

धीती वा ये इति द्वाभ्यामृग्भ्यामर्थोत्थापनविघ्नशमनकर्मण्याज्यमित्पुरोडाशादिशष्कुल्यन्तानां त्रयोदशानां द्रव्याणामन्यतमं जुहुयाज् जपेद् वा। तथा सर्वफलकाम् आभ्यामृग्भ्यामिन्द्राग्नी यजते उपतिष्ठते वा॥

धीती वा ये अनयन् वाचो अग्रं मनसा वा येऽवदन्नृतानि ।

तृतीयेन ब्रह्मणा वावृधानास्तुरीयेणामन्वत नाम धेनोः ॥ १ ॥

स वेद पुत्रः पितरं स मातरं स सूनुर्भुवत् स भुवत् पुनर्मघः ।

स द्यामौर्णोदन्तरिक्षं स्व१ः स इदं विश्वमभवत् स आभवत्

॥ २ ॥

---

५५

का. १०. सू. ८

[ ऋषि. कुत्स । चतुश्चत्वारिंशत् । अध्यात्मदेवत्यम् । त्रैष्टुभम् । १ उपरिष्टाद्विराड्बृहती, २ बृहतीगर्भानुष्टुप्, ५ भुरिगनुष्टुप्; ६, १४, १९–२१, २३, २५, २९, ३१–३४, ३७–३८, ४१, ४३ अनुष्टुभः; ७ परावृहती; १० अनुष्टुब्गर्भा; ११ जगती; १२ पुरोबृहती त्रिष्टुब्गर्भार्षी पङ्क्ति , १५, २७ भुरिग्बृहत्यौ; २२ पुरउष्णिक्, २६ द्व्युष्णिगगर्भानुष्टुप्; ३० भुरिक्; ३९ बृहतीगर्भा; ४२ विराड् गायत्री ॥]

यो भूतम् इति सूक्त स्कम्भदेवताकम्। अत्र स्कम्भस्य ज्येष्ठत्वं श्रेष्ठत्वं सर्वेषामाश्रयभतत्वं च दृश्यते ॥

यो भूतं च भव्यं च सर्वं यश्चाधितिष्ठति ।

स्व१र्यस्य च केवलं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥ १ ॥

स्कम्भेनेमे विष्टभिते द्यौश्च भूमिश्च तिष्ठतः ।
स्कम्भ इदं सर्वमात्मन्वद् यत् प्राणन्निमिषच्च यत् ॥ २ ॥

तिस्रो ह प्रजा अत्यायमायन् न्य१न्या अर्कमभितोऽविशन्त ।
बृहन् ह तस्थौ रजसो विमानो हरितो हरिणीरा विवेश ॥ ३ ॥

द्वादश प्रधयश्चक्रमेकं त्रीणि नभ्यानि क उ तच्चिकेत ।
तत्राहतास्त्रीणि शतानि शङ्कवः षष्टिश्च खीला अविचाचला ये ॥ ४ ॥

इदं सवितर्वि जानीहि षड् यमा एक एकजः ।
तस्मिन् हापित्वमिच्छन्ते य एषामेक एकजः ॥ ५ ॥

आविः सन्निहितं गुहा जरन्नाम महत् पदम् ।
तत्रेदं सर्वमार्पितमेजत् प्राणत् प्रतिष्ठितम् ॥ ६ ॥

एकचक्रं वर्तत एकनेमि सहस्राक्षरं प्र पुरो नि पश्चा ।
अर्धेन विश्वं भुवनं जजान यदस्यार्धं क्व१ तद् बभूव ॥ ७ ॥

पञ्चवाहो वहत्यग्रमेषां प्रष्टयो युक्ता अनुसंवहन्ति ।
अयातमस्य ददृशे न यातं परं नेदीयोऽवरं दवीयः ॥ ८ ॥

तिर्यग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन् यशो निहितं विश्वरूपम् ।
तदासत ऋषयः सप्त साकं ये अस्य गोपा महतो बभूवुः ॥ ९ ॥

या पुरस्ताद् युज्यते या च पश्चाद् या विश्वतो युज्यते या च सर्वतः ।
यया यज्ञः प्राङ् तायते तां त्वा पृच्छामि कतमा सर्चाम् ॥ १० ॥

यदेजति पतति यच्च तिष्ठति प्राणदप्राणन्निमिषच्च यद् भुवत् ।
तद् दाधार पृथिवीं विश्वरूपं तत् संभूय भवत्येकमेव ॥ ११ ॥

अनन्तं विततं पुरुत्रानन्तमन्तवच्चा समन्ते ।
ते नाकपालश्चरति विचिन्वन् विद्वान् भूतमुत भव्यमस्य ॥ १२ ॥

प्रजापतिश्चरति गर्भे अन्तरदृश्यमानो बहुधा वि जायते ।
अर्धेन विश्वं भुवनं जजान यदस्यार्धं कतमः स केतुः ॥ १३ ॥

ऊर्ध्वं भरन्तमुदकं कुम्भेनेवोदहार्यम् ।
पश्यन्ति सर्वे चक्षुषा न सर्वे मनसा विदुः ॥ १४ ॥

दूरे पूर्णेन वसति दूर ऊनेन हीयते ।
महद् यक्षं भुवनस्य मध्ये तस्मै बलिं राष्ट्रभृतो भरन्ति ॥ १५ ॥

यतः सूर्य उदेत्यस्तं यत्र च गच्छति ।
तदेव मन्येऽहं ज्येष्ठं तदु नात्येति किं चन ॥ १६ ॥

ये अर्वाङ् मध्य उत वा पुराणं वेदं विद्वांसमभितो वदन्ति ।
आदित्यमेव ते परि वदन्ति सर्वे अग्निं द्वितीयं त्रिवृतं च
हंसम् ॥ १७ ॥

सहस्राह्ण्यं वियतावस्य पक्षौ हरेर्हंसस्य पततः स्वर्गम् ।
स देवान्त्सर्वानुरस्युपदद्य संपश्यन् याति भुवनानि विश्वा ॥ १८ ॥

सत्येनोर्ध्वस्तपति ब्रह्मणार्वाङ् वि पश्यति ।
प्राणेन तिर्यङ् प्राणति यस्मिन् ज्येष्ठमधि श्रितम् ॥ १९ ॥

यो वै ते विद्यादरणी याभ्यां निर्मथ्यते वसु ।
स विद्वान् ज्येष्ठं मन्येत स विद्याद् ब्राह्मणं महत् ॥ २० ॥

अपादग्रे समभवत् सो अग्रे स्व१रा भरत् ।
चतुष्पाद् भूत्वा भोग्यः सर्वमादत्त भोजनम् ॥ २१ ॥

भोग्यो भवदथो अन्नमदद् बहु ।
यो देवमुत्तरावन्तमुपासातै सनातनम् ॥ २२ ॥

सनातनमेनमाहुरुताद्य स्यात् पुनर्णवः ।
अहोरात्रे प्र जायेते अन्यो अन्यस्य रूपयोः ॥ २३ ॥

शतं सहस्रमयुतं न्यर्बुदमसंख्येयं स्वमस्मिन् निविष्टम् ।
तदस्य घ्नन्त्यभिपश्यत एव तस्माद् देवो रोचत एष
एतत् ॥ २४ ॥

बालादेकमणीयस्कमुतैकं नेव दृश्यते ।
ततः परिष्वजीयसी देवता सा मम प्रिया ॥ २५ ॥

इयं कल्याण्य१जरा मर्त्यस्यामृता गृहे ।
यस्मै कृता शये स यश्चकार जजार सः ॥ २६ ॥

त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी ।
त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः ॥ २७ ॥

उतैषां पितोत वा पुत्र एषामुतैषां ज्येष्ठ उत वा कनिष्ठः ।
एको ह देवो मनसि प्रविष्टः प्रथमो जातः स उ गर्भे अन्तः ॥ २८ ॥

पूर्णात् पूर्णमुदचति पूर्णं पूर्णेन सिच्यते ।
उतो तदद्य विद्याम यतस्तत् परिषिच्यते ॥ २९ ॥

एषा सनत्नी सनमेव जातैषा पुराणी परि सर्वं बभूव ।
मही देव्यु१षसो विभाती सैकेनैकेन मिषता वि चष्टे ॥ ३० ॥

अविर्वै नाम देवतर्तेनास्ते परीवृता ।
तस्या रूपेणेमे वृक्षा हरिता हरितस्रजः ॥ ३१ ॥

अन्ति सन्तं न जहात्यन्ति सन्तं न पश्यति ।
देवस्य पश्य काव्यं न ममार न जीर्यति ॥ ३२ ॥

अपूर्वेणेषिता वाचस्ता वदन्ति यथायथम् ।
वदन्तीर्यत्र गच्छन्ति तदाहुर्ब्राह्मणं महत् ॥ ३३ ॥

यत्र देवाश्च मनुष्या श्चारा नाभाविव श्रिताः ।
अपां त्वा पुष्पं पृच्छामि यत्र तन्मायया हितम् ॥ ३४ ॥

येभिर्वात इषितः प्रवाति ये ददन्ते पञ्च दिशः सध्रीचीः ।
य आहुतिमत्यमन्यन्त देवा अपां नेतारः कतमे त आसन्
॥ ३५ ॥

इमामेषां पृथिवीं वस्त एकोऽन्तरिक्षं पर्येको बभूव ।
दिवमेषां ददते यो विधर्ता विश्वा आशाः प्रति रक्षन्त्येके
॥ ३६ ॥

यो विद्यात् सूत्रं विततं यस्मिन्नोताः प्रजा इमाः ।
सूत्रं सूत्रस्य यो विद्यात् स विद्याद् ब्राह्मणं महत् ॥ ३७ ॥
वेदाहं सूत्रं विततं यस्मिन्नोताः प्रजा इमाः ।
सूत्रं सूत्रस्याहं वेदाथो यद् ब्राह्मणं महत् ॥ ३८ ॥
यदन्तरा द्यावापृथिवी अग्निरैत् प्रदहन् विश्वदाव्य॒ः ।
यत्रातिष्ठन्नेकपत्नीः परस्तात् क्वे॒वासीन्मातरिश्वा तदानीम्
॥ ३९ ॥
अप्स्व॒सीन्मातरिश्वा प्रविष्टः प्रविष्टा देवाः सलिलान्यासन् ।
बृहन् ह तस्थौ रजसो विमानः पवमानो हरित आ विवेश
॥ ४० ॥
उत्तरेणेव गायत्रीममृतेऽधि वि चक्रमे ।
साम्ना ये साम संविदुरजस्तद् ददृशे क्व॒ ॥ ४१ ॥
निवेशनः संगमनो वसूनां देव इव सविता सत्यधर्मा ।
इन्द्रो न तस्थौ समरे धनानाम् ॥ ४२ ॥

पुण्डरीकं नवद्वारं त्रिभिर्गुणेभिरावृतम् ।
तस्मिन् यद् यक्षमात्मन्वत् तद् वै ब्रह्मविदो विदुः ॥ ४३ ॥
अकामो धीरो अमृतः स्वयंभू रसेन तृप्तो न कुतश्चनोनः ।
तमेव विद्वान् न बिभाय मृत्योरात्मानं धीरमजरं युवानम् ॥ ४४ ॥

---

## ५६

### का. १२. सू. १

[ ऋषिरथर्वा । त्रिषष्टिर्भौमं त्रैष्टुभम् । २ भुरिक्; ४–६, १०, ३८ त्र्यवसानाः षट्पदा जगत्यः; ७ प्रस्तारपङ्क्ति ; ८, ११ त्र्यवसाने षट्पदे विराडष्टी, ९ परानुष्टुप्; १२, १३, १५ पञ्चपदाः शक्वर्यः (१२, १३ त्र्यवसाने); १४ महाबृहती; १६, २१ प्रथमावसाने साम्न्यौ त्रिष्टुभौ; १८ त्र्यवसाना षट्पदा त्रिष्टुबनुष्टुब्गर्भातिशक्वरी; १९, २० उरोबृहत्यौ (२० विराट्); २२ त्र्यवसाना षट्पदा विराडतिजगती; २३ पञ्चपदा विराडतिजगती; २४ पञ्चपदानुष्टुब्गर्भा जगती; २५ त्र्यवसाना सप्तपदा उष्णिगनुष्टुब्गर्भा शक्वरी; २६–२८, ३३, ३५, ३९, ४०, ५०, ५३, ५४, ५६, ५९, ६३ अनुष्टुभः (५३ पुरोबाहृता); ३० विराड् गायत्री; ३२ पुरस्ताज्ज्योतिः; ३४ त्र्यवसाना षट्पदा त्रिष्टुब्बृहतीगर्भातिजगती, ३६ विपरीतपादलक्ष्मीपङ्क्तिः; ३७ त्र्यवसाना पञ्चपदा शक्वरी; ४१ त्र्यवसाना षट्पदा ककुम्मती शक्वरी; ४२ स्वराडनुष्टुप्; ४३ विराडास्तारपङ्क्तिः; ४४, ४५, ४९ जगत्यः; ४६

षट्पदानुष्टुब्गर्भा पराशक्वरी; ४७ षट्पदा उष्णिगनुष्टुब्गर्भा परातिशक्वरी; ४८ पुरोऽनुष्टुप्; ५१ त्र्यवसाना षट्पदानुष्टुब्गर्भा ककुम्मती शक्वरी; ५२ पञ्चपदाऽनुष्टुब्गर्भा परातिजगती; ५७ पुरोऽतिजागता जगती; ५८ पुरस्ताद्बृहती; ६१ पुरोबार्हता; ६२ परा विराट् ॥ ]

पृथिवीसूक्तमेतत्। अस्मिन् पृथिव्याः प्रभूतं निसर्गवर्णनम्। संप्रदायानुसारेण तु सूक्तं बहुविधं विनियुज्यते। तद्यथा सत्यं बृहदित्यनुवाको वास्तोष्पत्यगणे पठितः। तथाग्रहायणीकर्मणि विनियुक्तम्। तथा ग्रामपत्तनादिरक्षार्थमनेनानुवाकेन चतुरह. पुरोडाशानभिमन्त्र्य ग्रामादिकोणेषु निखनति। तथा भूमिचलनेऽस्यानुवाकस्य होमे विनियोगः। तथा सोमयज्ञे दीक्षितनियमेषु मूत्रपुरीषशुद्ध्यर्थं लोष्ठादानेऽस्य विनियोगः। तथा पार्थिवी भूमिकामस्य इति [ नक्षत्रकल्पे १७ ] विहिताया पार्थिव्यां महाशान्ता अस्यानुवाकस्य विनियोग.॥

सत्यं बृहदृतमुग्रं दीक्षा तपो ब्रह्म यज्ञः पृथिवीं धारयन्ति ।
सा नो भूतस्य भव्यस्य पत्न्युरुं लोकं पृथिवी नः कृणोतु ॥ १ ॥

असंबाधं बध्यतो मानवानां यस्या उद्वतः प्रवतः समं बहु ।
नानावीर्या ओषधीर्या बिभर्ति पृथिवी नः प्रथतां राध्यतां नः ॥ २ ॥

यस्यां समुद्र उत सिन्धुरापो यस्यामन्नं कृष्टयः संबभूवुः ।
यस्यामिदं जिन्वति प्राणदेजत् सा नो भूमिः पूर्वपेये दधातु ॥ ३ ॥

यस्याश्चतस्रः प्रदिशः पृथिव्या यस्यामन्नं कृष्टयः संबभूवुः ।
या बिभर्ति बहुधा प्राणदेजत् सा नो भूमिर्गोष्वप्यन्ने दधातु ॥ ४ ॥

यस्यां पूर्वे पूर्वजना विचक्रिरे यस्यां देवा असुरानभ्यवर्तयन् ।
गवामश्वानां वयसश्च विष्ठा भगं वर्चः पृथिवी नो दधातु ॥ ५ ॥

विश्वंभरा वसुधानी प्रतिष्ठा हिरण्यवक्षा जगतो निवेशनी ।
वैश्वानरं बिभ्रती भूमिरग्निमिन्द्रऋषभा द्रविणे नो दधातु ॥ ६ ॥

यां रक्षन्त्यस्वप्ना विश्वदानीं देवा भूमिं पृथिवीमप्रमादम् ।
सा नो मधु प्रियं दुहामथो उक्षतु वर्चसा ॥ ७ ॥

यार्णवेऽधि सलिलमग्र आसीद् यां मायाभिरन्वचरन् मनीषिणः ।
यस्या हृदयं परमे व्योमन्त्सत्येनावृतममृतं पृथिव्याः ।
सा नो भूमिस्त्विषिं बलं राष्ट्रे दधातूत्तमे ॥ ८ ॥

यस्यामापः परिचराः समानीरहोरात्रे अप्रमादं क्षरन्ति ।
सा नो भूमिर्भूरिधारा पयो दुहामथो उक्षतु वर्चसा ॥ ९ ॥

यामश्विनावमिमातां विष्णुर्यस्यां विचक्रमे ।
इन्द्रो यां चक्र आत्मनेऽनमित्रां शचीपतिः ।
सा नो भूमिर्वि सृजतां माता पुत्राय मे पयः ॥ १० ॥

गिरयस्ते पर्वता हिमवन्तोऽरण्यं ते पृथिवि स्योनमस्तु ।
बभ्रुं कृष्णां रोहिणीं विश्वरूपां ध्रुवां भूमिं पृथिवीमिन्द्रगुप्ताम् ।
अजीतोऽहतो अक्षतोऽध्यष्ठां पृथिवीमहम् ॥ ११ ॥

यत् ते मध्यं पृथिवि यच्च नभ्यं यास्त ऊर्जस्तन्वः संबभूवुः ।
तासु नो धेह्यभि नः पवस्व माता भूमिः पुत्रो अहं पृथिव्याः ।
पर्जन्यः पिता स उ नः पिपर्तु ॥ १२ ॥

यस्यां वेदिं परिगृह्णन्ति भूम्यां यस्यां यज्ञं तन्वते विश्वकर्माणः ।
यस्यां मीयन्ते स्वरवः पृथिव्यामूर्ध्वाः शुक्रा आहुत्याः पुरस्तात् ।
सा नो भूमिर्वर्धयद् वर्धमाना ॥ १३ ॥

यो नो द्वेषत् पृथिवि यः पृतन्याद् योऽभिदासान्मनसा यो वधेन ।

तं नो भूमे रन्धय पूर्वकृत्वरि ॥ १४ ॥

त्वज्जातास्त्वयि चरन्ति मर्त्यास्त्वं बिभर्षि द्विपदस्त्वं चतुष्पदः ।

तवेमे पृथिवि पञ्च मानवा येभ्यो ज्योतिरमृतं मर्त्येभ्य

उद्यन्त्सूर्यो रश्मिभिरातनोति ॥ १५ ॥

ता नः प्रजाः सं दुह्रतां समग्रा वाचो मधु पृथिवि

धेहि मह्यम् ॥ १६ ॥

विश्वस्वं मातरमोषधीनां ध्रुवां भूमिं पृथिवीं धर्मणा धृताम् ।

शिवां स्योनामनु चरेम विश्वहा ॥ १७ ॥

महत् सधस्थं महती बभूविथ महान् वेग एजथुर्वेपथुष्टे ।

महांस्त्वेन्द्रो रक्षत्यप्रमादम् ।

सा नो भूमे प्र रोचय हिरण्यस्येव संदृशि मा नो द्विक्षत

कश्चन ॥ १८ ॥

अग्निर्भूम्यामोषधीष्वग्निमापो बिभ्रत्यग्निरश्मसु ।
अग्निरन्तः पुरुषेषु गोष्वश्वेष्वग्नयः ॥ १९ ॥
अग्निर्दिव आ तपत्यग्नेर्देवस्योर्व१न्तरिक्षम् ।
अग्निं मर्तास इन्धते हव्यवाहं घृतप्रियम् ॥ २० ॥
अग्निवासाः पृथिव्य सितज्ञूस्त्विषीमन्तं संशितं मा कृणोतु
॥ २१ ॥
भूम्यां देवेभ्यो ददति यज्ञं हव्यमरंकृतम् ।
भूम्यां मनुष्या जीवन्ति स्वधयान्नेन मर्त्याः ।
सा नो भूमिः प्राणमायुर्दधातु जरदष्टिं मा पृथिवी कृणोतु ॥ २२ ॥
यस्ते गन्धः पृथिवि संबभूव यं बिभ्रत्योषधयो यमापः ।
यं गन्धर्वा अप्सरसश्च भेजिरे तेन मा सुरभिं कृणु मा नो
द्विक्षत कश्चन ॥ २३ ॥
यस्ते गन्धः पुष्करमाविवेश यं संजभ्रुः सूर्याया विवाहे ।
अमर्त्याः पृथिवि गन्धमग्रे तेन मा सुरभिं कृणु मा नो
द्विक्षत कश्चन ॥ २४ ॥

यस्ते गन्धः पुरुषेषु स्त्रीषु पुंसु भगो रुचिः ।
यो अश्वेषु वीरेषु यो मृगेषूत हस्तिषु ।
कन्यायां वर्चो यद् भूमे तेनास्माँ अपि सं सृज मा नो
द्विक्षत कश्चन ॥ २५ ॥

शिला भूमिरश्मा पांसुः सा भूमिः संधृता धृता ।
तस्यै हिरण्यवक्षसे पृथिव्या अकरं नमः ॥ २६ ॥

यस्यां वृक्षा वानस्पत्या ध्रुवास्तिष्ठन्ति विश्वहा ।
पृथिवीं विश्वधायसं धृतामच्छावदामसि ॥ २७ ॥

उदीराणा उतासीनास्तिष्ठन्तः प्रक्रामन्तः ।
पद्भ्यां दक्षिण सव्याभ्यां मा व्यथिष्महि भूम्याम् ॥ २८ ॥

विमृग्वरीं पृथिवीमा वदामि क्षमां भूमिं ब्रह्मणा वावृधानाम् ।
ऊर्जं पुष्टं बिभ्रतीमन्नभागं घृतं त्वाभि नि षीदेम भूमे ॥ २९ ॥

शुद्धा न आपस्तन्वे क्षरन्तु यो नः सेदुरप्रिये तं नि दध्मः ।
पवित्रेण पृथिवि मोत्पुनामि ॥ ३० ॥

यास्ते प्राचीः प्रदिशो या उदीचीर्यास्ते भूमे
अधराद्याश्च पश्चात् ।
स्योनास्ता मह्यं चरते भवन्तु मा नि पप्तं
भुवने शिश्रियाणः ॥ ३१ ॥

मा नः पश्चान्मा पुरस्तान्नुदिष्ठा मोत्तरादधरादुत ।
स्वस्ति भूमे नो भव मा विदन् परिपन्थिनो वरीयो
यावया वधम् ॥ ३२ ॥

यावत्तेऽभि विपश्यामि भूमे सूर्येण मेदिना ।
तावन्मे चक्षुर्मा मेष्टोत्तरामुत्तरां समाम् ॥ ३३ ॥

यच्छयानः पर्यावर्ते दक्षिणं सव्यमभि भूमे पार्श्वम् ।
उत्तानास्त्वा प्रतीचीं यत् पृष्टीभिरधिशेमहे ।
मा हिंसीस्तत्र नो भूमे सर्वस्य प्रतिशीवरि ॥ ३४ ॥

यत्ते भूमे विखनामि क्षिप्रं तदपि रोहतु ।
मा ते मर्म विमृग्वरि मा ते हृदयमर्पिपम् ॥ ३५ ॥

ग्रीष्मस्ते भूमे वर्षाणि शरद्धेमन्तः शिशिरो वसन्तः ।
ऋतवस्ते विहिता हायनीरहोरात्रे पृथिवि नो दुहाताम् ॥ ३६ ॥

याप सर्पं विजमाना विमृग्वरी यस्यामासन्नग्नयो ये अप्स्व१न्तः ।
परा दस्यून् ददती देवपीयूनिन्द्रं वृणाना पृथिवी न वृत्रम् ।
शक्राय दध्रे वृषभाय वृष्णे ॥ ३७ ॥

यस्यां सदो हविर्धाने यूपो यस्यां निमीयते ।
ब्रह्माणो यस्यामर्चन्त्यृग्भिः साम्ना यजुर्विदः ।
युज्यन्ते यस्यामृत्विजः सोममिन्द्राय पातवे ॥ ३८ ॥

यस्यां पूर्वे भूतकृत ऋषयो गा उदानृचुः ।
सप्त सत्रेण वेधसो यज्ञेन तपसा सह ॥ ३९ ॥

सा नो भूमिरा दिशतु यद्धनं कामयामहे ।
भगो अनुप्रयुङ्क्तामिन्द्र एतु पुरोगवः ॥ ४० ॥

यस्यां गायन्ति नृत्यन्ति भूम्यां मर्त्या व्यैलबाः ।
युध्यन्ते यस्यामाक्रन्दो यस्यां वदति दुन्दुभिः ।
सा नो भूमिः प्र णुदतां सपत्नानसपत्नं मा
पृथिवी कृणोतु ॥ ४१ ॥

यस्यामन्नं व्रीहियवौ यस्या इमाः पञ्च कृष्टयः ।
भूम्यैपर्जन्यपत्न्यै नमोऽस्तु वर्षमेदसे ॥ ४२ ॥

यस्याः पुरो देवकृताः क्षेत्रे यस्या विकुर्वते ।
प्रजापतिः पृथिवीं विश्वगर्भामाशामाशां रण्यां नः कृणोतु ॥४३॥

निधिं बिभ्रती बहुधा गुहा वसु मणिं हिरण्यं पृथिवी ददातु मे ।
वसूनि नो वसुदा रासमाना देवी दधातु सुमनस्यमाना ॥४४॥

जनं बिभ्रती बहुधा विवाचसं नानाधर्माणं
पृथिवी यथौकसम् ।
सहस्रं धारा द्रविणस्य मे दुहां ध्रुवेव धेनुरनपस्फुरन्ती ॥४५॥

यस्ते सर्पो वृश्चिकस्तृष्टदंश्मा हेमन्तजब्धो भृमलो गुहा शये ।
क्रिमिर्जिन्वत् पृथिवि यद्यदेजति प्रावृषि
तन्नः सर्पन्मोप सृपद् यच्छिवं तेन नो मृड ॥ ४६ ॥
ये ते पन्थानो बहवो जनायना रथस्य वर्त्मानसश्च यातवे ।
यैः संचरन्त्युभये भद्रपापास्तं पन्थानं जयेमानमित्रमतस्करं
यच्छिवं तेन नो मृड ॥ ४७ ॥
मल्वं बिभ्रती गुरुभृद् भद्रपापस्य निधनं तितिक्षुः ।
वराहेण पृथिवी संविदाना सूकराय वि जिहीते मृगाय ॥४८॥
ये त आरण्याः पशवो मृगा वने हिताः सिंहा
व्याघ्राः पुरुषादश्चरन्ति ।
उलं वृकं पृथिवि दुच्छुनामित ऋक्षीकां रक्षो अप
बाधयास्मत् ॥ ४९ ॥
ये गन्धर्वा अप्सरसो ये चारायाः किमीदिनः ।
पिशाचान्त्सर्वा रक्षांसि तानस्मद् भूमे यावय ॥ ५० ॥

यां द्विपादः पक्षिणः संपतन्ति हंसाः सुपर्णाः शकुना वयांसि ।
यस्यां वातो मातरिश्वेयते रजांसि कृण्वंश्च्यावयंश्च वृक्षान् ।
वातस्य प्रवामुपवामनु वात्यर्चिः ॥ ५१ ॥

यस्यां कृष्णमरुणं च संहिते अहोरात्रे विहिते भूम्यामधि ।
वर्षेण भूमिः पृथिवी वृतावृता सा नो दधातु भद्रया
प्रिये धामनिधामनि ॥ ५२ ॥

द्यौश्च म इदं पृथिवी चान्तरिक्षं च मे व्यचः ।
अग्निः सूर्य आपो मेधां विश्वे देवाश्च सं ददुः ॥ ५३ ॥

अहमस्मि सहमान उत्तरो नाम भूम्याम् ।
अभीषाडस्मि विश्वाषाडाशामाशां विषासहिः ॥ ५४ ॥

अदो यद् देवि प्रथमाना पुरस्ताद् देवैरुक्ता व्यसर्पो महित्वम् ।
आ त्वा सुभूतमविशत् तदानीमकल्पयथाः प्रदिशश्चतस्रः
॥ ५५ ॥

ये ग्रामा यदरण्यं याः सभा अधि भूम्याम् ।
ये संग्रामाः समितयस्तेषु चारु वदेम ते ॥ ५६ ॥

अश्व इव रजो दुधुवे वि तान् जनान् य आक्षियन्
पृथिवीं यादजायत ।
मन्द्राग्रेत्वरी भुवनस्य गोपा वनस्पतीनां गृभि-
रोषधीनाम् ॥ ५७ ॥

यद् वदामि मधुमत् तद् वदामि यदीक्षे तद् वनन्ति मा ।
त्विषीमानस्मि जूतिमानवान्यान् हन्मि दोधतः ॥ ५८ ॥

शन्तिवा सुरभिः स्योना कीलालोध्नी पयस्वती ।
भूमिरधि ब्रवीतु मे पृथिवी पयसा सह ॥ ५९ ॥

यामन्वैच्छद्धविषा विश्वकर्मान्तरर्णवे रजसि प्रविष्टाम् ।
भुजिष्यं१ पात्रं निहितं गुहा यदाविर्भोगे अभवन्
मातृमद्भ्यः ॥ ६० ॥

त्वमस्यावपनी जनानामदितिः कामदुघा पप्रथाना ।

यत्त ऊनं तत्त आ पूरयाति प्रजापतिः प्रथमजा ऋतस्य ॥६१॥

उपस्थास्ते अनमीवा अयक्ष्मा अस्मभ्यं सन्तु पृथिवि प्रसूताः ।

दीर्घं न आयुः प्रतिबुध्यमाना वयं तुभ्यं बलिहृतः स्याम ॥६२॥

भूमे मातर्नि धेहि मा भद्रया सुप्रतिष्ठितम् ।

संविदाना दिवा कवे श्रियां मा धेहि भूत्याम् ॥ ६३ ॥

---

## ५७

### का. १९. सू. ५३

[ऋषिर्भृगुः । दशकम् । मन्त्रोक्तसर्वात्मककालदेवत्यम् । आनुष्टुभम् । १-४ त्रिष्टुभः ; ५ निचृत्पुरस्ताद्बृहती ॥]

कालो अश्वो वहति इति सूक्तस्य सौवर्णभूमिदाने आज्यहोमे विनियोगः । कालप्रतिपादकत्वात् कालसूक्तमित्युच्यते ॥

कालो अश्वो वहति सप्तरश्मिः सहस्राक्षो अजरो भूरिरेताः ।
तमा रोहन्ति कवयो विपश्चितस्तस्य चक्रा भुवनानि
विश्वा ॥ १ ॥

सप्त चक्रा वहति काल एष सप्तास्य नाभीरमृतं न्वक्षः ।
स इमा विश्वा भुवनान्यर्वाङ् कालः स ईयते प्रथमो
नु देवः ॥ २ ॥

पूर्णः कुम्भोऽधि काल आहितस्तं वै पश्यामो बहुधा नु सन्तम् ।
स इमा विश्वा भुवनानि प्रत्यङ् कालं तमाहुः परमे
व्योमन् ॥ ३ ॥

स एव सं भुवनान्याभरत् स एव सं भुवनानि पर्यैत् ।
पिता सन्नभवत् पुत्र एषां तस्माद् वै नान्यत् परमस्ति
तेजः ॥ ४ ॥

कालोऽमूं दिवमजनयत् काल इमाः पृथिवीरुत ।
कालेन भूतं भव्यं चेषितं ह वि तिष्ठते ॥ ५ ॥

कालो भूमिमसृजत काले तपति सूर्यः ।
काले ह विश्वा भूतानि काले चक्षुर्विपश्यति ॥ ६ ॥
काले मनः काले प्राणः काले नाम समाहितम् ।
कालेन सर्वा नन्दन्त्यागतेन प्रजा इमाः ॥ ७ ॥
काले तपः काले ज्येष्ठं काले ब्रह्म समाहितम् ।
कालो ह सर्वस्येश्वरो यः पितासीत् प्रजापतेः ॥ ८ ॥
तेनेषितं तेन जातं तदु तस्मिन् प्रतिष्ठितम् ।
कालो ह ब्रह्म भूत्वा बिभर्ति परमेष्ठिनम् ॥ ९ ॥
कालः प्रजा असृजत कालो अग्रे प्रजापतिम् ।
स्वयंभूः कश्यपः कालात् तपः कालादजायत ॥ १० ॥



## ब्राह्मणानि

### ताण्ड्यमहाब्राह्मणम्

### ५८

ता. म. ब्रा. अ. ८. ख. ४

[ गायत्री—आख्यायिका ]

साध्या वै नाम देवा आसन्। ते सर्वेण यज्ञेन सह स्वर्गं लोकमायन्। ते देवाश्छन्दाꣳस्यब्रुवन् सोममाहरतेति। ते जगतीं प्राहिण्वन्। सा त्रीण्यक्षराणि हित्वैकाक्षरा भूत्वागच्छत्। त्रिष्टुभं प्राहिण्वन्। सैकमक्षरꣳ हित्वा त्र्यक्षरा भूत्वागच्छत्। गायत्रीं प्राहिण्वन्। चतुरक्षराणि वै तर्हि छन्दाꣳस्यासन्। सा तानि चाक्षराणि हरन्त्यागच्छदष्टाक्षरा भूत्वा त्रीणि च सवनानि हस्ताभ्यां द्वे सवने दन्तैर्दꣳष्ट्वा तृतीयसवनम्। तस्माद् द्वे अꣳशुमती सवने। धीतं तृतीयसवनम्। दन्तैर्हि तद् दꣳष्ट्वा धयन्त्यहरत्। तस्य ये ह्रियमाणस्याꣳशवः प्रापतꣳस्ते पूतीका अभवन्। यानि पुष्पाण्यवाशीयन्त तान्यर्जुनानि। यत्प्राप्रोयत् ते प्रप्रोथाः। तस्मात्तृतीयसवन आशिरमवनयन्ति यमेव तं गावः सोममदन्ति। तस्य तꣳ रसमवनयन्ति ससोमत्वाय ॥ १ ॥

ते त्रिष्टुब्जगत्यौ गायत्रीमब्रूतामुप त्वाय्यवेति। साब्रवीत् किं मे ततः स्यादिति। यत्कामयस इत्यब्रूताम्। साब्रवीन् मम

सर्वं प्रातःसवनम् । अहमुत्तरे सवने प्रणयानीति । तस्माद् गायत्रं प्रातःसवनं गायत्र्युत्तरे सवने प्रणयति ॥ २ ॥

तां त्रिष्टुप् त्रिभिरक्षरैरुपैत् । सैकादशाक्षरा भूत्वा प्राजायत । तां जगत्येकेनाक्षरेणोपैत् । सा द्वादशाक्षरा भूत्वा प्राजायत ॥ ३ ॥

तस्मादाहुर्गायत्री वाव सर्वाणि छन्दाꣳसि । गायत्री ह्येतान् पोपान् पुष्यन्त्यैदिति ॥ ४ ॥

---

## ५९

### ता. म. ब्रा. अ. १२. ख. ११

[ कल्याणाङ्गिरसस्याख्यायिका ]

अङ्गिरसो वै सत्रमासत । तेषामाप्तः स्पृतः स्वर्गो लोक आसीत् । पन्थानं तु देवयानं न प्राजानन् । तेषां कल्याण आङ्गिरसो ध्यायमुदव्रजत् । स ऊर्णायुं गन्धर्वमप्सरसां मध्ये प्रेङ्खयमाणमुपैत् । स इयामिति यां यामभ्यदिशत् सैनमकामयत । तमभ्यवदत् कल्याणा३ इत्याप्तो वै वः स्पृतः स्वर्गो लोकः । पन्थानं तु देवयानं न प्रजानीथ । इदꣳ साम स्वर्ग्यं तेन स्तुत्वा स्वर्गं लोकमेष्यथ । मा तु वोचोऽहमदर्शमिति ॥ १० ॥

स एत् कल्याणः । सोऽब्रवीदाप्तो वै नः स्पृतः स्वर्गो लोकः । पन्थानं तु देवयानं न प्रजानीमः । इदꣳ साम स्वर्ग्यं, तेन स्तुत्वा स्वर्गं लोकमेष्याम इति । कस्तेऽवोचदित्यहमेवा-

दर्शमिति । तेन स्तुत्वा स्वर्गलोकमायन् । अहीयत कल्याणः । अनृतꣳ हि सोऽवदत् । स एषः श्वित्रः । ॥ ११ ॥

---

६०

ता. म. ब्रा. अ. १३. ख. ३

[शिशोराङ्गिरसस्याख्यायिका]

शिशुर्वा आङ्गिरसो मन्त्रकृतां मन्त्रकृदासीत् । स पितृन् पुत्रका इत्यामन्त्रयत । तं पितरोऽब्रुवन् अधर्मं करोषि यो नः पितृन् सतः पुत्रका इत्यामन्त्रयस इति । सोऽब्रवीदहं वाव वः पितास्मि यो मन्त्रकृदस्मीति । ते देवेष्वपृच्छन्त । ते देवा अब्रुवन् एष वाव पिता यो मन्त्रकृदिति । तद्वै स उदजयत् । उज्जयति शैशवेन तुष्टुवानः ॥ २४ ॥

---

६१

ता. म. ब्रा. अ. १३. ख. ४

[यतीनामाख्यायिका]

इन्द्रो यतीन् सालावृकेयेभ्यः प्रायच्छत् । तेषां त्रय उदशिष्यन्त । पृथुरश्मिर्बृहद्गिरी रायोवाजः । तेऽब्रुवन् को न इमान् पुत्रान् भरिष्यतीति । अहमितीन्द्रोऽब्रवीत् । तानधिनिधाय* परिचार्य्यं चरन् वर्धयꣳस्तान् वर्धयित्वाब्रवीत् । कुमारका

* परिचार्य्यं चरन् इत्यस्य स्थाने पर्यंचरत् इति पाठः सायणाचार्यमंमतः प्रतिभाति ॥

वरान् वृणीध्वमिति । क्षत्रं मह्यमित्यब्रवीत् पृथुरश्मिः । तस्मा एतेन पार्थुरश्मेन क्षत्रं प्रायच्छत् । क्षत्रकाम एतेन स्तुवीत । क्षत्रस्येवास्य प्रकाशो भवति । ब्रह्मवर्चसं मह्यमित्यब्रवीद् बृहद्गिरिः । तस्मा एतेन बार्हद्गिरेण ब्रह्मवर्चसं प्रायच्छत् । ब्रह्मवर्चसकाम एतेन स्तुवीत । ब्रह्मवर्चसी भवति । पशून् मह्यमित्यब्रवीद् रायोवाजः । तस्मा एतेन रायोवाजीयेन पशून् प्रायच्छत् । पशुकाम एतेन स्तुवीत । पशुमान् भवति ॥ १७ ॥

पार्थुरश्मं राजन्याय ब्रह्मसाम कुर्यात् । बार्हद्गिरं ब्राह्मणाय रायोवाजीयं वैश्याय । स्वेनैवैनांस्तद्रूपेण समर्धयति स्तोमः ॥ १८ ॥

---

## ६२

ता. म. ब्रा. अ. १४. ख. ६

[वत्सस्याख्यायिका]

वत्सश्च वै मेधातिथिश्च काण्वावास्ताम् । तं वत्सं मेधातिथिराक्रोशत् अब्राह्मणोऽसि शूद्रापुत्र इति । सोऽब्रवीत् ऋतेनाग्निं व्ययाव यतरो नौ ब्रह्मीयानिति । वात्सेन वत्सो व्यैत् मैधातिथेन मेधातिथिः । तस्य न लोम चनौषत् । तद्वाव स तर्ह्यकामयत कामसनि साम वात्सम् । काममेवैतेनावरुन्धे ॥ ६ ॥

---

६३

ता. म. ब्रा. अ. १५. ख. ५

[वसिष्ठस्याख्यायिका]

ऋषयो वा इन्द्रं प्रत्यक्षं नापश्यन् । स वसिष्ठोऽकामयत कथमिन्द्रं प्रत्यक्षं पश्येयमिति । स एतं निहवमपश्यत् । ततो वै स इन्द्रं प्रत्यक्षमपश्यत् । स एनमब्रवीत् । ब्राह्मणं ते वक्ष्यामि यथा त्वत्पुरोहिता भरताः प्रजनिष्यन्ते अथ मान्येभ्य ऋषिभ्यो मा प्रवोच इति । तस्मा एतान् स्तोमभागानब्रवीत् । ततो वै वसिष्ठपुरोहिता भरताः प्राजायन्त । सेन्द्रं वा एतत्साम यदेतत्साम भवति सेन्द्रत्वाय ॥ २४ ॥

---

६४

ता. म. ब्रा. अ. २१. ख. १३

[ देवासुराणामाख्यायिका ]

देवाश्च वा असुराश्चास्पर्धन्त । ते न व्यजयन्त । तेऽब्रुवन् वाचो मिथुनेन विजयामहै यतरे नो वाचो मिथुनं न प्रतिविन्दाऽ३न्ते पराभवानिति । ते देवा एकः इत्यब्रुवन् । एका इत्यसुरा वाचो मिथुनं प्रत्यविन्दन् । द्वौ इति देवा अब्रुवन् । द्वे इत्यसुरा वाचो मिथुनं प्रत्यविन्दन् । त्रयः इति देवा अब्रुवन् । तिस्रः इत्यसुरा वाचो मिथुनं प्रत्यविन्दन् । चत्वारः इति देवा अब्रुवन् । चतस्रः इत्यसुरा

वाचो मिथुनं प्रत्यविन्दन् । पञ्च इति देवा अब्रुवन् । नासुरा अविन्दन् । ततो देवा अभवन् परासुराः ॥ २ ॥

---

## ६५

ता. म. ब्रा. अ. २५. ख. १३

[इन्द्ररुशमयोराख्यायिका]

इन्द्रश्च रुशमा चाऽऽजं प्रास्येतां यतरो नौ पूर्वो भूमिं पर्य्येति स जयतीति । भूमिमिन्द्रः पर्यैत् कुरुक्षेत्रं रुशमा । साब्रवीदजैषं त्वा इति । अहमेव त्वामजैषमितीन्द्रोऽब्रवीत् । तौ देवेष्वपृच्छेताम् । ते देवा अब्रुवन् एतावती वाव प्रजापतेर्वेदिर्यावत् कुरुक्षेत्रमिति । तौ न व्यजयेताम् ॥ ३ ॥

---

# ऐतरेयब्राह्मणम्

## ६६

ऐ. ब्रा. अ. ३३. ख. १

[शौनःशेपाख्यानम्]

हरिश्चन्द्रो ह वैधस ऐक्ष्वाको राजाऽपुत्र आस । तस्य ह शतं जाया बभूवुः । तासु पुत्रं न लेभे । तस्य ह पर्वतनारदौ गृह ऊषतुः । स ह नारदं पप्रच्छ ।

यं न्विमं पुत्रमिच्छन्ति ये विजानन्ति ये च न ।
किंस्वित्पुत्रेण विन्दते तन्म आचक्ष्व नारद ॥ १ ॥ इति ।

स एकया पृष्टो दशभिः प्रत्युवाच ।
ऋणमस्मिन्संनयत्यमृतत्वं च गच्छति ।
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥ १ ॥
यावन्तः पृथिव्यां भोगा यावन्तो जातवेदसि ।
यावन्तो अप्सु प्राणिनां भूयान्पुत्रे पितुस्ततः ॥ २ ॥
शश्वत्पुत्रेण पितरोऽत्यायन्बहुलं तमः ।
आत्मा हि जज्ञ आत्मनः स इरावत्यतितारिणी ॥ ३ ॥
किं नु मलं किमजिनं किमु श्मश्रूणि किं तपः ।
पुत्रं ब्रह्माण इच्छध्वं स वै लोकोऽवदावदः ॥ ४ ॥
अन्नं ह प्राणः शरणं ह वासो रूपं हिरण्यं पशवो विवाहाः ।
सखा ह जाया कृपणं ह दुहिता ज्योतिर्ह पुत्रः परमे
व्योमन् ॥ ५ ॥
पतिर्जायां प्रविशति गर्भो भूत्वा स मातरम् ।
तस्यां पुनर्नवो भूत्वा दशमे मासि जायते ॥ ६ ॥
तज्जाया जाया भवति यदस्यां जायते पुनः ।
आभूतिरेषा भूतिर्बीजमेतन्निधीयते ॥ ७ ॥
देवाश्चैतामृषयश्च तेजः समभरन् महत् ।
देवा मनुष्यानब्रुवन्नेषा वो जननी पुनः ॥ ८ ॥
नापुत्रस्य लोकोऽस्तीति तत्सर्वे पशवो विदुः ।
तस्मात्तु पुत्रो मातरं स्वसारं चाधिरोहति ॥ ९ ॥
एष पन्था उरुगायः सुशेवो यं पुत्रिण आक्रमन्ते विशोकाः ।
तं पश्यन्ति पशवो वयांसि च तस्मात्ते मात्रापि मिथुनो-
भवन्ति ॥ १० ॥

इति हास्मा आख्याय ॥ १३ ॥

अथैनमुवाच। वरुणं राजानमुपधाव पुत्रो मे जायतां तेन त्वा यजा इति। तथेति। स वरुणं राजानमुपससार। पुत्रो मे जायतां तेन त्वा यजा इति। तथेति। तस्य ह पुत्रो जज्ञे रोहितो नाम। तं होवाच। अजनि वै ते पुत्रो यजस्व मानेनेति। स होवाच। यदा वै पशुर्निर्दशो भवत्यथ स मेध्यो भवति। निर्दशो न्वस्त्वथ त्वा यजा इति। तथेति। स ह निर्दश आस। तं होवाच। निर्दशो न्वभूद्यजस्व मानेनेति। स होवाच। यदा वै पशोर्दन्ता जायन्तेऽथ स मेध्यो भवति। दन्ता न्वस्य जायन्तामथ त्वा यजा इति। तथेति। तस्य ह दन्ता जज्ञिरे। तं होवाच। अज्ञत वा अस्य दन्ता यजस्व मानेनेति। स होवाच। यदा वै पशोर्दन्ताः पद्यन्तेऽथ स मेध्यो भवति। दन्ता न्वस्य पद्यन्तामथ त्वा यजा इति। तथेति। तस्य ह दन्ताः पेदिरे। तं होवाच। अपत्सत वा अस्य दन्ता यजस्व मानेनेति। स होवाच। यदा वै पशोर्दन्ताः पुनर्जायन्तेऽथ स मेध्यो भवति। दन्ता न्वस्य पुनर्जायन्तामथ त्वा यजा इति। तथेति। तस्य ह दन्ताः पुनर्जज्ञिरे। तं होवाच। अज्ञत वा अस्य पुनर्दन्ता यजस्व मानेनेति। स होवाच। यदा वै क्षत्रियः सांनाहुको भवत्यथ स मेध्यो भवति। संनाहं नु प्राप्नोत्वथ त्वा यजा इति। तथेति। स ह संनाहं प्रापत्। तं होवाच। संनाहं नु प्राप्नोद्यजस्व मानेनेति। स तथेत्युक्त्वा पुत्रमामन्त्रयामास। ततायं वै मह्यं त्वामददात्। हन्त त्वयाहमिमं यजा इति। स ह नेत्युक्त्वा धनुरादायारण्यमुपातस्थौ। स संवत्सरमरण्ये चचार ॥ १४ ॥

अथ हैक्ष्वाकं वरुणो जग्राह । तस्य होदरं जज्ञे । तदु ह रोहितः शुश्राव । सोऽरण्याद् ग्राममेयाय । तमिन्द्रः पुरुषरूपेण पर्येत्योवाच ।

नानाश्रान्ताय श्रीरस्तीति रोहित शुश्रुम ।
पापो नृषद् वरो जन इन्द्र इच्चरतः सखा ॥ १ ॥

चरैवेति । चरैवेति वै मा ब्राह्मणोऽवोचत् । इति ह द्वितीयं संवत्सरमरण्ये चचार । सोऽरण्याद् ग्राममेयाय । तमिन्द्रः पुरुषरूपेण पर्येत्योवाच ।

पुष्पिण्यौ चरतो जङ्घे भूष्णुरात्मा फलग्रहिः ।
शेरेऽस्य सर्वे पाप्मानः श्रमेण प्रपथे हताः ॥ २ ॥

चरैवेति । चरैवेति वै मा ब्राह्मणोऽवोचत् । इति ह तृतीयं संवत्सरमरण्ये चचार । सोऽरण्याद् ग्राममेयाय । तमिन्द्रः पुरुषरूपेण पर्येत्योवाच ।

आस्ते भग आसीनस्योर्ध्वस्तिष्ठति तिष्ठतः ।
शेते निपद्यमानस्य चराति चरतो भगः ॥ ३ ॥

चरैवेति । चरैवेति वै मा ब्राह्मणोऽवोचत् । इति ह चतुर्थं संवत्सरमरण्ये चचार । सोऽरण्याद् ग्राममेयाय । तमिन्द्रः पुरुषरूपेण पर्येत्योवाच ।

कलिः शयानो भवति संजिहानस्तु द्वापरः ।
उत्तिष्ठंस्त्रेता भवति कृतं संपद्यते चरन् ॥ ५ ॥

चरैवेति । चरैवेति वै मा ब्राह्मणोऽवोचत् । इति ह पञ्चमं संवत्सरमरण्ये चचार । सोऽरण्याद् ग्राममेयाय । तमिन्द्रः पुरुषरूपेण पर्येत्योवाच ।

चरन् वै मधु विन्दति चरन्स्वादुमुदुम्बरम् ।
सूर्यस्य पश्य श्रेमाणं यो न तन्द्रयते चरन् ॥ ५ ॥

चरैवेति । चरैवेति वै मा ब्राह्मणोऽवोचत् । इति ह षष्ठं संवत्सरमरण्ये चचार । सोऽजीगर्तं सौयवसिमृषिमशनया परीतमरण्य उपेयाय । तस्य ह त्रयः पुत्रा आसुः शुनःपुच्छः शुनःशेपः शुनोलाङ्गूल इति । तं होवाच । ऋषेऽहं ते शतं ददामि । अहमेषामेकेनात्मानं निष्क्रीणा इति । स ज्येष्ठं पुत्रं निगृह्णान उवाच न न्विममिति । नो एवेममिति कनिष्ठं माता । तौ ह मध्यमे संपादयांचक्रतुः शुनःशेपे । तस्य ह शतं दत्वा स तमादाय सोऽरण्याद् ग्राममेयाय । स पितरमेत्योवाच । तत हन्ताहमनेनात्मानं निष्क्रीणा इति । स वरुणं राजानमुपससारानेन त्वा यजा इति । तथेति । भूयान्वै ब्राह्मणः क्षत्रियादिति वरुण उवाच । तस्मा एतं राजसूयं यज्ञक्रतुं प्रोवाच । तमेतमभिषेचनीये पुरुषं पशुमालेभे ॥ १५ ॥

तस्य ह विश्वामित्रो होतासीज्जमदग्निरध्वर्युर्वसिष्ठो ब्रह्माऽयास्य उद्गाता । तस्मा उपाकृताय नियोक्तारं न विविदुः । स होवाचाजीगर्तः सौयवसिर्मह्यमपरं शतं दत्ताहमेनं नियोक्ष्यामीति । तस्मा अपरं शतं ददुः । तं स निनियोज । तस्मा उपाकृताय नियुक्तायाप्रीताय पर्यग्निकृताय विशसितारं न विविदुः । स होवाचाजीगर्तः सौयवसिः । मह्यमपरं शतं दत्ताहमेनं विशसिष्यामीति । तस्मा अपरं शतं ददुः । सोऽसिं निःशान एयाय । अथ ह शुनःशेप ईक्षांचक्रेऽमानुषमिव वै मा विशसिष्यन्ति हन्ताहं देवता उपधावामीति । स

प्रजापतिमेव प्रथमं देवतानामुपससार कस्य नूनं कतमस्यामृतानामित्येतयर्चा (ऋग्वेद १. २४. १)। तं प्रजापतिरुवाच। अग्निर्वै देवानां नेदिष्ठस्तमेवोपधावेति। सोऽग्निमुपससार अग्नेर्वयं प्रथमस्यामृतानामित्येतयर्चा (१. २४. २)। तमग्निरुवाच। सविता वै प्रसवानामीशे तमेवोपधावेति। स सवितारमुपससार अभि त्वा देव सवितरित्येतेन तृचेन (१. २४. ३–५)। तं सवितोवाच। वरुणाय वै राज्ञे नियुक्तोऽसि तमेवोपधावेति। स वरुणं राजानमुपससारात उत्तराभिरेकत्रिंशता। तं वरुण उवाच। अग्निर्वै देवानां मुखं सुहृदयतमस्तं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति। सोऽग्निं तुष्टावात उत्तराभिर्द्वाविंशत्या। तमग्निरुवाच। विश्वान्नु देवान्स्तुह्यथ त्वोत्स्रक्ष्याम इति। स विश्वान्देवांस्तुष्टाव नमो महद्भ्यो नमो अर्भकेभ्य इत्येतयर्चा (१. २७. १३)। तं विश्वे देवा ऊचुः। इन्द्रो वै देवानामोजिष्ठो बलिष्ठः सहिष्ठः सत्तमः पारयिष्णुतमस्तं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति। स इन्द्रं तुष्टाव यच्चिद्धि सत्य सोमपा इति चैतेन सूक्तेनोत्तरस्य च पञ्चदशभिः (१. २९; १. ३०. १–१५)। तस्मा इन्द्रः स्तूयमानः प्रीतो मनसा हिरण्यरथं ददौ। तमेतया प्रतीयाय शश्वदिन्द्र इति (१. ३०. १६)। तमिन्द्र उवाच।

अश्विनौ नु स्तुह्यथ त्वोत्स्रक्ष्याम इति । सोऽश्विनौ तुष्टावात उत्तरेण तृचेन (१. ३०. १७–१९) । तमश्विना ऊचतुः । उषसं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति । स उषसं तुष्टावात उत्तरेण तृचेन (१. ३०. २०–२२) । तस्य ह स्मर्च्यृच्युक्तायां वि पाशो मुमुचे । कनीय ऐक्ष्वाकस्योदरं भवति । उत्तमस्यामेवर्च्युक्तायां वि पाशो मुमुचे । अगद ऐक्ष्वाक आस ॥ १६ ॥

तमृत्विज ऊचुः । त्वमेव नोऽस्याह्नः संस्थामधिगच्छेति । अथ हैतं शुनःशेपोऽञ्जःसवं ददर्श । तमेताभिश्चतसृभिरभिसुषाव यच्चिद्धि त्वं गृहेगृह इति (१. २८. ५–८) । अथैनं द्रोणकलशमभ्यवनिनाय उच्छिष्टं चम्वोर्भरेत्येतयर्चा (१. २८. ९) । अथ हास्मिन्नन्वारब्धे पूर्वाभिश्चतसृभिः सस्वाहाकाराभिर्जुहवांचकार । अथैनमवभृथमभ्यवनिनाय त्वं नो अग्ने वरुणस्य विद्वानित्येताभ्याम् (४. १. ४–५) । अथैनमत ऊर्ध्वमग्निमाहवनीयमुपस्थापयांचकार शुनश्चिच्छेपं निदितं सहस्रादिति (५. २. ७) । अथ ह शुनःशेपो विश्वामित्रस्याङ्कमाससाद । स होवाचाजीगर्तः सौयवसिः । ऋषे पुनर्मे पुत्रं देहीति । नेति होवाच विश्वामित्रो देवा वा इमं मह्यमरासतेति । स ह देवरातो वैश्वामित्र आस । तस्यैते कापिलेयबाभ्रवाः । स होवाचाजीगर्तः सौयवसिः । त्वं वेहि विह्वयावहा इति । स होवाचाजीगर्तः सौयवसिः ।

आङ्गिरसो जन्मनास्याजीगर्तिः श्रुतः कविः ।
ऋषे पैतामहात्तन्तोर्मापगाः पुनरेहि माम् ॥१॥ इति ।

स होवाच शुनःशेपः ।

अदर्शुस्त्वा शासहस्तं न यच्छूद्रेष्वलप्सत ।
गवां त्रीणि शतानि त्वमवृणीथा मदङ्गिरः ॥२॥ इति ।

स होवाचाजीगर्तः सौयवसिः ।

तद्वै मा तात तपति पापं कर्म मया कृतम् ।
तदहं निह्नवे तुभ्यं प्रति यन्तु शता गवाम् ॥३॥ इति ।

स होवाच शुनःशेपः ।

यः सकृत्पापकं कुर्यात्कुर्यादेनत्ततोऽपरम् ।
नापागाः शौद्रान्न्यायादसंधेयं त्वया कृतम् ॥४॥ इति ।

असंधेयमिति ह विश्वामित्र उपपपाद । स होवाच विश्वामित्रः ।

भीम एव सौयवसिः शासेन विशिशासिषुः ।
अस्थान्मैतस्य पुत्रो भूर्ममैवोपेहि पुत्रताम् ॥५॥ इति ।

स होवाच शुनःशेपः ।

स वै यथा नो ज्ञपया राजपुत्र तथा वद ।
यथैवाङ्गिरसः सन्नुपेयां तव पुत्रताम् ॥६॥ इति ।

स होवाच विश्वामित्रः ।

ज्येष्ठो मे त्वं पुत्राणां स्यास्तव श्रेष्ठा प्रजा स्यात् ।
उपेया दैवं मे दायं तेन वै त्वोपमन्त्रये ॥७॥ इति ।

स होवाच शुनःशेपः ।

संज्ञानानेषु वै ब्रूयाः सौहार्दाय मे श्रियै ।
यथाहं भरतऋषभोपेयां तव पुत्रताम् ।।८।। इति ।

अथ ह विश्वामित्रः पुत्रानामन्त्रयामास ।

मधुच्छन्दाः शृणोतन ऋषभो रेणुरष्टकः ।
ये के च भ्रातरः स्थ नास्मै ज्यैष्ठ्याय कल्पध्वम्
।।९।। इति ।। १७ ।।

तस्य ह विश्वामित्रस्यैकशतं पुत्रा आसुः । पञ्चाशदेव ज्यायांसो मधुच्छन्दसः पञ्चाशत्कनीयांसः । तद्ये ज्यायांसो न ते कुशलं मेनिरे ।ताननु व्याजहार । अन्तान् वः प्रजा भक्षीष्टेति । त एतेऽन्ध्राः पुण्ड्राः शबराः पुलिन्दा मूतिबा इत्युदन्त्या बहवो भवन्ति वैश्वामित्रा दस्यूनां भूयिष्ठाः । स होवाच मधुच्छन्दाः पञ्चाशता सार्धम् ।

यन्नः पिता संजानीते तस्मिंस्तिष्ठामहे वयम् ।
पुरस्त्वा सर्वे कुर्महे त्वामन्वञ्चो वयं स्मसि ।।१।। इति ।

अथ ह विश्वामित्रः प्रतीतः पुत्रांस्तुष्टाव ।

ते वै पुत्राः पशुमन्तो वीरवन्तो भविष्यथ ।
ये मानं मेऽनुगृह्णन्तो वीरवन्तमकर्त मा ।।२।।
पुरएत्रा वीरवन्तो देवरातेन गाथिनाः ।
सर्वे राध्याः स्थ पुत्रा एष वः सद्विवाचनम् ।।३।।
एष वः कुशिका वीरो देवरातस्तमन्वित ।
युष्मांश्च दायं म उपेता विद्यां यामु च विद्मसि ।।४।।

ते सम्यञ्चो वैश्वामित्राः सर्वे साकं सरातयः ।
देवराताय तस्थिरे धृत्यै श्रेष्ठयाय गाथिनाः ॥५॥
अधीयत देवरातो रिक्थयोरुभयोर्ऋषिः ।
जह्नूनां चाधिपत्ये दैवे वेदे च गाथिनाम् ॥६॥

तदेतत्परऋक्शतगाथं शौनःशेपमाख्यानम् । तद्धोता राज्ञेऽभिषिक्तायाचष्टे । हिरण्यकशिपावासीन आचष्टे हिरण्यकशिपावासीनः प्रतिगृणाति । यशो वै हिरण्यं यशसैवैनं तत् समर्द्धयति । ओमित्यृचः प्रतिगर एवं तथेति गाथायाः । ओमिति वै दैवं तथेति मानुषम् । दैवेन चैवैनं तन् मानुषेण च पापावेनसः प्रमुञ्चति । तस्माद्यो राजा विजिती स्यादप्ययजमान आख्यापयेतैवैतच्छौनःशेपमाख्यानम् । न हास्मिन्नल्पं चनैनः परिशिष्यते । सहस्रमाख्यात्रे दद्यात् शतं प्रतिगरित्रे एते चैवासने । श्वेतश्चाश्वतरीरथो होतुः । पुत्रकामा हाप्याख्यापयेरल्लँभन्ते ह पुत्राल्लँभन्ते ह पुत्रान् ॥ १८ ॥

---

६७

ऐ. ब्रा. अ. ३८. ख. १-३

[ऐन्द्रो महाभिषेकः]

अथात ऐन्द्रो महाभिषेकः । ते देवा अब्रुवन् सप्रजापतिका अयं वै देवानामोजिष्ठो बलिष्ठः सत्तमः पारयिष्णुतमः । इममेवाभिषिञ्चामहा इति । तथेति । तद्वै तदिन्द्रमेव । तस्मा एतामासन्दीं समभरन् ऋचं नाम ।

तस्यै बृहच्च रथन्तरं च पूर्वौ पादावकुर्वन् । वैरूपं च वैराजं चापरौ । शाक्वररैवते शीर्षण्ये । नौधसं च कालेयं चानूच्ये । ऋचः प्राचीनातानान् सामानि तिरश्चीनवायान् । यजूंष्यतीकाशान् । यश आस्तरणम् । श्रियमुपबर्हणम् । तस्यै सविता च बृहस्पतिश्च पूर्वौ पादावधारयताम् । वायुश्च पूषा चापरौ । मित्रावरुणौ शीर्षण्ये । अश्विनावनूच्ये स एतामासन्दीमारोहत् ॥

वसवस्त्वा गायत्रेण च्छन्दसा त्रिवृता स्तोमेन रथन्तरेण साम्नारोहन्तु । तानन्वारोहामि साम्राज्याय । रुद्रास्त्वा त्रैष्टुभेन च्छन्दसा पञ्चदशेन स्तोमेन बृहता साम्नारोहन्तु । तानन्वारोहामि भौज्याय । आदित्यास्त्वा जागतेन च्छन्दसा सप्तदशेन स्तोमेन वैरूपेण साम्नारोहन्तु । तानन्वारोहामि स्वाराज्याय । विश्वे त्वा देवा आनुष्टुभेन च्छन्दसैकविंशेन स्तोमेन वैराजेन साम्नारोहन्तु । तानन्वारोहामि वैराज्याय । साध्याश्च त्वाप्त्याश्च देवाः पाङ्क्तेन च्छन्दसा त्रिणवेन स्तोमेन शाक्वरेण साम्नारोहन्तु । तानन्वारोहामि राज्याय । मरुतश्च त्वाङ्गिरसश्च देवा अतिच्छन्दसा छन्दसा त्रयस्त्रिंशेन स्तोमेन रैवतेन साम्नारोहन्तु । तानन्वारोहामि पारमेष्ठ्याय माहाराज्यायाधिपत्याय स्वावश्यायातिष्ठायारोहामीत्येतामासन्दीमारोहत् ॥

तमेतस्यामासन्द्यामासीनं विश्वे देवा अब्रुवन् । न वा अनभ्युत्क्रुष्ट इन्द्रो वीर्यं कर्तुमर्हति । अभ्येनमुत्क्रोशामेति । तथेति । तं विश्वे देवा अभ्युदक्रोशन् । इमं देवा अभ्युत्क्रोशत ।

सम्राजं साम्राज्यं भोजं भोजपितरं स्वराजं स्वाराज्यं विराजं वैराज्यं राजानं राजपितरं परमेष्ठिनं पारमेष्ठ्यम् । क्षत्रमजनि क्षत्रियोऽजनि विश्वस्य भूतस्याधिपतिरजनि विशामत्ताजनि पुरां भेत्ताजनि असुराणां हन्ताजनि ब्रह्मणो गोप्ताजनि धर्मस्य गोप्ताजनीति । तमभ्युत्क्रुष्टं प्रजापति-रभिषेक्ष्यन्नेतयर्चाभ्यमन्त्रयत ॥ १ ॥

'नि षसाद धृतव्रतो वरुणः पस्त्यास्वा (ऋग्वेद १. २५. १०) साम्राज्याय भौज्याय स्वाराज्याय वैराज्याय पारमेष्ठ्याय राज्याय माहाराज्यायाधिपत्याय स्वावश्याया-तिष्ठाय सुक्रतुरिति ॥

तमेतस्यामासन्द्यामासीनं प्रजापतिः पुरस्तात् तिष्ठन् प्रत्यङ्मुख ,औदुम्बर्याद्रया शाखया सपलाशया जातरूपमयेन च पवित्रेणान्तर्धायाभ्यषिञ्चत् इमा आपः शिवतमाः इत्येतेन तृचेन देवस्य त्वा इति च यजुषा भूर्भुवस्स्वः इत्येताभिश्च व्याहृतिभिः ॥ २ ॥

अथैनं प्राच्यां दिशि वसवो देवाः षड्भिश्चैव पञ्चविंशै-रहोभिरभ्यषिञ्चन् एतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः साम्राज्याय । तस्मादेतस्यां प्राच्यां दिशि ये के च प्राच्यानां राजानः साम्राज्यायैव तेऽभिषिच्यन्ते । सम्राळित्येनानभिषिक्तानाचक्षते एतामेव देवानां विहितिमनु ॥

अथैनं दक्षिणस्यां दिशि रुद्रा देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन् एतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिर्भोज्याय । तस्मादेतस्यां दक्षिणस्यां दिशि ये के च सत्वतां राजानो भौज्यायैव तेऽभिषिच्यन्ते । भोजेत्येनानभिषिक्तानाचक्षते एतामेव देवानां विहितिमनु ॥

अथैनं प्रतीच्यां दिश्यादित्या देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन् एतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः स्वाराज्याय । तस्मादेतस्यां प्रतीच्यां दिशि ये के च नीच्यानां राजानो येऽपाच्यानां स्वाराज्यायैव तेऽभिषिच्यन्ते । स्वराळित्येनानभिषिक्तानाचक्षते एतामेव देवानां विहितिमनु ॥

अथैनमुदीच्यां दिशि विश्वेदेवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन् एतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिर्वैराज्याय । तस्मादेतस्यामुदीच्यां दिशि ये के च परेण हिमवन्तं जनपदा उत्तरकुरव उत्तरमद्रा इति वैराज्यायैव तेऽभिषिच्यन्ते । विराळित्येनानभिषिक्तानाचक्षते एतामेव देवानां विहितिमनु ॥

अथैनमस्यां ध्रुवायां मध्यमायां प्रतिष्ठायां दिशि साध्याश्चाप्त्याश्च देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन् एतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभी राज्याय । तस्मादस्यां ध्रुवायां मध्यमायां प्रतिष्ठायां दिशि ये के च कुरुपञ्चालानां राजानः सवशोशीनराणां राज्यायैव

तेऽभिषिच्यन्ते । राजेत्येनानभिषिक्तानाचक्षते एतामेव देवानां विहितिमनु ॥

अथैनमूर्ध्वायां दिशि मरुतश्चाङ्गिरसश्च देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन् एतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः पारमेष्ठ्याय माहाराज्याधिपत्याय स्वावश्यायातिष्ठायेति स परमेष्ठी प्राजापत्योऽभवत् ॥

स एतेन महाभिषेकेणाभिषिक्त इन्द्रः सर्वा जितीरजयत्, सर्वांल्लोकानविन्दत्, सर्वेषां देवानां श्रैष्ठ्यमतिष्ठां परमतामगच्छत् । साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं माहाराज्यमाधिपत्यं जित्वास्मिंल्लोके स्वयंभूः स्वराळमृतोऽमुष्मिन् स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः समभवत् समभवत् ॥ ३ ॥

---

## ६८

ऐ. ब्रा. अ. ३९. ख. १

[ क्षत्रियाभिषेकः ]

स य इच्छेदेवंवित् क्षत्रियम् अयं सर्वा जितीर्जयेत अयं सर्वांल्लोकान् विन्देत अयं सर्वेषां राज्ञां श्रैष्ठ्यमतिष्ठां परमतां गच्छेत साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं माहाराज्यमाधिपत्यम् । अयं समन्तपर्यायी स्यात्

सार्वभौमः सार्वायुष आऽन्तादा परार्धात् पृथिव्यै समुद्रपर्यन्ताया एकराळिति तमेतेनैन्द्रेण महाभिषेकेण क्षत्रियं शापयित्वाभिषिञ्चेत् । यां च रात्रीमजायेथा यां च प्रेतासि तदुभयमन्तरेणेष्टापूर्तं ते लोकं सुकृतमायुः प्रजां वृञ्जीयं यदि मे द्रुह्येरिति ॥

स य इच्छेदेवंवित् क्षत्रियो अहं सर्वा जितीर्जयेयम् अहं सर्वाल्लँलोकान् विन्देयम् अहं सर्वेषां राज्ञां श्रैष्ठ्यमतिष्ठां परमतां गच्छेयम् साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं माहाराज्यमाधिपत्यम् अहं समन्तपर्यायी स्याम् सार्वभौमः सार्वायुष आऽन्तादा परार्धात् पृथिव्यै समुद्रपर्यन्ताया एकराळिति स न विचिकित्सेत् स ब्रूयात् सह श्रद्धया यां च रात्रीमजायेऽहं यां च प्रेतास्मि तदुभयन्तरेणेष्टापूर्तं मे लोकं सुकृतमायुः प्रजां वृञ्जीथा यदि ते द्रुह्येयमिति ॥ १ ॥



६९

शत. ब्रा. का. १. अ. १. ब्रा. १

[ व्रतोपायनम् ]

व्रतमुपैष्यन्नन्तरेणाहवनीयं च गार्हपत्यं च प्राङ् तिष्ठन्नप उप स्पृशति तद्यदप उपस्पृशत्यमेध्यो वै पुरुषो यदनृतं वदति तेन पूतिरन्तरतो मेध्या वा आपो मेध्यो भूत्वा व्रतमुपायानीति पवित्रं वा आपः पवित्रपूतो व्रतमुपायानीति तस्माद्वा अप उप स्पृशति ॥ १ ॥

सोऽग्निमेवाभीक्षमाणो व्रतमुपैति ॥ अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् (वा. सं. १. ५) इत्यग्निर्वै देवानां व्रतपतिस्तस्मा एवैतत्प्राह व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतामिति नात्र तिरोहितमिवास्ति ॥ २ ॥

अथ सᳪस्थिते वि सृजते । अग्ने व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि (वा. सं. २. २८) इत्यशकद्ध्येतद्यो

यज्ञस्य सꣳस्थामगन्नराधि ह्यस्मै यो यज्ञस्य सꣳस्थामगन्नेतेन न्वेव भूयिष्ठाइव व्रतमुप यन्त्यनेन त्वेवोपेयात् ॥ ३ ॥

द्वयं वा इदं न तृतीयमस्ति । सत्यं चैवानृतं च सत्यमेव देवा अनृतं मनुष्याः । इदमहमनृतात्सत्यमुपैमि (वा. सं. १. ५) इति तन्मनुष्येभ्यो देवानुपैति ॥ ४ ॥

स वै सत्यमेव वदेत् । एतद्ध वै देवा व्रतं चरन्ति यत्सत्यं तस्मात्ते यशो यशो ह भवति य एवं विद्वान्त्सत्यं वदति ॥ ५ ॥

अथ सꣳस्थिते वि सृजते । इदमहं य एवास्मि सोऽस्मि (वा. सं. २. २८) इत्यमानुषइव वा एतद्भवति यद् व्रतमुपैति नहि तदवकल्पते यद् ब्रूयादिदमहꣳ सत्यादनृतमुपैमीति तदु खलु पुनर्मानुषो भवति । तस्मादिदमहं य एवास्मि सोऽस्मि । इत्येवं व्रतं वि सृजेत ॥ ६ ॥

अथातोऽशनानशनस्यैव । तदु हाषाढः सावयसोऽनशनमेव व्रतं मेने । मनो ह वै देवा मनुष्यस्या जानन्ति । त एनमेतद् व्रतमुपयन्तं विदुः प्रातर्नो यक्ष्यत इति । तेऽस्य

विश्वे देवा गृहाना गच्छन्ति तेऽस्य गृहेषूप वसन्ति स उपवसथः ॥ ७ ॥

तन्न्वेवानवक्लृप्तं यो मनुष्येष्वनश्नत्सु पूर्वोऽश्नीयादथ किमु यो देवेष्वनश्नत्सु पूर्वोऽश्नीयात्तस्मादु नैवाश्नीयात् ॥८॥

तदु होवाच याज्ञवल्क्यः । यदि नाश्नाति पितृदेवत्यो भवति यद्यु अश्नाति देवानत्यश्नातीति स यदेवाशितमनशितं तदश्नीयादिति । यस्य वै हविर्न गृह्णन्ति तदशितमनशितꣳ स यदश्नाति तेनापितृदेवत्यो भवति यद्यु तदश्नाति यस्य हविर्न गृह्णन्ति तेनो देवान्नात्यश्नाति ॥ ९ ॥

स वा आरण्यमेवाश्नीयात् । या वारण्या ओषधयो यद्वा वृक्ष्यं तदु ह स्माहापि बर्कुर्वार्ष्णो माषान्मे पचत न वा एतेषाꣳहविर्गृह्णन्तीति तदु तथा न कुर्याद् व्रीहियवयोर्वा एतदुपजं यच्छमीधान्यं तद् व्रीहियवावेवैतेन भूयाꣳसौ करोति तस्मादारण्यमेवाश्नीयात् ॥ १० ॥

स आहवनीयागारे वैताꣳ रात्रिꣳ शयीत । गार्हपत्यागारे वा । देवान्वा एष उपा वर्तते यो व्रतमुपैति स स यानेवोपावर्तते

तेषामेवैतन्मध्ये शेतेऽधः शयीताधस्तादिव हि श्रेयस उपचारः ॥ ११ ॥

---

७०

श. ब्रा. का. १. अ. ८. ब्रा. १

[ इडाब्राह्मणान्तर्गतो मनुमत्स्यवृत्तान्तः ]

मनवे ह वै प्रातः अवनेग्यमुदकमाजह्रुर्यथेदं पाणिभ्यामवनेजनायाहरन्त्येवं तस्यावनेनिजानस्य मत्स्यः पाणी आपेदे ॥ १ ॥

स हास्मै वाचमुवाद । बिभृहि मा पारयिष्यामि त्वेति । कस्मान्मा पारयिष्यसीति । औघ इमाः सर्वाः प्रजा निर्वोढा ततस्त्वा पारयितास्मीति । कथं ते भृतिरिति ॥ २ ॥

स होवाच। यावद्वै क्षुल्लका भवामो बह्वी वै नस्तावन्नाष्ट्रा भवत्युत मत्स्य एव मत्स्यं गिलति कुम्भ्यां माग्रे बिभरासि । स यदा तामतिवर्धा अथ कर्षूं खात्वा तस्यां मा बिभरासि । स यदा तामतिवर्धा अथ मा समुद्रमभ्यवहरासि तर्हि वा अतिनाष्ट्रो भवितास्मीति ॥ ३ ॥

शश्वद्ध झष आस । स हि ज्येष्ठं वर्धतेऽथेतिथीꣳ समां तदौघ आगन्ता तन्मा नावमुपकल्प्योपासासै स औघ उत्थिते नावमापद्यासै ततस्त्वा पारयितास्मीति ॥ ४ ॥

तमेवं भृत्वा समुद्रमभ्यवजहार । स यतिथीं तत्समां परिदिदेश ततिथीꣳ समां नावमुपकल्प्योपासाञ्चक्रे । स औघ उत्थिते नावमापेदे तꣳ स मत्स्य उपन्यापुप्लुवे तस्य शृङ्गे नावः पाशं प्रतिमुमोच तेनैतमुत्तरं गिरिमभिदुद्राव ॥ ५ ॥

स होवाच । अपीपरं वै त्वा वृक्षे नावं प्रति बध्नीष्व तं तु त्वा मा गिरौ सन्तमुदकमन्तश्छैत्सीद् यावदुदकꣳ समवायात्तावत्तावदन्ववसर्पासीति । स ह तावत्तावदेवान्ववससर्प । तदप्येतदुत्तरस्य गिरेर्मनोरवसर्पणमित्यौघो ह ताः सर्वाः प्रजा निरुवाहाथेह मनुरेवैकः परिशिशिषे ॥ ६ ॥

---

७१

शत. ब्रा. का. ४. अ. १. ब्रा. ५

[ अश्विच्यवनोपाख्यानम् ]

यत्र वै भृगवो वाङ्गिरसो वा स्वर्गं लोकꣳ समाश्नुवत तच्च्यवनो वा भार्गवश्च्यवनो वाङ्गिरसस्तदेव जीर्णिः कृत्यारूपो जहे ॥ १ ॥

शर्यातो ह वा इदं मानवो ग्रामेण चचार। स तदेव प्रतिवेशो नि विविशे। तस्य कुमाराः क्रीडन्त इमं जीर्णिं कृत्यारूपमनर्थ्यं मन्यमाना लोष्टैर्वि पिपिषुः ॥ २ ॥

स शार्यातेभ्यश्चुक्रोध। तेभ्योऽसंज्ञां चकार पितैव पुत्रेण युयुधे भ्राता भ्रात्रा ॥ ३ ॥

शर्यातो ह वा ईक्षां चक्रे। यत्किमकरं तस्मादिदमापदीति। स गोपालांश्चाविपालांश्च सꣳ ह्वयितवा उवाच ॥ ४ ॥

स होवाच। को वोऽद्येह किं चिदद्राक्षीदिति। ते होचुः। पुरुष एवायं जीर्णिः कृत्यारूपः शेते तमनर्थ्यं मन्यमानाः कुमारा लोष्टैर्व्यपिक्षन्निति। स विदां चकार स वै च्यवन इति ॥ ५ ॥

स रथं युक्त्वा सुकन्याꣳ शार्यातीमुपाधाय प्र सिष्यन्द। स आ जगाम यत्रर्षिरास तत्। ॥ ६ ॥

स होवाच। ऋषे नमस्ते यन्नावेदिषं तेनाहिꣳसिषम् इयꣳ सुकन्या तया तेऽप ह्नुवे सं जानीतां मे ग्राम इति। तस्य ह तत एव ग्रामः सं जज्ञे। स ह तत एव शर्यातो मानव उद्युयुजे नेदपरꣳ हिनसानीति ॥ ७ ॥

अश्विनौ ह वा इदं भिषज्यन्तौ चेरतुः । तौ सुकन्यामुपेयतुस्तस्यां मिथुनमीषाते तन्न जज्ञौ ॥ ८ ॥

तौ होचतुः । सुकन्ये कमिमं जीर्णिं कृत्यारूपमुप शेष आवामनुप्रेहीति । सा होवाच । यस्मै मां पिताऽदात्नैवाहं तं जीवन्तꣳ हास्यामीति तद्धायमृषिरा जज्ञौ ॥ ९ ॥

स होवाच । सुकन्ये किं त्वैतदवोचतामिति । तस्मा एतद् व्या चचक्षे । स ह व्याख्यात उवाच । यदि त्वैतत् पुनर्ब्रवतः सा त्वं ब्रूतात् न वै सुसर्वाविव स्थो न सुसमृद्धाविवाथ मे पतिं निन्दथ इति । तौ यदि त्वा ब्रवतः केनावमसर्वौ स्वः केनासमृद्धाविति सा त्वं ब्रूतात् पतिं नु मे पुनर्युवाणं कुरुतमथ वां वक्ष्यामीति । तां पुनरुपेयतुस्ताꣳ हैतदेवोचतुः ॥ १० ॥

सा होवाच । न वै सुसर्वाविव स्थो न सुसमृद्धाविवाथ मे पतिं निन्दथ इति । तौ होचतुः । केनावमसर्वौ स्वः केनासमृद्धाविति । सा होवाच । पतिं नु मे पुनर्युवाणं कुरुतमथ वां वक्ष्यामीति ॥ ११ ॥

तौ होचतुः । एतꣳ हृदमभ्यव हर स येन वयसा कमिष्यते तेनोदैष्यतीति तꣳ हृदमभ्यव जहार स येन वयसा चकमे तेनोदेयाय ॥ १२ ॥

तौ होचतुः । सुकन्ये केनायमसर्वौ स्वः केनासमृद्धाविति । तौ हर्षिरेव प्रत्युवाच । कुरुक्षेत्रेऽमी देवा यज्ञं तन्वते ते वां यज्ञादन्तर्यन्ति तेनासर्वौ स्थस्तेनासमृद्धाविति । तौ ह तत एवाश्विनौ प्रेयतुस्तावा जग्मतुर्देवान्यज्ञं तन्वानान्त्स्तुते बहिष्पवमाने ॥ १३ ॥

तौ होचतुः । उप नौ ह्वयध्वमिति । ते ह देवा ऊचुर्न वामुप ह्वयिष्यामहे बहु मनुष्येषु सꣳसृष्टमचारिष्टं भिषज्यन्ताविति ॥ १४ ॥

तौ होचतुः । विशीर्ष्णा वै यज्ञेन यजध्व इति । कथं विशीर्ष्णेत्युप नु नौ ह्वयध्वमथ वो वक्ष्याव इति । तथेति ता उपाह्वयन्त । ताभ्यामेतमाश्विनं ग्रहमगृह्णंस्तावध्वर्यू यज्ञस्याभवताम् । तावेतद्यज्ञस्य शिरः प्रत्यधत्ताम् । तददस्तद् दिवाकीर्त्यानां ब्राह्मणे व्याख्यायते यथा तद्यज्ञस्य शिरः

प्रतिदधतुस्तस्मादेष स्तुते बहिष्पवमाने ग्रहो गृह्यते स्तुते हि बहिष्पवमान आगच्छताम् ॥ १५ ॥

---

## ७२

शत. ब्रा. का. ५. अ. २. ब्रा. १

[ यूपारोहब्राह्मणम् ]

अथ नेष्टा पत्नीमुदानेष्यन् । कौशं वासः परिधापयति कौशं वा चण्डातकमन्तरं दीक्षितवसनाज्जघनार्धो वा एष यज्ञस्य यत् पत्नी तामेतत् प्राचीं यज्ञं प्रसादयिष्यन् भवति । अस्ति वै पत्न्या अमेध्यं यदवाचीनं नाभेर्मेध्या वै दर्भाः तद्यदेवास्या अमेध्यं तदेवास्या एतद् दर्भैर्मेध्यं कृत्वाथैनां प्राचीं यज्ञं प्रसादयति । तस्मान्नेष्टा पत्नीमुदानेष्यन् कौशं वासः परिधापयति कौशं वा चण्डातकमन्तरं दीक्षितवसनात् ॥ ८ ॥

अथ निश्रयणीं निश्रयति । स दक्षिणत उदङ् रोहेदुत्तरतो वा दक्षिणा दक्षिणतस्त्वेवोदङ् रोहेत् तथा ह्युदग् भवति ॥ ९ ॥

स रोक्ष्यन् जायामामन्त्रयते। जाय एहि स्वो रोहावेति। रोहावेत्याह जाया। तद्यज्जायामामन्त्रयतेऽर्धो ह वा एष आत्मनो यज्जाया। तस्माद्यावज्जायां न विन्दते नैव तावत् प्रजायतेऽसर्वो हि तावद्भवत्यथ यदैव जायां विन्दतेऽथ प्रजायते तर्हि हि सर्वो भवति। सर्व एतां गतिं गच्छानीति तस्माज्जायामामन्त्रयते ॥ १० ॥

स रोहति। प्रजापतेः प्रजा अभूमेति प्रजापतेर्ह्येष प्रजा भवति यो वाजपेयेन यजते ॥ ११ ॥

अथ गोधूमानुपस्पृशति। स्वर्देवा अगन्मेति स्वर्ह्येष गच्छति यो वाजपेयेन यजते ॥ १२ ॥

तद्यद् गोधूमानुपस्पृशति अन्नं वै गोधूमा अन्नं वा एष उज्जयति यो वाजपेयेन यजते। अन्नपेयꣳ ह वै नामैतद् यद्वाजपेयम्। तद्यदेवैतदन्नमुदजैषीत्तेनैवैतदेतां गतिं गत्वा सꣳ स्पृशते तदात्मन् कुरुते तस्माद् गोधूमानुपस्पृशति ॥ १३ ॥

अथ शीर्ष्णा यूपमत्युज्जिहीते। अमृता अभूमेति देवलोकमेवैतेनोज्जयति ॥ १४ ॥

अथ दिशोऽनुवीक्षमाणो जपति । अस्मे वो अस्त्विन्द्रियमस्मे नृम्णमुत क्रतुरस्मे वर्चाᳬंसि सन्तु व इति । सर्वं वा एष इदमुज्जयति यो वाजपेयेन यजते । प्रजापतिᳬं ह्युज्जयति । सर्वमु ह्येवेदं प्रजापतिः सोऽस्य सर्वस्य यश इन्द्रियं वीर्यᳬं संवृज्य तदात्मन् धत्ते तदात्मन् कुरुते तस्माद्दिशोऽनुवीक्षमाणो जपति ॥ १५ ॥

अथैनमूषपुटैरनूदस्यन्ति । पशवो वा ऊषा अन्नं वै पशवोऽन्नं वा एष उज्जयति यो वाजपेयेन यजते । अन्नपेयᳬं ह वै नामैतद्यद्वाजपेयं तद्यदेवैतदन्नमुदजैषीत् तेनैवैतदेतां गतिं गत्वा सᳬं स्पृशते तदात्मन् कुरुते तस्मादेनमूषपुटैरनूदस्यन्ति ॥ १६ ॥

आश्वत्थेषु पलाशेषूपनद्धा भवन्ति । यदेवादोऽश्वत्थे तिष्ठत इन्द्रो मरुत उपामन्त्रयत तस्मादाश्वत्थेषु पलाशेषूपनद्धा भवन्ति । विशोऽनूदस्यन्ति । विशो वै मरुतोऽन्नं विशस्तस्माद्विशोऽनूदस्यन्ति सप्तदश भवन्ति सप्तदशो वै प्रजापतिस्तत्प्रजापतिमुज्जयति ॥ १७ ॥

अथेमामुपावेक्षमाणो जपति । नमो मात्रे पृथिव्यै नमो मात्रे पृथिव्या इति । बृहस्पतेर्ह वा अभिषिषिचानात् पृथिवी बिभयाञ्चकार महद्वा अयमभूद्योऽस्यभिषेचि यद्वै मायं नावदृणीयादिति । बृहस्पतिर्ह पृथिव्यै बिभयाञ्चकार यद्वै मेयं नावधून्वीतेति । तदनयैवैतन्मित्रधेयमकुरुत न हि माता पुत्रꣳ हिनस्ति न पुत्रो मातरम् ॥ १८ ॥

बृहस्पतिसवो वा एष यद्वाजपेयम् । पृथिव्यु हैतस्माद् बिभेति महद्वा अयमभूद्योऽस्यभिषेचि यद्वै मायं नावदृणीयादिति । एष उ हास्यै बिभेति यद्वै मेयं नावधून्वीतेति । तदनयैवैतन्मित्रधेयं कुरुते नहि माता पुत्रꣳ हिनस्ति न पुत्रो मातरम् ॥ १९ ॥

अथ हिरण्यमभ्यवरोहति । अमृतमायुर्हिरण्यं तदमृत आयुषि प्रतितिष्ठति ॥ २० ॥

---

[ टिप्पणम् । शतपथब्राह्मणे य उदात्तादिस्वरनिर्देशप्रकारः स नातिप्रसिद्धत्वादत्र प्रदर्श्यते । यत्र द्वौ त्रयश्चत्वारो वा उदात्तास्तत्र अन्तिम एव प्रदर्श्यते नान्ये । उदात्तानुदात्तयोर्मेलनेन सञ्जायमानः स्वरित. स्ववर्णाव्यवहितपूर्ववर्णस्याधस्ताद् दत्तया अध-शायिन्याल्परेखया प्रदर्श्यते । अस्मिन् पुस्तके स एवंविधरेखाद्वयेन प्रदर्शितः । उदात्तादनुदात्तस्य स्वरितस्तु अनिर्दिष्ट एव तिष्ठति ॥ ]

ॐ

# *ऋग्वेदः

## १

म. १. सू. १

अग्निनामकं देवम् ईळे स्तौमि । ईड स्तुतौ इति धातुः । डकारस्य ळकारो बह्वृचाध्येतृसंप्रदायप्राप्तः । तथा च पठ्यते । अजमध्यस्थडकारस्य ळकारं बह्वृचा जगुः । अजमध्यस्थढकारस्य ळ्हकारं वै यथाक्रमम् ।। इति । मन्त्रस्य होत्रा प्रयोज्यत्वाद् अहं होता स्तौमि इति लभ्यते । कीदृशम् अग्निम् । यज्ञस्य पुरोहितम् । यथा राज्ञः पुरोहितः तदभीष्टं संपादयति तथा अग्निरपि यज्ञस्यापेक्षितं होमं संपादयति । देवं दानादिगुणयुक्तम् । होतारम् ऋत्विजम् । देवानां यज्ञेषु होतृनामकः ऋत्विग् अग्निरेव । तथा च श्रूयते । अग्निर्वै देवानां होता (ऐ. ब्रा. ३. १४) इति । रत्नधातमम् यागफलरूपाणां रत्नानाम् अतिशयेन धारयितारं पोषयितारं वा । ताम् एताम् ऋचं यास्क एवं व्याख्यातवान् । अग्निमीळे अग्निं याचामि । रत्नधातमं रमणीयानां धनानां दातृतमम् । (नि. ७. १५) इति ।। १ ।।

---

* अयं संक्षेपः श्रीसायणाचार्यविरचितं वेदार्थप्रकाशमाश्रित्य कृतः ।।

अयम् अग्निः पूर्वेभिः पुरातनैः भृग्वङ्गिरःप्रभृतिभिः ऋषिभिः ईड्यः स्तुत्यः। नूतनैः उत इदानींतनैः अस्माभिः अपि स्तुत्यः । सः अग्निः स्तुतः सन् इह यज्ञे देवान् हविर्भुजः आ वक्षति । वह प्रापणे इति धातुः । आवहतु इत्यर्थः । उत-शब्दो यद्यपि विकल्पार्थे प्रसिद्धः तथापि निपातत्वेन अनेकार्थत्वाद् औचित्येन अत्र समुच्चयार्थो द्रष्टव्यः ॥ २ ॥

योऽयं होत्रा स्तुत्यः अग्निः तेन अग्निना निमित्तभूतेन यजमानः रयिं धनम् अश्नवत् प्राप्नोति । कीदृशं रयिम् । दिवेदिवे पोषम् एव प्रतिदिनं पुष्यमाणतया वर्धमानमेव न तु कदाचिदपि क्षीयमाणम् । यशसं दानादिना यशोयुक्तम् । वीरवत्तमम् अतिशयेन पुत्रभृत्यादिवीरपुरुषोपेतम् । सति हि धने पुरुषाः संपद्यन्ते ॥ ३ ॥

हे अग्ने त्वं यं यज्ञं विश्वतः सर्वासु दिक्षु परिभूः परितः प्राप्तवान् असि सः इत् स एव यज्ञः देवेषु तृप्तिं प्रणेतुं स्वर्गे गच्छति । कीदृशं यज्ञम् । अध्वरं हिंसारहितम् । न ह्यग्निना सर्वतः पालितं यज्ञं राक्षसादयो हिंसितुं प्रभवन्ति ॥ ४ ॥

अयम् अग्निः देवः अन्यैः देवैः हविर्भोजिभिः सह आ गमत् अस्मिन् यज्ञे समागच्छतु । कीदृशोऽग्निः । होता होमनिष्पादकः । कविक्रतुः । कवि-शब्दोऽत्र क्रान्तवचनः न मेधाविनाम । क्रतुः प्रज्ञानस्य कर्मणो वा नाम । ततः क्रान्तप्रज्ञः क्रान्तकर्मा वा । सत्यः अनृतरहितः । फलमवश्यं

प्रयच्छति इत्यर्थः । चित्रश्रवस्तमः । श्रूयते इति श्रवः कीर्तिः । अतिशयेन विविधकीर्तियुक्तः ॥ ५ ॥

अङ्ग इत्यभिमुखीकरणार्थो निपातः । अङ्ग अग्ने हे अग्ने त्वं दाशुषे हविर्दत्तवते यजमानाय तत्प्रीत्यर्थं यत् भद्रं वित्तगृहप्रजापशुरूपं कल्याणं करिष्यसि तत् भद्रं तव इत् तवैव । सुखहेतुरिति शेषः । हे अङ्गिरः अग्ने एतच्च सत्यं न त्वत्र विसंवादोऽस्ति । यजमानस्य वित्तादिसंपत्तौ सत्याम् उत्तरक्रत्वनुष्ठानेन अग्नेरेव सुखं भवति । अङ्गिरा अङ्गारा ( नि. ३. १७ ) इति यास्कः । ऐतरेयिणोऽपि प्रजापति-दुहितृध्यानोपाख्याने समामनन्ति । येऽङ्गारा आसंस्तेऽङ्गि-रसोऽभवन् ( ऐ. ब्रा. ३. ३४ ) इति । तस्मात् अङ्गिरो-नामकमुनिकारणत्वात् अङ्गाररूपस्य अग्नेरङ्गिरस्त्वम् ॥६॥

हे अग्ने वयम् अनुष्ठातारः दिवेदिवे प्रतिदिनं दोषावस्तः रात्रौ अहनि च धिया बुद्ध्या नमः भरन्तः नमस्कारं संपादयन्तः उप समीपे त्वा एमसि त्वाम् आगच्छामः ॥ ७ ॥

कीदृशं त्वाम् । राजन्तं दीप्यमानम् । अध्वराणां राक्षस-कृतहिंसारहितानां यज्ञानां गोपां रक्षकम् । ऋतस्य सत्यस्य अवश्यंभाविनः कर्मफलस्य दीदिविं पौनःपुन्येन भृशं वा द्योतकम् । स्वे दमे स्वकीयगृहे यज्ञशालायां हविर्भिः वर्धमानम् ॥ ८ ॥

हे अग्ने सः त्वं नः अस्मदर्थं सूपायनः शोभनप्राप्ति-युक्तो भव । तथा नः अस्माकं स्वस्तये विनाशराहित्यार्थं

सचस्व समवेतो भव । तत्र उभयत्र दृष्टान्तः । यथा सूनवे पुत्रार्थं पिता सुप्रापः प्रायेण समवेतो भवति तद्वत् ॥ ९ ॥

---

२

म. १. सू. २५

हे वरुण यथा लोके विशः प्रजाः कदाचित् प्रमादं कुर्वन्ति तथा वयमपि ते तव संबन्धि यच्चिद्धि यदेव किञ्चित् व्रतं कर्म द्यविद्यवि प्रतिदिनं प्र मिनीमसि प्रमादेन हिंसितवन्तः ॥ १ ॥

हे वरुण जिहीळानस्य अनादरं कृतवतः हत्नवे हन्तुः पापिहननशीलस्य तव संबन्धिने त्वत्कर्तृकाय वधाय नः अस्मान् मा रीरधः संसिद्धान् विषयभूतान् मा कुरु । हृणानस्य हृणीयमानस्य क्रुद्धस्य तव मन्यवे क्रोधाय मा अस्मान् रीरधः । जिहीळानस्य । हेडृ अनादरे । हृणानस्य । हृणीङ् लज्जायाम् ॥ २ ॥

हे वरुण मृळीकाय अस्मत्सुखाय ते तव मनः गीर्भिः स्तुतिभिः वि सीमहि विशेषेण बध्नीमः । प्रसादयामः इत्यर्थः । तत्र दृष्टान्तः । रथीः रथस्वामी संदितं सम्यक् खण्डितं दूरगमनेन श्रान्तम् अश्वं न अश्वमिव । यथा स्वामी श्रान्तम् अश्वं घासप्रदानादिना प्रसादयति तद्वत् । संदितम् । दो अवखण्डने । सीमहि । षिञ् तन्तुसन्ताने । यद्वा षिञ् बन्धने ॥ ३ ॥

हे वरुण मे मम शुनःशेपस्य विमन्यवः क्रोधरहिताः बुद्धयः वस्यइष्टये वसीयसः अतिशयेन वसुमतः जीवनस्य प्राप्तये परा पतन्ति पराङ्मुखाः पुनरावृत्तिरहिताः प्रसरन्ति । हि-शब्दः अस्मिन्नर्थे सर्वजनप्रसिद्धिम् आह । परापतने दृष्टान्तम् आह । वयो न । पक्षिणो यथा वसतीः निवासस्थानानि उप सामीप्येन प्राप्नुवन्ति तद्वत् ॥ ४ ॥

मृळीकाय अस्मत्सुखाय वरुणं कदा कस्मिन् काले आ करामहे अस्मिन् कर्मणि आगतं करवाम । कीदृशम् । क्षत्रश्रियं बलसेविनम् । नरं नेतारम् । उरुचक्षसं बहूनां द्रष्टारम् ॥ ५ ॥

धृतव्रताय अनुष्ठितकर्मणे दाशुषे हविर्दत्तवते यजमानाय वेनन्तौ कामयमानौ । मित्रावरुणौ इति शेषः । तावुभौ समानं साधारणं तदित् अस्माभिर्दत्तं तदेव हविः आशाते अश्नुवाते । न प्र युच्छतः कदाचिदपि प्रमादं न कुरुतः ॥ ६ ॥

✓ अन्तरिक्षेण पतताम् आकाशमार्गेण गच्छतां वीनां पक्षिणां पदं यः वरुणः वेद । तथा समुद्रियः समुद्रे अवस्थितः वरुणः नावः जले गच्छन्त्याः पदं वेद जानाति । सः अस्मान् बन्धनात् मोचयतु इति शेषः ॥ ७ ॥

✓ धृतव्रतः स्वीकृतकर्मविशेषः यथोक्तमहिमोपेतः वरुणः प्रजावतः तदातदोत्पद्यमानप्रजायुक्तान् द्वादश मासः चैत्रादीन् फाल्गुनान्तान् जानाति । यः त्रयोदशः अधिकमासः उपजायते संवत्सरसमीपे स्वयमेव उत्पद्यते तमपि वेद । वाक्यशेषः पूर्ववत ॥ ८ ॥

उरोः विस्तीर्णस्य ऋष्वस्य दर्शनीयस्य बृहतः गुणैरधिकस्य वातस्य वायोः वर्तनिं मार्गं वेद वरुणो जानाति । ये देवाः अध्यासते उपरि तिष्ठन्ति तान् अपि वेद जानाति ॥ ९ ॥

धृतव्रतः पूर्वोक्तः वरुणः पस्त्यासु दैवीषु प्रजासु आ निषसाद आगत्य निषण्णवान् । किमर्थम् । प्रजानां साम्राज्यसिद्ध्यर्थम् । कीदृशः । सुक्रतुः शोभनकर्मा ॥ १० ॥

अतः अस्मात् वरुणात् विश्वानि अद्भुता सर्वाणि आश्चर्याणि चिकित्वान् प्रज्ञावान् अभि पश्यति सर्वतः अवलोकयति । या कृतानि यानि आश्चर्याणि पूर्वं वरुणेन संपादितानि । चकारात् अन्यानि यानि आश्चर्याणि कर्त्वा इतः परं कर्तव्यानि तानि सर्वाणि अभिपश्यति इति पूर्वत्र अन्वयः ॥ ११ ॥

सुक्रतुः शोभनप्रज्ञः सः आदित्यः वरुणः विश्वाहा सर्वेषु अहःसु नः अस्मान् सुपथा शोभनमार्गेण सहितान् करत् करोतु । किंच नः अस्माकम् आयूंषि प्र तारिषत् प्रवर्धयतु ॥ १२ ॥

हिरण्ययं सुवर्णमयं द्रापिं कवचं बिभ्रत् धारयन् वरुणः निर्णिजं पुष्टं स्वशरीरं वस्त आच्छादयति । स्पशः हिरण्यस्पर्शिनो रश्मयः परि नि षेदिरे सर्वतो निषण्णाः ॥१३॥

दिप्सवः हिंसितुमिच्छन्तः वैरिणः यं वरुणं न दिप्सन्ति भीताः सन्तः हिंसितुमिच्छां परित्यजन्ति । जनानां प्राणिनां

द्रुह्वाणः द्रोग्धारोऽपि यं वरुणं प्रति न द्रुह्यन्ति । अभिमातयः पाप्मानः देवं तं वरुणं न स्पृशन्ति ॥ १४ ॥

अपि च यः वरुणः मानुषेषु यशः अन्नम् आ चक्रे सर्वतः कृतवान् । स वरुणः कुर्वन्नपि आ असामि संपूर्णं चक्रे न तु न्यूनं कृतवान् । विशेषतः अस्माकम् उदरेषु आ सर्वतः चक्रे ॥ १५ ॥

✓ उरुचक्षसं बहुभिर्द्रष्टव्यं वरुणम् इच्छन्तीः मे धीतयः शुनःशेपस्य बुद्धयः परा यन्ति पराङ्मुखाः निवृत्तिरहिताः गच्छन्ति । तत्र दृष्टान्तः । गावो न । यथा गावः गव्यूतीरनु गोष्ठानि अनुलक्ष्य गच्छन्ति तद्वत् ॥ १६ ॥

यतः यस्मात् कारणात् मे मज्जीवनार्थं मधुरं हविः आभृतम् अञ्जःसवाख्ये कर्मणि संपादितम् अतः कारणात् होतेव होमकर्तेव त्वमपि प्रियं हविः क्षदसे अश्नासि । पुनः हविःस्वीकारादूर्ध्वं तृप्तस्त्वं जीवन्नहं च नु अवश्यं सं वोचावहै संभूय प्रियवार्ता करवावहे ॥ १७ ॥

विश्वदर्शतं सर्वदर्शनीयम् अस्मदनुग्रहार्थम् अत्र आविर्भूतं वरुणं दर्शं नु अहं दृष्टवान् खलु । क्षमि क्षमायां भूमौ रथं वरुणसंबन्धिनम् अधि दर्शम् आधिक्येन दृष्टवानस्मि । एताः उच्यमानाः मे गिरः मदीयाः स्तुतीः जुषत वरुणः सेवितवान् ॥ १८ ॥

हे वरुण मे मदीयम् इमं हवम् आह्वानं श्रुधि शृणु । किंच अद्य अस्मिन् दिने मृळय अस्मान् सुखय । अवस्युः

रक्षणेच्छुः अहं त्वां वरुणम् आभिमुख्येन चक्रे शब्दयामि स्तौमि इत्यर्थः ॥ १९ ॥

हे मेधिर मेधाविन् वरुण त्वं दिवश्च द्युलोकस्यापि ग्मश्च भूलोकस्यापि एवमात्मकस्य विश्वस्य सर्वस्य जगतः मध्ये राजसि दीप्यसे । सः तादृशः त्वं यामनि क्षेमप्रापणे अस्मदीये प्रति श्रुधि प्रतिश्रवणम् आज्ञापनं कुरु । रक्षिष्यामि इति प्रत्युत्तरं देहि इत्यर्थः ॥ २० ॥

नः अस्माकम् उत्तमं शिरोगतं पाशम् उत् मुमुग्धि उत्कृत्य मोचय । मध्यमम् उदरगतं पाशं वि चृत वियुज्य नाशय । जीवसे जीवितुम् । अधमानि मदीयान् पादगतान् पाशान् अव चृत अवकृष्य नाशय ॥ २१ ॥

---

३

म. १. सू. ३२

वज्री वज्रयुक्तः इन्द्रः प्रथमानि पूर्वसिद्धानि मुख्यानि वा यानि वीर्याणि पराक्रमयुक्तानि कर्माणि चकार तस्य इन्द्रस्य तानि वीर्याणि नु क्षिप्रं प्रवीमि । कानि वीर्याणि इति तदुच्यते । अहिं मेघम् अहन् हतवान् । तदेतद् एकं वीर्यम् । अनु पश्चाद् अपः जलानि ततर्द हिंसितवान् । भूमौ पातितवान् इत्यर्थः । इदं द्वितीयं वीर्यम् । पर्वतानां संबन्धिनीः

वक्षणाः प्रवहणशीलाः नदीः प्र अभिनत् भिन्नवान् । कूलद्वयकर्षणेन प्रवाहितवान् इत्यर्थः । इदं तृतीयं वीर्यम् । एवमुत्तरत्रापि द्रष्टव्यम् ॥ १ ॥

पर्वते शिश्रियाणम् आश्रितम् अहिं मेघम् अहन् हतवान् । अस्मै इन्द्राय स्वर्यं सुष्ठु प्रेरणीयं यद्वा शब्दनीयं स्तुत्यं त्वष्टा विश्वकर्मा वज्रं ततक्ष तनूकृतवान् । तेन वज्रेण मेघे भिन्ने सति स्यन्दमानाः प्रस्रवणयुक्ताः आपः समुद्रम् अञ्जः सम्यक् अव जग्मुः प्राप्ताः । तत्र दृष्टान्तः । वाश्राः वत्सान् प्रति हम्भारवोपेताः धेनवः इव । यथा धेनवः सहसा वत्सगृहे गच्छन्ति तद्वत् ॥ २ ॥

वृषायमाणः वृष इव आचरन् इन्द्रः सोमम् अवृणीत वृतवान् । त्रिकद्रुकेषु । ज्योतिः गौः आयुः इत्येतन्नामकाः त्रयो यागाः त्रिकद्रुकाः उच्यन्ते । तेषु सुतस्य अभिषुतस्य सोमस्य अंशम् अपिबत् पीतवान् । मघवा धनवान् इन्द्रः सायकं बन्धकं वज्रम् आ अदत्त स्वीकृतवान् । तेन च वज्रेण अहीनां मेघानां मध्ये प्रथमजां प्रथमोत्पन्नं मेघम् अहन् हतवान् ॥ ३ ॥

उत अपि च हे इन्द्र यत् यदा अहीनां मेघानां मध्ये प्रथमजां प्रथमोत्पन्नं मेघम् अहन् हतवानसि आत् तदनन्तरं मायिनां मायोपेतानाम् असुराणां संबन्धिनीः मायाः प्र अमिनाः प्रकर्षेण नाशितवानसि । अनन्तरं सूर्यम् उषसम् उषःकालं द्याम् आकाशं च जनयन् उत्पादयन् आवरकमेघनिवारणेन

प्रकाशयन् वर्तसे । तादीत्ना तदानीम् आवरकान्धकाराभावात् शत्रुं घातकं वैरिणं न विवित्से किल त्वं न लब्धवान् खलु ॥ ४ ॥

अयम् इन्द्रः वज्रेण संपादितो यो महान् वधः तेन वृत्रतरम् अतिशयेन लोकानाम् आवरकम् अन्धकाररूपम् । यद्वा वृत्रैः आवरणैः सर्वान् शत्रून् तरति तम् । वृत्रम् एतन्नामकमसुरं व्यंसं विगतांसं छिन्नबाहुः यथा भवति तथा अहन् हतवान् । अंसच्छेदे दृष्टान्तः । कुलिशेन कुठारेण विवृक्णा विशेषतः छिन्नानि स्कन्धांसीव । यथा वृक्षस्कन्धाः छिन्नाः भवन्ति तद्वत् । तथा सति अहिः वृत्रः पृथिव्या उपरि उपपृक् सामीप्येन संपृक्तः शयते शयनं करोति । छिन्नकाष्ठवद् भूमौ पतति इत्यर्थः ॥ ५ ॥

दुर्मदः दुष्टमदोपेतः दर्पयुक्तः वृत्रः अयोद्धेव योद्धृरहित इव इन्द्रम् आ जुह्वे हि आहूतवान् खलु । कीदृशम् इन्द्रम् । महावीरं गुणैः महान् भूत्वा शौर्योपेतम् । तुविबाधं बहूनां बाधकम् । ऋजीषं शत्रूणाम् अपार्जकम् । अस्य ईदृशस्य इन्द्रस्य संबन्धिनो ये शत्रुवधाः सन्ति तेषां वधानां समृतिं संगमं नातारीत् पूर्वोक्तः दुर्मदः तरीतुं न अशक्नोत् । इन्द्रशत्रुः इन्द्रः शत्रुः घातको यस्य वृत्रस्य तादृशो वृत्रः इन्द्रेण हतो नदीषु पतितः सन् रुजानाः नदीः सं पिपिषे सम्यक् पिष्टवान् । सर्वान् लोकान् आवृण्वतो वृत्रदेहस्य पातेन नदीनां कूलानि तत्रत्यपाषाणादिकं च चूर्णीभूतम् इत्यर्थः । रुजन्ति कूलानि इति

रुजानाः नद्यः । रुजाना नद्यो भवन्ति रुजन्ति कूलानि (नि. ६. ४) इति यास्कः ॥ ६ ॥

अपात् वज्रेण छिन्नत्वात् पादरहितः अहस्तः हस्तरहितः वृत्रः इन्द्रम् उद्दिश्य अपृतन्यत् पृतनां युद्धम् ऐच्छत् । द्वेषाधिक्येन बहुधा विद्धोऽपि युद्धं न परित्यक्तवान् इत्यर्थः । अस्य हस्तपादहीनस्य वृत्रस्य सानौ पर्वतसानुसदृशे प्रौढस्कन्धे अधि उपरि वज्रम् आ जघान इन्द्रः आभिमुख्येन प्रक्षिप्तवान् । अशक्तस्यापि युद्धेच्छायां दृष्टान्तः । वध्रिः छिन्नमुष्कः नपुंसकीकृतः पुरुषः वृष्णः रेतःसेचनसमर्थस्य पुरुषशक्तियुक्तस्य पुरुषान्तरस्य प्रतिमानं सादृश्यं बुभूषन् प्राप्तुमिच्छन् यथा न शक्नोति तद्वद् अयम् इति शेषः । सः वृत्रः पुरुत्रा बहुषु अवयवेषु व्यस्तः विविधं क्षिप्तः ताडितः सन् अशयत् भूमौ पतितवान् ॥ ७ ॥

अमुया अमुष्यां पृथिव्यां शयानं पतितं मृतं वृत्रम् आपः जलानि अति यन्ति अतिक्रम्य गच्छन्ति । तत्र दृष्टान्तः । भिन्नं बहुधाभिन्नकूलं नदं न सिन्धुमिव । यथा वृष्टिकाले प्रभूता आपः नद्याः कूलं भित्त्वा अतिक्रम्य गच्छन्ति तद्वत् । कीदृश्य आपः । मनो रुहाणाः नृणां चित्तम् आरोहन्त्यः । पुरा वृत्रे जीवति सति तेन निरुद्धाः मेघस्थिता आपः भूमौ वृष्टा न भवन्ति तदानीं नृणां मनः खिद्यते । मृते तु वृत्रे निरोधरहिता आपः वृत्रशरीरम् उल्लङ्घ्य प्रवहन्ति । तदा वृष्टिलाभेन मनुष्याः तुष्यन्ति इत्यर्थः । तदेतद् उत्तरार्धेन स्पष्टीक्रियते । वृत्रः जीवनदशायां महिना स्वकीयेन महिम्ना

यास्चित् या एवं मेघगता अपः पर्यतिष्ठत् परिवृत्य स्थितवान् अहिः वृत्रो मेघः तासाम् अपां पत्सुतःशीः पादस्य अधःशयानः बभूव । यद्यपि अपां पादो नास्ति तथापि अद्भिः वृत्रस्य अभिलङ्घितत्वात् पादस्य अधःशयनम् उच्यते ॥ ८ ॥

वृत्रपुत्रा वृत्रः पुत्रो यस्याः मातुः सेयं माता वृत्रपुत्रा नीचावयाः न्यग्भावं प्राप्ता हता अभवत्। पुत्रं प्रहाराद् रक्षितुं पुत्रदेहस्योपरि तिरश्ची पतितवती इत्यर्थः । तदानीम् अयम् इन्द्रः अस्याः मातुः अव अधोभागे वृत्रस्य उपरि वधः हनन-साधनम् आयुधं जभार प्रहृतवान् । तदानीं सूः माता उत्तरा उपरिस्थिता आसीत् । पुत्रस्तु अधोभागस्थितः आसीत् । सा च दानुः दानवी वृत्रमाता शये मृता शयनं कृतवती । तत्र दृष्टान्तः । धेनुः लोकप्रसिद्धा गौः सहवत्सा न यथा वत्ससहिता शयनं करोति तद्वत् ॥ ९ ॥

वृत्रस्य शरीरम् आपः वि चरन्ति विशेषेण उपरि आक्रम्य प्रवहन्ति । कीदृशं शरीरम् । निण्यं निर्नामधेयम् । अप्सु मग्नत्वेन गूढत्वात् तदीयं नाम न केनापि ज्ञायते । एतदेव स्पष्टीक्रियते । काष्ठानाम् अपां मध्ये निहितं निक्षिप्तम् । कीदृशानां काष्ठानाम् । अतिष्ठन्तीनां स्थिति-रहितानाम् । अनिवेशनानाम् उपवेशनरहितानां प्रवहणस्वभाव-त्वात् । एतासां मनुष्यवत् न क्वापि स्थितिः संभवति । इन्द्रशत्रुः वृत्रः जलमध्ये शरीरे प्रक्षिप्ते सति दीर्घनिद्रात्मकं मरणं यथा भवति तथा आ अशयत् सर्वतः पतितवान् । अत्र यास्कः । अतिष्ठन्तीनाम् अनिविशमानानाम् इति अस्थावराणां

काष्ठानां मध्ये निहितं शरीरं मेघः । शरीरं शृणातेः शम्नातेर्वा । वृत्रस्य निण्यं निर्णामं विचरन्ति विजानन्ति आप इति । दीर्घं द्राघतेः । तमः तनोतेः । आशयद् आशेतेः । इन्द्रशत्रुः । इन्द्रोऽस्य शमयिता वा शातयिता वा तस्माद् इन्द्रशत्रुः । तत् को वृत्रः । मेघ इति नैरुक्ताः । त्वाष्ट्रोऽसुर इति ऐतिहासिकाः । (नि. २.१६) इति ॥१०॥

दासपत्नीः दासः विश्वोपक्षपणहेतुः वृत्रः पतिः स्वामी यासाम् अपां ताः दासपत्नीः । अत एव अहिगोपाः । अहिः वृत्रः गोपाः रक्षकः यासां ताः । गोपनं नाम स्वच्छन्देन यथा न प्रवहन्ति तथा निरोधनम् । एतदेव स्पष्टीक्रियते । आपः निरुद्धा अतिष्ठन् इति । तत्र दृष्टान्तः । पणिनेव गावः । पणिनामकः असुरः गा अपहृत्य बिले स्थापयित्वा बिलद्वारम् आच्छाद्य यथा निरुद्धवान् तथा इत्यर्थः । अपां यद् बिलं प्रवहणद्वारं अपिहितं वृत्रेण निरुद्धम् आसीत् तद् बिलं प्रवहणद्वारं वृत्रं जघन्वान् हतवान् इन्द्रः अप ववार अपवृतम् अकरोत् । वृत्रकृतम् अपां निरोधं परिहृतवान् । अत्र यास्कः । दासपत्नीः दासाधिपत्न्यः । दासो दस्यतेः उपदासयति कर्माणि । अहिगोपा अतिष्ठन् अहिना गुप्ताः । अहिः अयनात् एति अन्तरिक्षे । अयमपि इतरोऽहिः एतस्मादेव । निर्ह्रसितोपसर्ग आहन्तीति । निरुद्धा आपः पणिनेव गावः ।\पणिर्वणिग् भवति । पणिः पणनात् । *वणिक् पण्यं नेनेक्ति ।\ अपां बिलम् अपिहितं यद् आसीत् ।* बिलं भरं भवति बिभर्तेः । वृत्रं जघ्निवान् अपववार । तद्

वृत्रो वृणोतेर्वा वर्ततेर्वा वर्धतेर्वा । यदवृणोत् तद् वृत्रस्य वृत्रत्वमिति विज्ञायते । यदवर्तत तद् वृत्रस्य वृत्रत्वमिति विज्ञायते । यदवर्धत तद् वृत्रस्य वृत्रत्वमिति विज्ञायते । (नि. २.१७) इति ॥ ११ ॥

सृके वज्रे । देवः दीप्यमानः सर्वायुधकुशलः एकः अद्वितीयः वृत्रः यत् यदा त्वा त्वां प्रत्यहन् प्रतिकूलत्वेन प्रहृतवान् तत् तदानी त्वम् अश्व्यो वारः अश्वसंबन्धी वालः अभवः । यथा अश्वस्य वालः, अनायासेन मक्षिकादीन् निवारयति तद्वत् वृत्रम् अगणयित्वा निराकृतवान् इत्यर्थः । किंच गाः पणिना अपहृताः त्वम् अजयः जितवान् । हे शूर शौर्ययुक्त इन्द्र सोमम् अजयः जितवान् । तथा च तैत्तिरीयाः त्वष्टा हतपुत्र इत्यस्मिन्नुपाख्याने समामनन्ति । स यज्ञवेशसं कृत्वा प्रासहा सोममपिबत् (तै. सं. २. ४. १२. १) इति । सप्त सिन्धून् इमं मे गङ्गे (ऋ. १०.७५.५) इत्यस्याम् ऋचि आम्नाताः गङ्गाद्याः सप्तसंख्याकाः नदीः सर्तवे सर्तुं प्रवाहरूपेण गन्तुम् अवासृजः त्यक्तवान् । वृत्रकृतं प्रवाहनिरोधं निराकृतवान् इत्यर्थः ॥१२॥

इन्द्रं निषेद्धुं वृत्रो यान् विद्युदादीन् मायया निर्मितवान् ते सर्वेऽपि एनं निषेद्धुम् अशक्ताः । सोऽयमर्थः अनेन मन्त्रेण उच्यते । अस्मै इन्द्रार्थं निर्मिता विद्युत् न सिषेध इन्द्रं न प्राप्नोत् । तथा तन्यतुः गर्जनम् । यां मिहं यां वृष्टिम् अकिरत् वृत्रो विक्षिप्तवान् सापि वृष्टिः न सिषेध । ह्रादुनिं च

अशनिमपि यां वृत्रः प्रयुक्तवान् सापि न सिषेध । इन्द्रश्च अहिश्च इन्द्रवृत्रौ उभावपि यत् यदा युयुधाते युद्धं कृतवन्तौ तदानीं विद्युदादयो न प्राप्ता इति । उत अपि च मघवा धनवान् इन्द्रः अपरीभ्यः अपराभ्यः अन्यासामपि वृत्रनिर्मितानां मायानां सकाशात् वि जिग्ये विशेषेण जितवान् ॥ १३ ॥

हे इन्द्र जघ्नुषः वृत्रं हतवतः तव हृदि चित्ते यत् यदि भीः अगच्छत् न हतवानस्मीति बुद्ध्या भयं प्राप्नुयात् तर्हि अहेः वृत्रस्य यातारं हन्तारं कम् अपश्यः त्वत्तः अन्यं कं पुरुषं दृष्टवानसि । तादृशस्य पुरुषान्तरस्य अभावात् मा भूत् तव भयम् इत्यर्थः । यत् यस्मात् कारणात् त्वं नव च नवतिं च स्रवन्तीः एकोनशतसंख्याकाः प्रवहन्तीः नदीः प्राप्य रजांसि तत्रत्यानि उदकानि अतरः तीर्णवानसि । तत्र दृष्टान्तः । श्येनो न । श्येननामको बलवान् पक्षी इव । दूरगमनात् तव भयमासीद् इति गम्यते । तद्भयं मा भूत् इति अभिप्रायः । तच्च दूरगमनं ब्राह्मणे समाम्नातम् । इन्द्रो वै वृत्रं हत्वा नास्तृषीति मन्यमानः पराः परावतोऽगच्छत् (ऐ. ब्रा. ३. १५) इति । तैत्तिरीयाश्चामनन्ति । इन्द्रो वृत्रं हत्वा परां परावतमगच्छत् अपाराधमिति मन्यमानः (तै. सं. २. ५. ३. ६) इति ॥ १४ ॥

वज्रबाहुः इन्द्रः शत्रौ हते सति निःसपत्नो भूत्वा यातः गच्छतः जङ्गमस्य अवसितस्य एकत्रैव स्थितस्य स्थावरस्य शमस्य शान्तस्य शृङ्गराहित्येन प्रहरणादौ अप्रवृत्तस्य अश्वगर्दभादेः शृङ्गिणः शृङ्गोपेतस्य उग्रस्य महिषबलीवर्दादेश्च

राजा अभूत् । सेदु स एव इन्द्रः चर्षणीनां मनुष्याणां राजा भूत्वा क्षयति निवसति । ता तानि पूर्वोक्तानि जङ्गमादीनि सर्वाणि परि बभूव व्याप्तवान् । तत्र दृष्टान्तः । अरान् न नेमिः । यथा रथचक्रस्य परितो वर्तमाना नेमिः अरान् नाभौ कीलितान् काष्ठविशेषान् व्याप्नोति तद्वत् ॥ १५ ॥

---

४

म. १. सू. ९२

उ इत्येतत् पादपूरणम् । त्याः ताः एताः उषसः प्रभातकालाभिमानिन्यो देवताः । केतुम् अन्धकारावृतस्य सर्वस्य जगतः प्रज्ञापकं प्रकाशम् अक्रत कृतवत्यः । यस्माद् एवं तस्मात् उषसः रजसः अन्तरिक्षलोकस्य पूर्वे अर्धे प्राचीनदिग्भागे भानुं प्रकाशम् अञ्जते व्यक्तीकुर्वन्ति । धृष्णवः, घर्षणशीला योद्धारः आयुधानीव यथा असिप्रभृतीनि आयुधानि संस्कुर्वन्ति एवं निष्कृण्वानाः स्वभासा जगत् संस्कुर्वाणाः गावः गमनस्वभावाः अरुषीः आरोचमानाः मातरः सूर्यप्रकाशस्य निर्मात्र्यः जगज्जनन्यो वा उषसः प्रति यन्ति प्रतिदिवसं गच्छन्ति । एवंविधा उषसः अस्मान् रक्षन्तु इत्यर्थः । अत्र निरुक्तम् । एतास्ता उषसः केतुमकृषत प्रज्ञानम् । एकस्या एव पूजनार्थे बहुवचनं स्यात् । पूर्वेऽर्धे अन्तरिक्षलोकस्य । समञ्जते भानुना । निष्कृण्वाना आयुधानीव धृष्णवः । निरित्येष समित्येतस्य स्थाने । . . . प्रति

यन्ति । गावो गमनात् । अरुपीः आरोचनात् । मातरः भासो निर्मात्र्यः ( नि. १२. ७ ) इति ॥ १ ॥

अरुणाः आरोचमानाः भानवः औपस्यो दीप्तयः वृथा अनायासेन स्वयमेव उदपप्तन् उदगमन् । तदनन्तरम् उपसश्च स्वायुजः सुखेन रथे आयोक्तुं शक्याः अरुपीः शुभ्रवर्णाः गाः पूर्वमुत्थितान् रश्मीन् ईदृशीः स्ववाहनभूताः चतुष्पदीः गाः एव वा अयुक्षत स्वरथे अयोजयन् । उक्तं च अरुण्यो गावः उपसाम् ( निघण्टु १. १५. ७ ) इति । एवं गोभिर्युक्तं रथम् आरुह्य उपसः पूर्वथा पूर्वेषु अतीतेषु अहःसु इव वयुनानि सर्वेषां प्राणिनां ज्ञानानि अक्रन् अकार्षुः । उपःकाले जाते हि सर्वे प्राणिनः ज्ञानयुक्ताः भवन्ति । तदनन्तरम् अरुपीः आरोचमानाः ता उपसः रुशन्तम् । रुशदिति वर्णनाम रोचतेर्ज्वलतिकर्मणः ( नि. २. २० ) इति यास्कः । शुभ्रवर्णं भानुं सूर्यम् अशिश्रयुः असेवन्त । तेन सह एकीभवन्ति इत्यर्थः ॥ २ ॥

नारीः नेत्र्यः उपसः विष्टिभिः निवेशकैः स्वकीयैः तेजोभिः समानेन योजनेन एकेनैव योजनेन, उद्योगेन आ परावतः आ दूरदेशात् आ पश्चिमदिग्भागात् अर्चन्ति नभःप्रदेशं पूजयन्ति । कृत्स्नं जगद् युगपदेव व्याप्नुवन्ति इत्यर्थः । तत्र दृष्टान्तः । अपसो न । युद्धकर्मोपेताः पुरुषाः यथा स्वकीयैः आयुधैः धाटीमुखेन सर्वं देशं व्याप्नुवन्ति तद्वत् । किं कुर्वत्यः । सुकृते शोभनस्य कर्मणः कर्त्रे सुन्वते सोमाभिषवं कुर्वते सुदानवे कल्याणीर्दक्षिणाः ऋत्विग्भ्यो ददते यजमानाय

विश्वेदह सर्वमेव इषम् अन्नं वहन्तीः आवहन्त्यः प्रयच्छन्त्यः इत्यर्थः ॥ ३ ॥

उषाः पेशांसि जगत्सु आश्लिष्टानि कृष्णवर्णानि तमांसि अधि आधिक्येन वपते छिनत्ति । तत्र दृष्टान्तः । नृतूरिव । नृन् तूर्वति केशेन रिक्तीकरोति इति नृतूः नापितः । स यथा केशान् निःशेषेण छिनत्ति एवम् उषा अपि अन्धकारं समूलं हिनस्ति इत्यर्थः । यद्वा नृतूरिव नृत्यन्ती योषिदिव । पेशांसि । रूपनामैतत् । सर्वैर्दर्शनीयानि रूपाणि उषा अधि वपते स्वात्मनि अधिकं धारयति । एवं प्रथमतः अन्धकारं स्वकिरणैर्निरस्य वक्षः स्वकीयम् उरःप्रदेशम् अपोर्णुते तमसा अनाच्छादितं करोति । स्वयम् आविर्भवति इत्यर्थः । बर्जहं पयसः उत्पत्तिस्थानं दोहनसमये उस्रा गौः यथा आविष्करोति तद्वत् । किं कुर्वती । गावो न व्रजम् । यथा गावः स्वकीयं गोष्ठं स्वयमेव शीघ्रं व्याप्नुवन्ति एवं स्वयमेव प्राचीं दिशं प्राप्य विश्वस्मै भुवनाय सर्वस्मै लोकाय ज्योतिः कृण्वती प्रकाशं कुर्वती । एवमुक्तेन प्रकारेण उषाः तमः अन्धकारं वि आवः विवृतम् अपश्लिष्टम् अकरोत् ॥ ४ ॥

अस्याः उषसः रुशत् दीप्यमानम् अर्चिः तेजः प्रति अदर्शि सर्वैः पूर्वस्यां दिशि प्रथमतो दृश्यते । वि तिष्ठते सर्वासु दिक्षु विविधमवतिष्ठते व्याप्नोति इत्यर्थः । सर्वाः दिशो व्याप्य च अभ्वम् । महन्नामैतत् । अतिशयेन विपुलं कृष्णं कृष्णवर्णम् अन्धकारं बाधते अपसारयति । विदथेषु यज्ञेषु स्वरुं न स्वरुनाम्ना शकलेन युक्तं यूपं यथा अध्वर्यवः

अञ्जन् अञ्जन्ति तद्वत् नभसि स्वकीयं पेशः रूपम् उषाः अनक्ति संश्लिष्टं करोति । तदनन्तरं चित्रं चायनीयं भानुं सूर्यं दिवो दुहिता द्युलोकादुत्पन्ना उषाः अश्रेत् असेवत ॥ ५ ॥

अस्य नैशस्य तमसः अन्धकारस्य पारं समाप्तिप्रदेशम् अतारिष्म उत्तीर्णा अभूम । अनन्तरम् उच्छन्ती नैशं तमो वर्जयन्ती उषाः वयुना वयुनानि सर्वेषां प्राणिनां ज्ञानानि कृणोति निर्मिमीते । श्रिये संपदर्थं छन्दो न स्मयते । यथा उपच्छन्दयिता वशीकरणे समर्थः पुरुषः आढ्यसमीपं प्राप्य तत्प्रीत्यर्थं स्मयते हसति एवं विभाती विशिष्टप्रकाशं कुर्वती उषाः स्वकीयया निर्मलदीप्त्या हसन्तीव दृश्यते । एवं सुप्रतीका विशिष्टप्रकाशरूपत्वेन शोभनाङ्गी सती सौमनसाय सर्वेषां सौमनस्याय अजीगः अन्धकारं भक्षितवती ॥ ६ ॥

भास्वती तेजस्विनी सूनृतानां प्रियसत्यात्मिकानां वाचां नेत्री प्रणेत्री कारयित्री । उषसि हि जातायां मनुष्यप्रमुखाः प्राणिनः स्वस्वव्यापाराय इतस्ततः शब्दं कुर्वन्ति । एवंभूता दिवः दुहिता द्युलोकसकाशाद् उत्पन्ना उषाः गोतमेभिः ऋषिभिः अस्माभिः स्तवे स्तूयते । हे उषः अस्माभिः स्तुता त्वं वाजान् अन्नानि उप मासि प्रयच्छ । कीदृशान् वाजान् । प्रजावतः प्रजाभिः पुत्रपौत्रादिभिः युक्तान् । नृवतः दासलक्षणैः नृभिरुपेतान् । अश्वबुध्यान् । अश्वाः बुध्याः विद्यमानत्वेन बोद्धव्याः येषु वाजेषु तान् । यद्वा अश्वबुध्नान् । वर्णव्यापत्त्या यकारः । अश्वमूलान् ।

अश्वैर्हि राजानो धनानि अन्नानि च लभन्ते । अतः अन्नानां तन्मूलत्वम् । गोअग्रान् । गावः अग्रे प्रमुखे येषां तादृशान् ॥ ७ ॥

हे उषः उषोदेवते तं रयिं धनम् अश्यां प्राप्नुयाम् । कीदृशम् । यशसं यशसा कीर्त्या युक्तम् । सर्वैः प्रशस्यम् इत्यर्थः । सुवीरं शोभनैः वीरैः पुत्रादिभिः युक्तम् । दासप्रवर्गम् । प्रकृष्टो वर्गः संघः प्रवर्गः । दासानां कर्मकराणां प्रवर्गो यस्मिन् तम् । अनेकैः भृत्यैः उपेतम् इत्यर्थः । अश्वबुध्यम् । अश्वाः बुध्याः बोद्धव्याः येन धनेन तादृशम् । हे सुभगे शोभनधने उषः सुदंससा शोभनेन कर्मणा युक्तेन श्रवसा श्रवणीयेन स्तोत्रेण प्रीता त्वं वाजप्रसूता अस्मभ्यं दत्तान्ना सती या बृहन्तं प्रौढं यं रयिं विभासि विशेषेण प्रकाशयसि ॥ ८ ॥

देवी द्योतमाना उषाः विश्वानि सर्वाणि भुवना भुवनानि भूतजातानि अभिचक्ष्य अभिप्रकाश्य प्रकाशवन्ति कृत्वा अनन्तरं प्रतीची प्रत्यङ्मुखी सती चक्षुः प्रकाशकेन तेजसा उर्विया उर्वी विस्तीर्णा सती वि भाति प्रकाशते । अपि च विश्वं जीवं सर्वं प्राणिजातं चरसे चरणाय स्वस्वव्यापारेषु प्रवर्तनाय बोधयन्ती निद्रातः सकाशात् उद्बोधयन्ती उषाः विश्वस्य सर्वस्य मनायोः मनसा युक्तस्य वाग्व्यवहारसमर्थस्य या वाग् अस्ति तां वाचम् अविदत् अलभत ॥ ९ ॥

पुनःपुनर्जायमाना प्रतिदिवसं सूर्योदयात् पूर्वं प्रादुर्भवन्ती । पुराणी चिरंतनी नित्या इत्यर्थः । यस्मात् समानं वर्णम्

एकमेव रूपम् अभि प्राप्य शुम्भमाना शोभमाना । विभिन्नेष्वपि दिवसेषु अस्या ऐकरूप्येण अवस्थानात् नित्यत्वम् इत्यर्थः । एवंगुणविशिष्टा देवी देवनशीला उषाः मर्तस्य मरणधर्मणः सर्वस्य प्राणिजातस्य आयुः जीवनं जरयन्ती ऊनयन्ती वर्तते । बह्वीषु उषःसु अतीतासु हि सर्वेषाम् आयुर्हीयते । उषाश्च पुनःपुनर्जायमाना इत्युक्तम् अतः सा एव आयुर्जरयति । तत्र दृष्टान्तः । कृत्नुः कर्तनशीला श्वघ्नीव व्याधस्त्रीव । सा यथा विजः चलतः पक्षिणः आमिमाना पक्षादिच्छेदनेन हिंसन्ती तेषामायुर्जरयति तद्वत् ॥ १० ॥

दिवः नभसः अन्तान् प्रान्तान् व्यूर्ण्वती विवृतान् तमसा वियुक्तान् कुर्वती उषाः अबोधि सर्वैः प्राणिभिः अज्ञायि ज्ञाता अभूत् । तदनन्तरं स्वसारम् उषसः प्रादुर्भावे सति स्वयमेव सरन्ती निशां सनुतः अन्तर्हितप्रदेशे अप युयोति अपगमय्य पृथक्करोति । मनुष्या मनुष्याणां संबन्धीनि युगानि कृतत्रेतादीनि प्रमिनती स्वगमनागमनाभ्यां प्रकर्षेण हिंसन्ती जारस्य रात्रेर्जरयितुः सूर्यस्य योषा जाया उषाः चक्षसा आत्मीयेन प्रकाशेन वि भाति विशेषेण प्रकाशते ॥ ११ ॥

सुभगा शोभनधना चित्रा चायनीया पूजनीया उषाः पशून् न यथा पशून् गोपालकः अरण्ये विस्तारयति तथा प्रथाना तेजांसि विस्तारयन्ती उर्विया उर्वी महती एवंभूता सा व्यश्वैत् सर्वं जगद् व्याप्नोत् । तत्र दृष्टान्तः । सिन्धुर्न क्षोदः । यथा स्यन्दनशीलम् उदकं निम्नदेशे अचिरादेव व्याप्नोति तद्वत् । सैवोषाः सूर्यस्य रश्मिभिः किरणैः सह दृश्माना

दृश्यमाना सती चेति प्रज्ञाता आसीत् । किं कुर्वती । दैव्यानि देवसंबन्धीनि व्रतानि दर्शपूर्णमासादीनि कर्माणि अमिनती अहिंसती । अनुष्ठाने यजमानान् प्रवर्तयन्ती इत्यर्थः । उषसः प्रादुर्भावानन्तरं हि अग्निहोत्रादीनि सर्वाणि कर्माणि अनुष्ठीयन्ते न रात्रौ ॥ १२ ॥

हे वाजिनीवति । वाजः हविर्लक्षणम् अन्नम् । तद्युक्ता क्रिया वाजिनी । तया क्रियया युक्ते उषः उषोदेवते अस्मभ्यं चित्रं चायनीयं तत् धनम् आ भर आहर प्रयच्छ । येन धनेन तोकं पुत्रं तनयं तत्पुत्रं च धामहे दध्महे धारयामः । अत्र निरुक्तम् । उषः तत् चित्रं चायनीयं धनम् आहर अस्मभ्यम् अन्नवति येन पुत्रांश्च पौत्रांश्च दधीमहि ( नि. १२. ६ ) इति ॥ १३ ॥

हे गोमति अस्मभ्यं दातव्यैः गोभिः युक्ते तथा अश्वावति अश्वैः युक्ते विभावरि विशिष्टप्रकाशोपेते सूनृतावति । प्रियसत्यात्मिका वाक् सूनृता । तादृश्या वाचा युक्ते । एवंभूते हे उषः उषोदेवते अद्य इदानीं प्रभातसमये इह अस्मिन् देशे अस्मे अस्माकं रेवत् धनयुक्तं कर्म यथा भवति तथा व्युच्छ नैशं तमो निवारय ॥ १४ ॥

हे वाजिनीवति हविर्लक्षणान्नवति उषः उषोदेवते अरुणान् अरुणवर्णान् अश्वान् अश्वस्थानीयान् गोविशेषान् अद्य अस्मिन् काले युक्ष्व हि योजय एव । हिः अवधारणे । अथ अनन्तरं रथमारुह्य विश्वा सौभगानि सर्वाणि सौभाग्यानि नः अस्मभ्यम् आ वह आ नय ॥ १५ ॥

उषःसाहचर्यात् बुद्धिस्थौ अश्विनौ इदमादिकेन तृचेन स्तूयेते । हे अश्विना अश्ववन्तौ व्यापनशीलौ वा देवौ दस्रा शत्रूणामुपक्षपयितारौ अस्मत् अस्माकं वर्तिः वर्तनहेतुभूतं गृहम् आ समन्तात् गोमत् बहुभिर्गोभिर्युक्तं हिरण्यवत् हित-रमणीयधनयुक्तं च यथा भवति तथा समनसा समानमनस्कौ सन्तौ युवां युष्मदीयं रथम् अर्वाक् अर्वाचीनम् अस्मदभिमुखं नि यच्छतम् आवर्तयतम् ॥ १६ ॥

हे अश्विनौ यौ युवां दिवः द्युलोकात् श्लोकम् उप-श्लोकनीयं प्रशंसनीयं ज्योतिः तेजः इत्था इत्थम् अस्माभिः अनुभूयमानेन प्रकारेण जनाय जनस्य लोकस्य कृते चक्रथुः कृतवन्तौ । [केषांचिन्मतेन] सूर्याचन्द्रमसौ अश्विनौ उच्येते । तदुक्तं यास्केन । तत् कौ अश्विनौ । द्यावापृथिव्यौ इत्येके । अहोरात्रौ इत्येके । सूर्याचन्द्रमसौ इत्येके । ( नि. १२. १ ) इति । तथा च प्रकाशकत्वं तयोरुपपन्नम् । तौ युवं युवां नः अस्मभ्यम् ऊर्जं बलप्रदम् अन्नम् आ वहतम् आनयतं प्रयच्छतम् ॥ १७ ॥

उषर्बुधः उषसि प्रबुद्धाः अश्वाः इह अस्मिन् यागे सोमपीतये सोमपानाय दस्रा शत्रूणामुपक्षपयितारौ अश्विनौ आ वहन्तु आनयन्तु । कीदृशौ । देवा देवनशीलौ दानादि-गुणयुक्तौ वा । मयोभुवा मयसः आरोग्यप्रदस्य सुखस्य भावयितारौ । अश्विनौ हि देवानां भिषजौ ( ऐ. ब्रा. १. १८ ) इति श्रुतेः । हिरण्यवर्तनी । वर्तते अनेन इति

व्युत्पत्त्या वर्तनिशब्देन रथः उच्यते । सुवर्णमयः वर्तनिः ययोस्तौ ॥ १८ ॥

---

५

म. १. सू. ९७

हे अग्ने नः अस्माकम् अघं पापम् अप शोशुचत् अस्मत्तो निर्गत्य अस्मदीयं शत्रु शोचयतु । यद्वा अस्मदीयं पापं शोशुचत् शोकग्रस्तं सत् विनश्यतु । अपि च अस्माकं रयिं धनम् आ समन्तात् शुशुग्धि प्रकाशय । अपेति उक्तार्थमपि वाक्यमादरातिशयद्योतनाय पुनः पठ्यते । अवश्यम् अस्माकम् अघं विनश्यतु इति ॥ १ ॥

सुक्षेत्रिया शोभनक्षेत्रेच्छया सुगातुया शोभनमार्गेच्छया वसूया च धनेच्छया निमित्तभूतया यजामहे अग्निं हविर्भिः पूजयामः । यद्वा सुक्षेत्रिया देवयजनलक्षणशोभनदेशसंबन्धिना हविषा अग्निं यजामहे । नः अस्माकम् अघम् अप शोशुचत् विनश्यतु ॥ २ ॥

यत् यथा एषां स्तोतॄणां मध्ये अयं कुत्सः प्र भन्दिष्ठः प्रकर्षेण स्तोतृतमः एवम् अस्माकासः आस्माकीनाः सूरयः स्तोतारः च प्रकर्षेण स्तोतृतमा भवन्ति । अपेति पूर्ववत् ॥ ३ ॥

हे अग्ने यत् यस्मात् ते तव सूरयः स्तोतारः प्रजायन्ते पुत्रपौत्रादिरूपेण बहुविधाः भवन्ति ततः वयं च ते तव स्तोतारः सन्तः प्र जायेमहि पुत्रपौत्रादिभिः उपेता भवेम । अपेति पूर्ववत् ॥ ४ ॥

सहस्वतः सहनवतः शत्रून् अभिभवतः अग्नेः भानवः दीप्तयः विश्वतः सर्वतः सर्वस्मादपि प्रदेशात् प्र यन्ति प्रकर्षेण उद्गच्छन्ति । यत् यस्माद् एवं तस्मात् तेन अग्नि-तेजसा अस्मदीयम् अघं नश्यतु ॥ ५ ॥

हे अग्ने त्वं हि त्वं खलु विश्वतोमुखः सर्वतोज्वालः । तव मुखस्थानीयानां ज्वालानां न कुत्रापि प्रतिहतिः अस्ति । अतो हे विश्वतोमुख अग्ने विश्वतः सर्वस्मादपि उपद्रव-जातात् परिभूः असि अस्माकं परिग्रहीता भव । रक्षको भव इत्यर्थः । अपेति पूर्ववत् ॥ ६ ॥

हे विश्वतोमुख सर्वतोमुख अग्ने नावेव नावा नदीम् इव द्विषः शत्रून् नः अस्मान् अति पारय अतिक्रमय्य शत्रुरहितं प्रदेशं प्रापय । अपेति पूर्ववत् ॥ ७ ॥

पूर्वोक्त एव अर्थः पुनरपि दार्ढ्याय प्रार्थ्यते । अग्ने स त्वं नः अस्मान् नावया नावा सिन्धुमिव नदीमिव स्वस्तये क्षेमार्थम् अति पर्ष शत्रून् अतिक्रमय्य पालय । शत्रुरहितं प्रदेशम् अस्मान् प्रापय इत्यर्थः । त्वत्प्रसादात् नः अस्माकम् अघं पापं च अप शोशुचत् अस्मत्तो अपक्रम्य अस्मच्छत्रुं गच्छतु । अस्मच्छत्रुः शोकयुक्तो भवतु इत्यर्थः ॥ ८ ॥

---

अप्सु आन्तरिक्षासु उदकमये मण्डले अन्तः मध्ये वर्तमानः। सुपर्णः शोभनपतनः। यद्वा सुपर्ण इति रश्मिनाम। सुषुम्णाख्येन सूर्यरश्मिना युक्तः। चन्द्रमाः दिवि द्युलोके आ धावते। आङ् मर्यादायाम्। एकेनैव प्रकारेण धावते शीघ्रं गच्छति। तादृशस्य चन्द्रमसः संबन्धिनो हे हिरण्यनेमयः सुवर्णसदृशपर्यन्ताः। यद्वा हितरमणीयप्रान्ताः। विद्युतः विद्योतमानाः रश्मयः वः युष्माकं पदं पादस्थानीयम् अग्रं न विन्दन्ति मदीयानि इन्द्रियाणि कूपेन आवृतत्वात् न लभन्ते। अतः इदम् अनुचितं तस्मात् कूपात् माम् उत्तारयत इत्यर्थः। अपि च हे रोदसी द्यावापृथिव्यौ मे मदीयम् अस्य इदं स्तोत्रं वित्तं जानीतम्। यद्वा मदीयं कूपपतनरूपं यद् इदं दुःखं तद् अवगच्छतम्। मदीयं स्तोत्रं श्रुत्वा मदीयं दुःखं ज्ञात्वा वा अस्मात् कूपात् माम् उत्तारयतम् इत्यर्थः॥ १॥

. . . . . . . . . . . . . .

हे देवाः स्वः स्वर्गे वर्तमानम् अदः तद् अस्मदीयं पितृपितामहप्रपितामहात्मकं सतानं दिवस्परि दिवश्च उपरि वर्तमानं मो षु सैव अव पादि अवपन्नं विपन्नं प्रभ्रष्टं मा भूत् मम पुत्राभावात्। पुत्रेण लोकाञ्जयति। नापुत्रस्य लोकोऽस्ति (ऐ. ब्रा. ७. १३) इति श्रुतेः। अतो वयं सोम्यस्य सोमपानार्हस्य पितृगणस्य शंभुवः सुखस्य भावयितुः

पुत्रस्य शूने अपगमने कदा चन कदाचिदपि मा भूम। युष्मत्प्रसादात् मम पुत्राः जायन्ताम्। अतो माम् अस्माद् दुःखाद् उत्तारयत इत्यर्थः। हे द्यावापृथिव्यौ युवां च मदीयं विज्ञापनं जानीतम् ॥ ३ ॥

यज्ञं यजनीयम् अवमं सर्वेषां देवानामादिभूतम्। अग्निर्मुखं प्रथमो देवतानाम् (ऐ. ब्रा. १. ४) इति श्रुतेः। अग्निर्वै देवानामवमः (ऐ. ब्रा. १. १) इति ब्राह्मणाच्च। तम् अग्निं पृच्छामि। यत् मया पृष्टं तत् देवानां दूतः सः अग्निः वि वोचति विविच्य कथयतु। किं पुनस्तत् पृच्छयते इति चेत् उच्यते। हे अग्ने त्वदीयं पूर्व्यं पूर्वकालीनम् ऋतं भद्रं स्तोतृभ्यः कृतं श्रेयः क्व गतं कुत्र इदानीं वर्तते। नूतनः नवतरः त्वत्तोऽन्यः कः पुरुषः तत् भद्रं बिभर्ति धारयति। यदि त्वयि अवर्तिष्यत मम ईदृशी दशापि न अभविष्यत्। अतः तत् क्व गतम् इति कथय। वित्तं मे इत्यादि पूर्ववत् ॥ ४ ॥

हे देवाः त्रिषु पृथिव्यादिषु स्थानेषु ये अमी यूयं स्थन वर्तमाना भवथ। *यानि स्थानानि दिवः द्योतमानस्य* सूर्यस्य आ रोचने दीप्तिविषये वर्तन्ते। सूर्यप्रकाश्येषु स्थानेषु इत्यर्थः। तेषां वः युष्माकं संबन्धि स्तोतृविषयम् ऋतं सत्यं कत् कस्मिन् देशे वर्तते। अनृतं द्वेष्टृविषयम् असत्यं च कत् कुत्र गतम्। अपि च प्रत्ना चिरकालीना वः युष्माकं संबन्धिनी आहुतिः मया पूर्वम् अनुष्ठितो यागः क्व कुत्र आसीत्। ईदृग्भूतदुःखानुभवेन मया पूर्वमनुष्ठितो

यागसमूहः युष्मान् न प्राप्नोत् इति अनुमिमे । वित्तं मे इत्यादि पूर्ववत् ॥ ५ ॥

हे देवाः वः युष्माकं संबन्धिनः ऋतस्य सत्यस्य अभिमतफलप्रापणस्य धर्णसि धारणं कत् कुत्र गतम् । वरुणस्य अनिष्टनिवारकस्य देवस्य चक्षणम् अनुग्रहदृष्टचा दर्शनं कत् क्व गतम् । महः महतः महानुभावस्य अर्यम्णः अरीणां नियन्तुः एतत्संज्ञकस्य देवस्य संबन्धिना पथा शोभनमार्गेण इष्टदेशप्रापणं कत् क्व गतम् । एतत् सर्वं युष्मास्वेव वर्तते । न कुत्रापि गतम् । अतो वयं दूढ्यः दुर्धियः पापबुद्धीन् अस्मदनिष्टाचरणपरान् शत्रून् अति क्रामेम अतितरेम । तैः कृताद् अस्मात् कूपपातलक्षणात् दुःखात् वयम् उत्तीर्णा भवेम । हे द्यावापृथिव्यौ मदीयम् इदं जानीतम् ॥ ६ ॥

हे देवाः पुरा पूर्वस्मिन् काले सुते युष्मद्यागार्थं सोमे अभिषुते कानि चित् कतिपयानि स्तोत्राणि यः अहं वदामि उक्तवानस्मि सः एव अहम् अस्मि न तु अन्यः कश्चित् । तस्मात् किमर्थं मा परित्यजथ । तं तादृशं माम् आध्यः अभिलषितपुत्राद्यप्राप्त्या जनिताः मानस्यो व्यथाः व्यन्ति भक्षयन्ति । तत्र दृष्टान्तः । तृष्णजं जाततृष्णं पिपासन्तम् उदकं प्रति गच्छन्तं मृगं वृको न यथा अरण्यश्वा मध्येमार्गं भक्षयति तद्वत् । वित्तं मे इत्यादि पूर्ववत् ॥ ७ ॥

ऐन्द्री एषा । हे इन्द्र पर्शवः पार्श्वास्थीनि । अत्र सामर्थ्यात् पर्शुस्थानीयाः कूपभित्तयः मा माम् अभितः सं

तपन्ति सम्यक् पीडयन्ति । तत्र दृष्टान्तः । सपत्नीरिव । समानः एकः पतिः यासां ताः सपत्न्यः यथा एकं पतिम् अभितः पीडयन्ति । परस्परं वा पीडयन्ते । हे शतक्रतो बहुविधकर्मन् बहुविधप्रज्ञ वा इन्द्र ते तव स्तोतारं माम् आध्यः असंपद्यमानैः यागदानादिभिः उत्पादिताः मानस्यः पीडाः व्यदन्ति विविधं भक्षयन्ति । तत्र दृष्टान्तः । मूषो न । यथा मूषिकाः शिश्ना शिश्नानि कुविन्देन वायितानि अन्नरसेन आलिप्तानि सूत्राणि भक्षयन्ति । एवं माम् आधयो भक्षयन्ति । न च एतत् हे इन्द्र तव स्तोतुः न्याय्यम् । तस्मात् कूपात् माम् उत्तारय । वित्तं मे इत्यादि पूर्ववत् । अत्र निरुक्तम् । संतपन्ति माम् अभितः सपत्न्य इव इमाः पर्शवः कूपपर्शवो मूषिका इव अस्नातानि सूत्राणि व्यदन्ति । (नि. ४. ६) इति ॥ ८ ॥

ये अमी द्युलोके वर्तमानाः सप्तसंख्याकाः रश्मयः सूर्यस्य किरणाः सन्ति तत्र तेषु सूर्यरश्मिषु अध्यात्मं सप्तप्राणरूपेण वर्तमानेषु मे मदीया नाभिः आतता संबद्धा । ऋषिः आत्मानमेव परोक्षतया निर्दिशति । त्रितः तीर्णतमः तिरस्कृताज्ञानः आप्त्यः अपां पुत्रः ऋषिः तत् पूर्ववृत्तं वृत्तान्तं वेद जानाति नान्यः । सः जानन् ऋषिः जामित्वाय कूपात् निर्गन्तृत्वाय रेभति तान् रश्मीन् स्तौति । वित्तं मे इत्यादि पूर्ववत् ॥ ९ ॥

उक्षणः सेक्तारः कामाभिवर्षकाः पञ्च । तत्र इन्द्रस्तद् वरुणस्तदग्निस्तदर्यमा तत् सविता च नो धात् (ऋ. सं. १.

१०७. ३) इत्यर्धर्चेन प्रतिपादिताः पञ्चसंख्याका देवाः । यद्वा अग्निर्वायुः सूर्यश्चन्द्रमा विद्युत् इत्येवं पञ्चसंख्याकाः । तथा च शाट्यायनकम् । एतान्येव पञ्च ज्योतींषि यानि एषु लोकेषु दीप्यन्ते । अग्निः पृथिव्यां वायुरन्तरिक्षे आदित्यो दिवि चन्द्रमा नक्षत्रे विद्युदप्सु इति । ये अमी पञ्चसंख्याका देवा महो दिवः महतः विस्तीर्णस्य द्युलोकस्य मध्ये तस्थुः तिष्ठन्ति आसते देवत्रा देवेषु नु क्षिप्रं प्रवाच्यं प्रशंसनीयं देवानां योग्यं मदीयं स्तोत्रं प्रति सध्रीचीनाः सहाञ्चन्तो युगपदागच्छन्तः ते देवाः मदीयं परिचरणं स्वीकुर्वन्ति । तदनन्तरं नि ववृतुः तृप्ताः सन्तो निवर्तन्ते च । वित्तं मे इत्यादि पूर्ववत् ॥ १० ॥

सुपर्णाः । रश्मिनाम एतत् । शोभनपतनाः एते सूर्यरश्मयः आरोधने सर्वस्यावरके व्याप्ते दिवः अन्तरिक्षस्य मध्ये आसते वर्तन्ते । ते सूर्यरश्मयः पथः मार्गात् वृकम् अरण्यश्वानं सेधन्ति निषेधन्ति निवारयन्ति । कीदृशम् । यह्वतीः महतीः अपः तरन्तम् अतिक्रामन्तम् । कूपपतनात् पूर्वं त्रितं दृष्ट्वा कश्चिद् अरण्यश्वा महतीं नदीं तितीर्षुः आजगाम । स च सूर्यरश्मीन् दृष्ट्वा अयम् अवसरो न भवतीति निववृते । अतो रश्मयो वृकं निषेधन्ति इति उच्यते । यास्कपक्षे तु आपः इति अन्तरिक्षनाम । यह्वतीः अपः महदन्तरिक्षं पथः पथा द्वादशराश्यात्मना मार्गेण तरन्तं वृकं चन्द्रमसं सूर्यरश्मयो निषेधन्ति । अहनि हि सूर्यरश्मिभिर्निरुद्धः चन्द्रमा निष्प्रभो दृश्यते । अतः निष्प्रभं कुर्वन्ति इत्यर्थः वित्तं मे इत्यादि पूर्ववत् ॥ ११ ॥

हे देवासः देवाः नव्यं नवतरम् उक्थ्यं प्रशस्यं स्तुत्यर्हं सुप्रवाचनं सुष्ठु ऋत्विग्भिर्वाचयितुं शक्यम् एवंभूतं तत् भवदीयं बलं हितं युष्मासु निहितम् । अतो युष्मदीयेन बलेन सिन्धवः स्यन्दनशीला नद्यः ऋतम् उदकम् अर्षन्ति आलस्यराहित्येन सर्वदा प्रेरयन्ति । अशोष्याः सरयः प्रवहन्ति इत्यर्थः । तथा सूर्यः सत्यं सर्वदा विद्यमानं स्वकीयं तेजः ततान आतनोति विस्तारयति । वित्तं मे इत्यादि पूर्ववत् ॥ १२ ॥

हे अग्ने तव उक्थ्यं प्रशस्यं त्यत् श्रुतिप्रसिद्धम् आप्यम् । आपिः बन्धुः तस्य भावः । बान्धवं देवेषु दानादिगुणयुक्तेषु इन्द्रादिषु अस्ति विद्यते । तस्मात् सः तादृशः विदुष्टरः विद्वत्तरः त्वं नः अस्माकं यज्ञे सत्तः निषण्णः सन् देवान् तान् इन्द्रादीन् आ शास्त्रमर्यादया यक्षि यज हविर्भिः पूजय । तत्र दृष्टान्तः । मनुष्वत् । यथा मनूनां यज्ञे तद्वत् । वित्तं मे इत्यादि पूर्ववत् ॥ १३ ॥

मनुष्वत् मनोरिव अस्माकं यज्ञे सत्तः निषण्णः होता देवानाम् आह्वाता विदुष्टरः विद्वत्तरः देवः दानादिगुणयुक्तः देवेषु सर्वेषु इन्द्रादिषु मध्ये मेधिरः मेधावी । एवंभूतः अग्निः तान् देवान् अच्छ आभिमुख्येन हव्या हव्यानि अस्मदीयानि हवींषि । मर्यादायाम् आकारः । शास्त्रमर्यादया यथाशास्त्रं सुषूदति प्रेरयतु । वित्तं मे इत्यादि पूर्ववत् ॥ १४ ॥

यः वरुणः अनिष्टस्य निवारयिता देवः ब्रह्म परिवृढ तद् रक्षणरूपं कर्म कृणोति करोति तं तादृशं गातुविदं गातोः

मार्गस्य दुःखनिवारकस्य लम्भयितारं वरुणम् ईमहे अभिमतफलं याचामहे । तस्मै वरुणाय अयम् अस्मदीयः स्तोता हृदा हृदयेन मतिं मननीयां स्तुतिं व्यूर्णोति विवृणोति प्रकाशयति उच्चारयति इत्यर्थः । सोऽयं नव्यः स्तुत्यो वरुणः अस्माकम् ऋतं जायतां सत्यभूतोऽस्तु । वित्तं मे इत्यादि पूर्ववत् ॥ १५ ॥

पन्थाः सततगामी । यद्वा ब्रह्मलोकं गच्छताम्, उपासकानां मार्गभूतः । सूर्यद्वारेण ते विरजाः प्रयान्ति ( मु. उ. १. २. ११ ) इति श्रुतेः । एवंभूतः यः असौ आदित्यः दिवि द्युलोके प्रवाच्यं प्रकर्षेण वचनं यथा भवति तथा कृतः निर्मितः । यथा सर्वैः प्राणिभिः दृश्यते तथा वर्तमानः इत्यर्थः । हे देवाः सः अयम् आदित्यः युष्माभिः अपि न अतिक्रमे अतिक्रमितु न शक्यः । युष्मज्जीवनस्य तदायत्तत्वात् । सति हि सूर्ये वसन्तादयः काला निष्पद्यन्ते । कालेषु च यागाः क्रियन्ते । यागेषु च सत्सु भवतां जीवनम् । अतो युष्माभिरपि असौ नातिक्रमितव्यः । एवं च सति हे मर्तासः पापकृतो मनुष्याः तं महानुभावं सूर्यं न पश्यथ न जानीथ । एतच्च कूपे पातयित्वा निर्गतौ एकतद्वितौ प्रति निन्दनम् । अहमेव मन्त्रद्रष्टा तं सूर्यं जानामि पापकृतौ युवां न जानीथः इति । वित्तं मे इत्यादि पूर्ववत् ॥ १६ ॥

कूपे अवहितः पातितः त्रितः एतत्संज्ञः ऋषिः ऊतये रक्षणाय देवान् हवते स्तुतिभिः आकारयति । यदेतत्.

त्रितस्य आह्वानं बृहस्पतिः बृहतां महतां देवानां रक्षकः एतत्संज्ञो देवः तत् आह्वानं शुश्राव श्रुतवान् । किं कुर्वन् । अंहूरणात् अंहसः पापरूपाद् अस्मात् कूपपातात् उन्नीय उरु विस्तीर्णं शोभनं कृण्वन् कुर्वन् । वित्तं मे इत्यादि पूर्ववत् ॥ १७ ॥

अरुणः लोहितवर्णः वृकः अरण्यश्वा सकृत् एकवारं पथा यन्तं मार्गेण गच्छन्तं मां ददर्श दृष्टवान् । हिः पादपूरणः । निचाय्य दृष्ट्वा च मां जिघृक्षुः सन् उज्जिहीते उद्गच्छति स्म । तत्र दृष्टान्तः । तष्टेव पृष्ट्यामयी । यथा तक्षणजनितपृष्ठक्लेशः तष्टा वर्धकिः तदपनोदनाय ऊर्ध्वाभिमुखो भवति तद्वत् । हे द्यावापृथिव्यौ मदीयमिदं दुःखं वित्तं जानीतम् । यास्कस्तु मासकृत् इति एकं पदं मन्वानः व्याचष्टे । वृकश्चन्द्रमा भवति विवृतज्योतिष्को वा विकृतज्योतिष्को वा विक्रान्तज्योतिष्को वा । अरुणः आरोचमानः मासकृत् मासानां च अर्धमासानां च कर्ता भवति चन्द्रमाः । वृक पथा यन्तं ददर्श नक्षत्रगणम् 'अभिजिहीते निचाय्य येन येन योक्ष्यमाणो भवति चन्द्रमाः तक्ष्णुवन्निव पृष्ठरोगी' ( नि. ५. २०–२१ ) इति । वित्तं मे इत्यादि पूर्ववत् ॥ १८ ॥

एना अनेन आङ्गूषेण आघोषणयोग्येन स्तोत्रेण हेतुभूतेन इन्द्रवन्तः अनुग्राहकेण इन्द्रेण युक्ताः सर्ववीराः सर्वैः वीरैः पुत्रैः पौत्रादिभिश्च उपेताः सन्तः वयं वृजने संग्रामे अभि ष्याम शत्रून् अभिभवेम । तत्, इदम् अस्मदीयं वचनं

मित्रादयः ममहन्तां पूजयन्तु पालयन्तु इत्यर्थः । अत्र यास्कः । आङ्गूषः स्तोमः आघोषः । अनेन स्तोमेन वयम् इन्द्रवन्तः ( नि. ५. ११ ) इति ॥ १९ ॥

---

७

म. १. सू. ११०

हे ऋभवः मे मया अपः अग्निष्टोमादिरूपं कर्म ततं विस्तारितं बहुशः पूर्वमनुष्ठितम् । तदु तदेव पुनः तायते विस्तार्यते अनुष्ठीयते इत्यर्थः । तत्र स्वादिष्ठा स्वादुतमा अतिशयेन प्रीतिकरी धीतिः स्तुतिश्च उचथाय स्तुत्याय युष्मद्गणाय धास्यते पठ्यते । अपि च इह अस्मिन् यागे समुद्रः समुन्दनशीलः अयं सोमरसः विश्वदेव्यः सर्वेभ्यः देवेभ्यः पर्याप्तो यथा भवति तथा संपादितः । तस्य स्वाहाकृतस्य स्वाहाकारेण अग्नौ प्रक्षिप्तस्य सोमस्य पानेन समु तृप्णुत सम्यगेव तृप्ता भवत ॥ १ ॥

हे ऋभवः अपाकाः परिपक्वज्ञानाः प्राञ्चः पूर्वकालीनाः मम आपयः प्रापयितारो मदीया ज्ञातयः के चित् एवंभूताः ये केचन यूयम् आभोगयम् उपभोग्यं सोमम् इच्छन्तः यत् यदा प्र ऐतन तपश्चरितुम् अरण्यं गतवन्तः । ऋभवो हि सुधन्वनः आङ्गिरस्य पुत्राः । तदुक्तं यास्केन। ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुः (नि.

११. १६) इति । कुत्सोऽपि आङ्गिरसः। अतस्तेन मदीया ज्ञातय इत्युक्तम् । हे सौधन्वनासः सुधन्वनः पुत्राः तदानीं चरितस्य समुपार्जितस्य तपसः भूमना भूम्ना बहुत्वेन दाशुषः हवींषि दत्तवतः सवितुः सोमाभिषवं कुर्वतो यजमानस्य संबन्धि यज्ञगृहम् अगच्छत तपसा लब्धसोमाः सन्तः कृतपानाः यूयं गतवन्तः । यद्वा दाशुषः प्रातःसवनादिषु अग्न्यादिभिः अपसारितेभ्यः ऋभुभ्यः सोमपानं दत्तवतः सवितुः गृहं निवासस्थानं तृतीयसवनाख्यम् अगच्छत प्राप्ताः ॥ २ ॥

हे ऋभवः तत् तदानी सविता सर्वस्य प्रेरको देवः वः युष्माकम् अमृतत्वं देवत्वम् आसुवत् आभिमुख्येन प्रेरितवान् दत्तवान् इत्यर्थः । यत् यदा यूयम् अगोह्यं गूहितुमशक्यं सर्वैर्दृश्यमानं सवितारं श्रवयन्तः अपेक्षितं सोमपानं विज्ञापयन्तः सन्तः ऐतन आगच्छत तदानीम् इति पूर्वेण अन्वयः । यस्मात् यूयं देवैः आज्ञापिताः सन्तः असुरस्य त्वष्टुः संबन्धिनं तेन निर्मितम् इत्यर्थः । भक्षणं सोमपानसाधनं त्यं तं चमसम् एकं चित् असहायमेव सन्तं चतुर्वयं चतुर्व्यूहम् अकृणुत कृतवन्तः । सृष्ट्यादौ त्वष्ट्रा कृतं चमसं होतृचमसादिमुख्यचमसचतुष्टयरूपेण ऋभवः कृतवन्तः इत्यर्थः ॥ ३ ॥

वाघतः । ऋत्विङ्नामैतत् । अत्र च सामर्थ्यात् तद्वन्तो लक्ष्यन्ते ऋत्विग्भिरुपेताः ऋभवः । शमी । कर्मनामैतत् । यागदानादीनि कर्माणि । अन्यान्यपि एकं चमसं चतुरः कृणोतन (ऋ. १. १६१. २) इत्यादिना देवैः उक्तानि कर्माणि । तरणित्वेन । तरणिरिति क्षिप्रनाम ।

क्षिप्रत्वेन शैघ्र्येण । विष्ट्वी । यद्यपि एतत् कर्मनाम तथापि अत्र क्रियापरम् । व्याप्य कृत्वा इत्यर्थः । एवं कर्माणि कृत्वा मर्तासः मनुष्याः अपि सन्तः अमृतत्वं देवत्वम् आनशुः आनशिरे । कृतैः कर्मभिर्लेभिरे । देवत्वं प्राप्य च सौधन्वनाः सुधन्वनः पुत्राः सूरचक्षसः सूर्यसमानप्रकाशाः सूर्यसदृशज्ञाना वा ते ऋभवः संवत्सरे संवत्सरावयवभूते वसन्तादिकाले अनुष्ठेयैः धीतिभिः अग्निष्टोमादिकर्मभिः समपृच्यन्त संयुक्ता अभवन् हविर्भागार्हा बभूवुरित्यर्थः । अत्र निरुक्तम् । कृत्वा कर्माणि क्षिप्रत्वेन वोढारो मेधाविनो वा मर्तासः सन्तः अमृतत्वम् आनशिरे सौधन्वना ऋभवः सूरख्याना वा सूरप्रज्ञा वा संवत्सरे समपृच्यन्त धीतिभिः कर्मभिः ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुः ( नि. ११. १६ ) इति ॥ ४ ॥

उपस्तुताः समीपस्थैः ऋषिभिः स्तुताः ऋभवः जेह्मानं होमक्रियां प्रति प्रयतमानम् एकम् असहायं पात्रं पानसाधनं त्वष्ट्रा निर्मितं चमसं मानदण्डेन क्षेत्रमिव भूमिमिव तेजनेन तीक्ष्णेन शस्त्रेण चमसचतुष्टयरूपेण कर्तुं वि ममुः विशेषेण मानं कृतवन्तः । किम् इच्छन्तः । उपमं सर्वेषाम् उपमानभूतं प्रशस्तं सोमलक्षणम् अन्नं नाधमानाः याचमानाः । एतदेव विवृणोति । अमर्त्येषु मरणरहितेषु देवेषु मध्ये श्रवः हविर्लक्षणम् अन्नम् इच्छमानाः इच्छन्तः । देवैः सह सोमपानं कामयमानाः तल्लाभाय चतुरश्चमसान् अकार्षुः इत्यर्थः ॥५॥

अन्तरिक्षस्य अन्तरिक्षलोकस्य मध्यमस्थानस्य संबन्धिभ्यः नृभ्यः यज्ञस्य नेतृभ्यः ऋभुभ्यः । यद्वा अन्तरिक्षस्य लोकस्य नेतृभ्यः । तादृशेभ्यः स्रुचेव यथा स्रुचा जुह्वा घृतं क्षरणशीलाज्योपेतं हविः आ जुहवाम । मर्यादायाम् आकारः । यथाशास्त्रं प्रयच्छाम । एवमेव मनीषां स्तुतिं विद्मना वेदनेन ज्ञानेन कुर्मः इति शेषः । अपि च ये ऋभवः पितुः सर्वस्य जगतः पालकस्य अस्य सूर्यस्य तरणित्वा तरणित्वानि तरणकौशलानि सश्चिरे सूर्यरश्मिभूताः सन्तः प्रापुः । ते ऋभवः दिवो रजः । रजःशब्दो लोकवाची । द्योतमानस्य स्वर्गाख्यस्य लोकस्य संबन्धिनं वाजं सोमलक्षणम् अन्नम् अरुहन् यागदानादिभिः कर्मभिः अन्यैश्च वेदोक्तैः चमसचतुष्टयकरणादिकैः प्राप्नुवन् ॥ ६ ॥

ऋभुर्विभ्वा वाज इति त्रयः सुधन्वनः पुत्राः । तत्र शवसा बलेन नवीयान् नवतरः प्रशस्ततरः ऋभुः नः अस्माकम् इन्द्रः परमेश्वरः अस्माकं रक्षकः इत्यर्थः । यद्वा इन्द्र एव प्रसङ्गात् उरु भातीति नैरुक्तव्युत्पत्त्या ऋभुरिति स्तूयते । अपि च वाजेभिः वाजैः अस्मभ्यं दातव्यैः अन्नैः वसुभिः निवासहेतुभिर्धनैश्च ऋभुः वसुः अस्माकं निवासयिता अत एव ददिः तेषाम् अन्नानां धनानां च दाता भवतु । परः अर्धर्चः प्रत्यक्षकृतः । हे देवाः दानादिगुणयुक्ता ऋभुप्रभृतयः युष्माकं संबन्धिना अवसा रक्षणेन युक्ते प्रिये अस्माकम् अनुकूले अहनि दिवसे वर्तमाना वयम् असुन्वतां सुन्वद्यजमानविरोधिनां शत्रूणां पृत्सुतीः सेनाः अभि तिष्ठेम ॥ ७ ॥

पुरा कस्यचिद् ऋषेः धेनुर्मृता । स ऋषिः तस्याः धेनोः वत्सं दृष्ट्वा ऋभुं तुष्टाव । ऋभवः तत्सदृशीम् अन्यां धेनुं कृत्वा तदीयेन चर्मणा संवीय वत्सेन समयोजयन् इति । अयमर्थः पूर्वार्धे प्रतिपाद्यते । हे ऋभवः यूयं चर्मणः चर्मणा त्वचा । तृतीयार्थे षष्ठी । गां धेनुं निः अपिंशत निःशेषेण आश्लिष्टां संयुक्ताम् अकुरुत । तदनन्तरं मातरं तां गां पुनः वत्सेन सम् असृजत संसृष्टाम् अकुरुत समगमयतेति यावत् । अपि च हे सौधन्वनासः सुधन्वनः आङ्गिरस्य पुत्राः नरः यज्ञस्य नेतारः ऋभवः स्वपस्यया शोभनकर्मेच्छया यागदानाद्याचरणेनेति यावत् । जिव्री जीर्णौ वृद्धौ पितरा मातापितरौ युवाना पुनर्यौवनोपेतौ अकृणोतन यूयम् अकुरुध्वम् ॥ ८ ॥

हे इन्द्र ऋभुमान् । ऋभुर्विभ्वा वाज इति त्रयोऽपि ऋभुशब्देन उपचाराद् अत्र उच्यन्ते । तैर्युक्तस्त्वं वाजसातौ वाजस्य अन्नस्य संभजने निमित्तभूते सति वाजेभिः अन्नैः अविड्ढि अस्मान् व्याप्नुहि । यद्वा वाजसातिरिति संग्रामनाम । वाजसातौ संग्रामे वाजेभिः वेजनयुक्तैः अविड्ढि अस्मान् रक्ष । अपि चित्रं चायनीयं राधः धनम् आ दर्षि अस्मभ्यं दातुम् आद्रियस्व । तृतीयसवने ऋभुभिः सह इन्द्रस्य अवस्थानात् प्रसङ्गात् अत्र इन्द्रस्तुतिः । यदेतद् अस्माभिः प्रार्थितम् अस्मदीयं तत् मित्रादयः ममहन्तां पूजयन्ताम् ॥ ९ ॥

---

गृत्समदो ब्रूते । जनासः जनाः हे असुराः यो जात एव जायमान एव सन् प्रथमः देवानां प्रधानभूतः मनस्वान् मनस्विनामग्रणीः देवः द्योतमानः सन् क्रतुना वृत्रवधादिलक्षणेन स्वकीयेन कर्मणा देवान् सर्वान् यागदेवान् पर्यभूषत् रक्षकत्वेन पर्यग्रहीत् । भूष अलंकारे । यद्वा सर्वान् अन्यान् देवान् पर्यभूषत् पर्यभवत् अत्यक्रामत् । यस्य इन्द्रस्य शुष्मात् शरीरात् बलात् रोदसी द्यावापृथिव्यौ अभ्यसेताम् अबिभीताम् अवेपेतां वा । नृम्णस्य सेनालक्षणस्य बलस्य मह्ना महत्त्वेन युक्तः सः इन्द्रः नाहमिति । अत्र निरुक्तम् । यो जायमान एव प्रथमो मनस्वी देवो देवान् क्रतुना कर्मणा पर्यभवत् पर्यगृह्णात् पर्यरक्षत् अत्यक्रामद् इति वा । यस्य बलात् द्यावापृथिव्यौ अपि अबिभीताम् । नृम्णस्य मह्ना बलस्य महत्त्वेन स जनास इन्द्र इति *ऋषेर्दृष्टार्थस्य प्रीतिर्भवति आख्यानसंयुक्ता* (नि. १०. १०) इति ॥ १ ॥

हे जनाः यः इन्द्रः व्यथमानां चलन्तीं पृथिवीम् अदृंहत् शर्करादिभिः दृढाम् अकरोत् । यः च प्रकुपितान् इतस्ततश्चलितान् पक्षयुक्तान् पर्वतान् अरम्णात् नियमितवान् स्वे स्वे स्थाने स्थापितवान् । यश्च वरीयः उरुतमम् अन्तरिक्षं विममे निर्ममे विस्तीर्णं चकार इत्यर्थः । यश्च द्यां दिवम् अस्तभ्नात् तस्तम्भ निरुद्धाम् अकरोत् । स एव इन्द्रः नाहमिति ॥ २ ॥

यः अहिं मेघं हत्वा मेघहननं कृत्वा सप्त सर्पणशीलाः सिन्धून् स्यन्दनशीलाः अपः अरिणात् प्रैरयत् । यद्वा सप्त गङ्गायमुनाद्याः मुख्याः नदीः अरिणात् । यश्च वलस्य वलनामकस्य असुरस्य अपधा तत्कर्तृकात् निरोधात् निरुद्धाः गाः उदाजत् निरगमयत् । यश्च अश्मनोः । अश्नुते व्याप्नोति अन्तरिक्षम् इत्यश्मा मेघः । अत्यन्तमृदुरूपयोः मेघयोः अन्तः मध्ये वैद्युतम् अग्निं जजान उत्पादयामास । यश्च समत्सु । संभक्षयन्ति योद्धॄणाम् आयूंषि इति समदः संग्रामाः । तेषु संवृक् भवति । वृणक्तेः हिंसार्थस्य क्विपि रूपम् । सम्यक्प्रकारेण हिंसको विनाशको भवति इति यावत् । स इन्द्रः नाहमिति ॥ ३ ॥

येन इन्द्रेण इमा इमानि विश्वा च्यवना नश्वराणि भुवनानि कृतानि स्थिरीकृतानि । यश्च दासं वर्णं शूद्रादिकम् । यद्वा दासम् उपक्षपयितारम् । अधरं निकृष्टम् असुरं गुहा गुहायां गूढस्थाने नरके वा अकः अकार्षीत् । लक्षं लक्ष्यं जिगीवान् जितवान् यः अर्यः अरेः शत्रोः संबन्धीनि पुष्टानि समृद्धानि आदत् आदत्ते । तत्र दृष्टान्तः । श्वघ्नीव । श्वभिः मृगान् हन्तीति श्वघ्नी व्याधः । यथा व्याधो जिघृक्षितं मृगं परिगृह्णाति तद्वत् ॥ ४ ॥

अपश्यन्तो जनाः घोरं शत्रूणां घातकं यं पृच्छन्ति स्म कुह सेति । स इन्द्रः कुत्र वर्तते इति । न क्वचिदसौ तिष्ठतीति मन्यमाना जनाः एनम् इन्द्रम् आहुः एषः इन्द्रः न अस्तीति । ईम् इति पूरणः । सः इन्द्रः विजइव ।

इवशब्दः एवार्थे । उद्वेजकः एव सन् अयं अरेः संबन्धीनि पुष्टीः पोषकाणि गवाश्वादीनि धनानि आ मिनाति सर्वतो हिनस्ति । विश्वासम् अत्र कुरुत । यद्यपि असौ विशेषतः अस्माभिः न दृश्यते तथापि अस्तीति विश्वासं कुरुत । एवं निर्धारणीयमहिमोपेतः सः इन्द्रः नाहमिति ॥ ५ ॥

यो रध्रस्य समृद्धस्य चोदिता धनानां प्रेरयिता भवति । यश्च कृशस्य च दरिद्रस्य च । यश्च नाधमानस्य याचमानस्य कीरेः स्तोतुः ब्रह्मणः ब्राह्मणस्य च धनानां प्रेरयिता । यश्च सुशिप्रः शोभनहनुः सुशीर्षको वा सन् युक्तग्राव्णः अभिषवार्थ-मुद्यतग्राव्णः सुतसोमस्य अभिषुतसोमस्य यजमानस्य अविता रक्षिता भवति । सः एव इन्द्रः नाहमिति ॥ ६ ॥

यस्य सर्वान्तर्यामितया वर्तमानस्य प्रदिशि प्रदेशने अनुशासने अश्वासः अश्वाः वर्तन्ते । यस्य अनुशासने गावः । यस्य अनुशासने ग्रामाः । ग्रसन्ते अत्र इति ग्रामाः जनपदाः । यस्य आज्ञायां विश्वे सर्वे रथासः रथाः वर्तन्ते । यश्च वृत्रं हत्वा सूर्यं जजान जनयामास । यश्च उषसम् । यश्च मेघभेदनद्वारा अपां नेता प्रेरकः । सः इन्द्रः इत्यादि पूर्ववत् ॥ ७ ॥

यं क्रन्दसी रोदसी शब्दं कुर्वाणे मानुषी दैवी च द्वे सेने वा संयती परस्परं संगच्छन्त्यौ विह्वयेते स्वरक्षार्थं । विविधम् आह्वयतः । परे उत्कृष्टाः अवरे अधमाश्च उभयाः उभयविधाः अमित्राः शत्रवः यम् आह्वयन्ति । समानम् इन्द्ररथसदृशं रथम् आतस्थिवांसा आस्थितौ द्वौ रथिनौ

तमेव इन्द्रं नाना पृथक् पृथक् हवेते आह्वयेते । यद्वा समानम् एकरथम् आरूढौ इन्द्राग्नी हवेते यज्ञार्थं यजमानैः पृथग् आहूयेते तयोः अन्यतरः सः इन्द्रः नाहमिति ॥ ८ ॥

यस्मात् ऋते जगासः जनाः न विजयन्ते विजयं न प्राप्नुवन्ति । अतः युध्यमाना: युद्धं कुर्वाणाः जनाः अवसे स्वरक्षणाय मम् इन्द्रं हवन्ते आह्वयन्ति । यश्च विश्वस्य सर्वस्य जगतः प्रतिमानं प्रतिनिधिः बभूव । यश्च अच्युतच्युत् अच्युतानां क्षयरहितानां पर्वतादीनां च्यावयिता । सः इन्द्रः इत्यादि पूर्ववत् ॥ ९ ॥

यः महि महत् एनः पापं दधानान् शश्वतः बहून् अमन्यमानान् आत्मानम् अजानतः इन्द्रम् अपूजयतो वा जनान् शर्वा । शृणाति शत्रून् अनेन इति शरुः वज्रः । तेन आयुधेन जघान । यश्च शर्धते उत्साहं कुर्वते अनात्मज्ञाय जनाय शृध्याम् उत्साहनीयं कर्म न अनुददाति न प्रयच्छति । यश्च दस्योः उपक्षपयितुः शत्रोः हन्ता घातकः सः इन्द्रः इत्यादि पूर्ववत् ॥ १० ॥

यः पर्वतेषु क्षियन्तम् इन्द्रभिया बहून् संवत्सरान् प्रच्छन्नो भूत्वा पर्वतगुहासु निवसन्तं शम्बरम् एतन्नामकं मायाविनम् असुरं चत्वारिंश्यां शरदि चत्वारिंशे संवत्सरे अन्वविन्दत् अन्विष्य अलभत । लब्ध्वा च यः ओजायमानं बलम् आचरन्तम् अहिम् आहन्तारं दानुं दानवं शयानं शम्बरम् असुरं जघान हतवान् सः इन्द्रः नाहमिति ॥ ११ ॥

यः सप्तरश्मिः सप्तसंख्याकाः पर्जन्याः रश्मयो यस्य । ते च रश्मयः वराहवः स्वतपसो विद्युन्महसो धूपयः श्वापयो

गृहमेधाश्च इत्येते ये चेमे अशिमिविद्विषः पर्जन्याः सप्त पृथिवीम् अभिवर्षन्ति वृष्टिभिः ( तै. आ. १. ९. ४. ५ ) इति तैत्तिरीयारण्यके ह्याम्नाताः । वृषभः वर्षकः तुविष्मान् वृद्धिमान् बलवान् वा सप्त सर्पणस्वभावान् सिन्धून् अपः सर्तवे सरणाय अवासृजत् अवसृष्टवान् । यद्वा गङ्गाद्याः सप्त मुख्या नदीः असृजत् । यश्च वज्रबाहुः सन् द्यां दिवम् आरोहन्तं रौहिणम् असुरम् अस्फुरत् जघान सः इन्द्रः इत्यादि पूर्ववत् ॥ १२ ॥

अस्मै इन्द्राय द्यावा पृथिवी । इतरेतरापेक्षया द्विवचनं प्र मित्रयोर्वरुणयोः ( ऋ. ७. ६६. १ ) इतिवत् । नमेते स्वयमेव प्रह्वीभवतः । चित् अपि च अस्य इन्द्रस्य शुष्मात् बलात् पर्वताः भयन्ते बिभ्यति । यः सोमपाः सोमस्य पाता निचितः सर्वैः । यद्वा अन्येभ्योऽपि देवेभ्यो दृढाङ्गः । वज्रबाहुः वज्रसदृशबाहुः । यश्च वज्रहस्तः वज्रयुक्तः । सः इन्द्रः इत्यादि पूर्ववत् ॥ १३ ॥

यः सुन्वन्तं सोमाभिषवं कुर्वन्तं यजमानम् अवति । यश्च पुरोडाशादीनि हवींषि पचन्तं यश्च ऊती ऊतये स्वरक्षायै शस्त्राणि शंसन्तं यश्च शशमानम् अवति स्तोत्रं कुर्वाणं रक्षति । ब्रह्म परिवृढं स्तोत्रं यस्य वर्धनं वृद्धिकरं भवति । तथा यस्य सोमः वृद्धिहेतुर्भवति । यस्य च इदम् अस्मदीयं राधः पुरोडाशादिलक्षणम् अन्नं वृद्धिकरं भवति । सः इन्द्रः इत्यादि पूर्ववत् ॥ १४ ॥

इदानीम् ऋषिः साक्षात्कृतम् इन्द्रं प्रति ब्रूते । हे इन्द्र यः दुध्रः दुर्धरः सन् सुन्वते सोमाभिषवं कुर्वते

पुरोडाशादिहवींषि पचते यजमानाय वाजम् अन्नं बलं वा आ दर्दर्षि भृशं प्रापयसि सः तादृशः त्वं सत्यः यथार्थभूतः असि न पुनर्नास्तीति बुद्धियोग्योऽसि । किल इति प्रसिद्धौ । ते तव प्रियासः सुवीरासः कल्याणपुत्रपौत्राः सन्तः वयं विश्वह सर्वेषु अहःसु विदथं स्तोत्रम् आ वदेम ब्रूयाम ॥ १५ ॥

---

९

म. ३. सू. ३३

पर्वतानां गिरीणां, शैलानाम् उपस्थात् उत्सङ्गात् निर्गत्य उशती समुद्रगमनं कामयमाने । गमने दृष्टान्तः । अश्वेइव । यथा विषिते मन्दुरातो विमुक्ते हासमाने अन्योन्यं जवेन स्पर्धमाने यद्वा हृष्यन्त्यौ अश्वेइव वडवे इव त्वरया गच्छन्त्यौ । तथा गावेव शुभ्रे । यथा द्वौ गावौ शोभमानौ वर्तेते तद्वच्छुभ्रे शोभमाने । किंच मातरा । यथा मातरौ धेनू रिहाणे । अन्तर्णीतसन्नर्थो लिहिः । वत्सं जिह्वया लेढुमिच्छन्त्यौ शीघ्रं गच्छतः तद्वत् समुद्रं गन्तुं जवात् गच्छन्त्यौ । पयसा संयुक्ते । विपाट् कूलविपाटनात् विपाशनाद्वा विमोचनाद्वा विपाट् । शुतुद्री शु क्षिप्रं तु तुन्ना तुन्नेव द्रवति गच्छतीति शुतुद्री । एतन्नामके नद्यौ प्र जवेते समुद्रं प्रति शीघ्रं गच्छतः । अत्र निरुक्तम् । पर्वतानाम् उपस्थात् उपस्थानात् । उशत्यौ कामयमाने । अश्वे इव विमुक्ते इति वा विषण्णे इति वा । हासमाने । हासतिः

स्पर्धायाम् । हर्षमाणे वा । गावौ इव शुभ्रे शोभने । मातरौ संरिहाणे । विपाट्छुतुद्र्यौ पयसा प्रजवेते (नि. ९. ३९) इति ॥ १ ॥

हे नद्यौ इन्द्रेषिते इन्द्रेण प्रेषिते प्रसवं तस्य इन्द्रस्य अनुज्ञां भिक्षमाणे प्रार्थयमाने युवां समुद्रम् अच्छ आभिमुख्येन याथः गच्छथः । तत्र दृष्टान्तः । रथ्येव इति । यथा । रथिनौ लक्ष्यं देशम् अभिगच्छतः तद्वत् । किं कुर्वत्यौ । समाराणे परस्परं संगच्छन्त्यौ । ऊर्मिभिः तरङ्गैः पिन्वमाने परिसरप्रदेशं संतर्पयन्त्यौ । शुभ्रे शोभमाने । युवां समुद्रं गच्छथ इति पूर्वेण अन्वयः । तथा वां युवयोर्मध्ये अन्या एका अन्याम् अपरां नदीम् अप्येति अपिगच्छति । परस्परम् ऐक्यम् आपद्यत इत्यर्थः ॥ २ ॥

हे नद्यौ मातृतमाम् अतिशयेन मातरं सिन्धुं स्रवन्ती शुतुद्रीं त्वाम् अच्छ आभिमुख्येन अयासम् विश्वामित्रोऽहं प्राप्तोऽभूवम् । उर्वीं महतीं सुभगां सौभाग्यवतीं विपाशं त्वाम् अगन्म वयं प्राप्ताः स्मः । किं कुर्वत्यौ । मातरा मातरौ द्वे धेनू वत्सम् इव संरिहाणे । अन्तर्णीतसन्नर्थो लिहिः । जिह्वया लेढुम् इच्छन्त्यौ यथा वत्सम् अनुगच्छतः तद्वत् समानम् एकं योनिं स्थानं समुद्रम् अनु अभिलक्ष्य संचरन्ती सम्यक् चरन्त्यौ । युवाम् अयासिषम् इति पूर्वेण संबन्धः ॥ ३ ॥

एवं स्तुते नद्यौ विश्वामित्रं प्रत्यूचतुः । एना एनेन पयसा पिन्वमानाः संतर्पयन्त्यः देवकृतं देवेन इन्द्रेण कृतं संदिष्टं योनिं स्थानं समुद्रम् अनु लक्षीकृत्य चरन्तीः गच्छन्त्यः

वयम् आस्महे । द्वयोर्बहुवचनं पूजार्थम् । तासाम् अस्माकं सर्गतक्तः सर्गे गमने प्रवृत्तः प्रसवः उद्योगः न वर्तवे निवर्तनाय न भवति । कियुः किम् इच्छन् असौ विप्रः ब्राह्मणः नद्यः नदीः अस्मान् जोहवीति भृशम् आह्वयति ॥ ४ ॥

विश्वामित्रो नदीः प्रति ब्रूते । ऋतावरीः । ऋतम् उदकम् । तद्वत्यो हे नद्यो यूयं मे विश्वामित्रस्य मम सोम्याय उत्तीर्य अहं सोमं संपादयामि इत्येवं सोमसंपादिने वचसे तदर्थम् एवैः । पञ्चम्यर्थे तृतीया । शीघ्रगमनेभ्यः मुहूर्तं मुहूर्तमात्रम् उप रमध्वम् । उपपूर्वो रमिः उपसंहारे वर्तते । क्षणमात्रं शीघ्रगमनाद् उपरता भवत । सामान्येन नदीषु उच्यमानासु समीहितं प्रयोजनम् अकुर्वतीषु पुरोवर्तिनीं शुतुद्रीं प्रति ब्रूते । कुशिकस्य राजर्षेः सूनुः विश्वामित्रोऽहं बृहती महत्या मनीषा मनीषया स्तुत्या अवस्युः आत्मनो रक्षणम् इच्छन् सन् सिन्धुं शुतुद्रीं त्वाम् अच्छ आभिमुख्येन प्र अह्वे प्रकर्षेण आह्वयामि । अत्र निरुक्तम् । उपरमध्वं मे वचसे सोम्याय सोमसंपादिने ऋतावरीः ऋतवत्यः । ऋतम् इति उदकनाम । प्रति ऋतं भवति । मुहूर्तम् एवैः अयनैः अवनैर्वा । प्र अभिह्वयामि सिन्धुम् । बृहत्या महत्या मनीषया मनस ईषया स्तुत्या प्रज्ञया वा अवनाय कुशिकस्य सूनुः । कुशिको राजा बभूव ( नि. २. २५ ) इति ॥ ५ ॥

नद्यः प्रत्यूचुः । हे विश्वामित्र वज्रबाहुः । वज्रयुक्तो बाहुः यस्य असौ वज्रबाहुः । तादृशो बलवान् इन्द्रः नदीः

अस्मान् अरदत् । रदतिः खनतिकर्मा । अखनत् । कथमखनत् । उच्यते । नदीनां शब्दकारिणीनाम् अपां परिधिं परितो निहितम् उदकम् अन्तः कृत्वा परितो वर्तमानम् इत्यर्थः । तादृशं वृत्रम् । वृणोति आकाशम् इति वृत्रो मेघः । तं मेघम् अपाहन् जघान । तस्मिन् हते आपः पतिताः । ताभिः गच्छन्तीभिः वयं खाताः । एवं मेघहननद्वारेण अखनत् । न केवलम् अखनत् । किं तर्हि । सविता सर्वस्य जगतः प्रेरकः सुपाणिः शोभनहस्तः उत्पत्तिस्थितिकर्तृत्वात् तादृशः देवः द्योतमानः इन्द्रः अस्मान् अनयत् । मेघभेदनं कृत्वा उदकप्रेरणेन समुद्रम् अपूरयत् । तस्य तादृशसामर्थ्योपेतस्य इन्द्रस्य प्रसवे अभ्यनुज्ञायां वर्तमानाः उर्वीः उदकैः प्रभूताः वयं यामः गच्छामः । न तव वचनाद् उपरमामहे । उक्तार्थं यास्को ब्रवीति । इन्द्रो अस्मान् अरदत् वज्रबाहुः । रदतिः खनतिकर्मा । अपाहन् वृत्रम् परिधिं नदीनाम् इति व्याख्यातम् । देवोऽनयत् सविता सुपाणिः कल्याणपाणिः । पाणिः पणायतेः पूजाकर्मणः । प्रगृह्य पाणी देवान् पूजयन्ति । तस्य वयं प्रसवे याम उर्वीः उर्व्यः (नि. २. २६) इति ॥ ६ ॥

योऽयम् इन्द्रः अहिं मेघं विवृश्चत् उदकप्रेरणार्थं जघानेति यत् कर्म छेदनरूपं तत् इदं तस्य इन्द्रस्य वीर्यं सामर्थ्यं शश्वधा सर्वदा प्रवाच्यं प्रकर्षेण वचनीयम् । तथा स इन्द्रः परिषदः परितः आसीनान् प्रतिबन्धकारिणः असुरान् वज्रेण वि जघान । अथ अयनं स्थानम् इच्छमानाः इच्छन्त्यः आपः आयन् यान्ति ॥ ७ ॥

नद्यः प्रसङ्गात् इन्द्रस्तोत्रं कृत्वा विश्वामित्रं प्रत्यूचुः। जरितः स्तोतः हे विश्वामित्र ते त्वदीयं यत् संवादात्मकं वचः त्वं नः अभीत्या घोषान् उद्घोषयन् वर्तसे तद् वचः मा अपि मृष्ठाः मा विस्मार्षीः। किं कारणम्। उत्तरा युगानि उत्तरेषु याज्ञिकेषु युगेषु अहःसु उक्थेषु कारो शस्त्राणां कर्तः त्वं नः अस्मान् प्रति जुषस्व संवादात्मकेन तेन वाक्येन प्रतिसेवस्व। इदानीं नः अस्मान् पुरुषत्रा पुरुषेषु मा नि कः। उक्तिप्रत्युक्तिरूपसंवादवाक्याध्यापनेन नितरां पुंवत् प्रगल्भाः मा कार्षीः। ते तुभ्यं नमः ॥ ८ ॥

विश्वामित्रो नदीः प्रत्युवाच। स्वसारः भगिन्यः सिन्धवः हे नद्यः कारवे स्तोत्रं कुर्वाणस्य मम वचनं सु सुष्ठु ओ शृणोत शृणुत एव। अनसा शकटेन रथेन च सह दूरात् विप्रकृष्टात् वः युष्मान् ययौ प्राप्तोऽस्मि। यूयं सु सुष्ठु नि नमध्वम् आत्मना स्वयं प्रह्वाः भवत। तथा सुपाराः। रथादीनां तीरात् सुखेन अवरोहणारोहणे यथा स्यातां तथा शोभनरोधस्कश्च भवत। किंच यूयं स्रोत्याभिः स्रवणशीलाभिः अद्भिः अधोअक्षाः रथाङ्गस्य अक्षस्य अधस्ताद् भवत। यदा आपः अक्षस्य अधस्ताद् भवन्ति तदा रथादीनि नेतुं शक्यन्ते। तस्मात् तत्परिमाणोदकाः भवत इति अभिप्रायः ॥ ९ ॥

नद्यः पूर्वं विश्वामित्रं प्रत्याख्याय अनया ऋचा तस्य वाक्यम् आशुश्रुवुः। कारो स्तोत्रं कुर्वाण हे विश्वामित्र ते तव वचांसि इमानि वाक्यानि आ शृणवाम शृणुमः। तव समीहितं प्रयोजनं कुर्मः इत्यर्थः। अनसा शकटेन रथेन च सह

ययाथ । यतो दूरात् आगतोऽसि । वयं च ते त्वदर्थं नि नंसै नीचैर्नमाम । प्रत्येकविवक्षया अत्र एकवचनम् । रथेन गन्तुं गाधोदका भवाम इत्यर्थः । तत्र दृष्टान्तः । पीप्यानेव योषा । पीप्याना पुत्रं स्तनं पाययन्ती योषा माता यथा प्रह्वीभवति । दृष्टान्तान्तरम् । यथा कन्या युवतिः मर्यायेव मनुष्याय पित्रे भ्रात्रे वा शश्वचै परिष्वजनाय नम्रीभवति तद्वत् ते प्रह्वीभवामः । ते इति पुनरुक्तिः आदरार्थम् । एताम् ऋचं यास्कः एवं व्याचष्टे । आ शृणवाम ते कारो वचनानि । याहि दूरात् अनसा च रथेन च । निनमाम ते पाययमानेव योषा पुत्रं मर्यायेव कन्या परिष्वजनाय निनमा इति वा ( नि. २. २७ ) इति ॥ १० ॥

विश्वामित्रो नदीः प्रत्युवाच । अङ्ग इत्यामन्त्रणे । हे नद्यः यत् यस्मात् युष्माभिः उत्तितीर्षोः मम उत्तरणम् अभ्यनुज्ञातं तस्मात् भरताः भरतकुलजाः मदीयाः सर्वे त्वा परस्परम् एकताम् आपन्नां नदी त्वां संतरेयुः सम्यगुत्तीर्णा भवेयुः । तदेव विशिनष्टि । गव्यन् गाः उदकानि तरीतुम् इच्छन् इषितः त्वया अभ्यनुज्ञातः इन्द्रजूतः युष्माकं प्रवर्तकेन इन्द्रेण च प्रेरितः ग्रामः भरतानां संघः अर्षात् संतरेत् । यतः सर्गतक्तः गमनाय प्रवृत्तः प्रसवः तेषाम् उद्योगः अह पूर्वं युष्माभिः अनुज्ञातः । अहं तु यज्ञियानां यज्ञार्हाणां वः युष्माकं सुमतिं शोभनां स्तुतिम् आ वृणे सर्वतः सभजे ॥ ११ ॥

गव्यवः गाः आत्मनः इच्छन्तः भरताः भरतकुलजाः सर्वे अतारिषुः तां नदीं समतरन् । विप्रः मेधावी विश्वामित्रः

नदीनां सुमतिं शोभनां स्तुतिं समभक्त समभजत । यूयं तु यथापूर्वम् इषयन्तीः कुल्यादिद्वारा अन्नं कुर्वाणा अत एव सुराधाः शोभनधनोपेताः यूयं वक्षणाः कृत्रिमसरितः कुल्याः प्र पिन्वध्वं प्रकर्षेण तर्पयत । आ पृणध्वं ताः सर्वतः पूरयत च । शीभं शीघ्रं यात गच्छत च ॥ १२ ॥

पूर्वम् उत्तितीर्षुः विश्वामित्रो नदीः उक्त्वा अधुना उत्तितीर्षुः पुनराह । हे नद्यः वः युष्माकम् ऊर्मिः तरङ्गः शम्याः युग्यकण्ठपार्श्वादिसंलग्नाः रज्जवः उत् ऊर्ध्वं यथा भवन्ति तथा हन्तु गच्छतु । स तरङ्गो रज्जूनाम् अधो गच्छतु इति अभिप्रायः । तथा हे आपः यूयं योक्त्राणि ता रज्जूः मुञ्चत । यथा न स्पृशन्ति तथा यान्तु इत्यभिप्रायः । व्येनसा विगतपापे अत एव अदुष्कृतौ कल्याणकर्मकारिण्यौ अघ्न्यौ अघ्न्ये न केनापि तिरस्करणीये विपाट्छुतुद्र्यौ शूनं समृद्धिं मा आरताम् ,आगच्छताम् । विश्वामित्रः यावत् न तरति तावत् जलपूर्णे मा भवताम् इत्यभिप्रायः । एवं विश्वामित्रो नदीः स्तुत्वा ताभिः अनुज्ञातः अतरदिति ॥ १३ ॥

---

म. ४. सू. ४२

क्षत्रियस्य क्षत्रियजात्युत्पन्नस्य विश्वायोः कृत्स्नमनुष्याधीशस्य । मम इति आत्मनो निर्देशः । द्विता क्षितिस्वर्गभेदेन द्वित्वापन्नं राष्ट्रम् । मम त्रसदस्योः । विश्वे सर्वे अमृताः देवाः यथा नः अस्माकं भवन्ति तथा राष्ट्रं प्रजाश्च इत्यर्थः । वरुणस्य वारकस्य वरुणात्मनो वा कृष्टेः मनुष्यस्य तद्वतो वा उपमस्य । अन्तिकनाम एतत् । सर्वेषाम् अन्तिकतमस्य वव्रेः । रूपनाम एतत् । रूपवतो मम क्रतुं कर्म सचन्ते सेवन्ते देवाः सर्वेऽपि । अहं च राजामि । राजतिः ऐश्वर्यकर्मा । सर्वेश्वरः भवामि । यद्वा उपमस्य वव्रेः कृष्टेः राजामि इति योज्यम् ॥ १ ॥

अहम् एव च राजा वरुणः भवामि । मह्यं मदर्थम् एव प्रथमा मुख्यानि तानि प्रसिद्धानि असुर्याणि असुरविघातकानि बलानि धारयन्त । शिष्टं गतम् ॥ २ ॥

अहं त्रसदस्युः इन्द्रः इन्द्रोऽप्यस्मि । अहं वरुणश्च । ते महित्वा महित्वेन उर्वी विस्तीर्णे गभीरे दुरवगाहे अवकाशवत्यौ वा सुमेके सुरूपे रजसी द्यावापृथिव्यौ ते अपि अहमेव । विद्वान् जानन् अहं त्वष्टेव प्रजापतिरिव विश्वा भुवनानि सर्वाणि भूतानि समैरयं संप्रेरयम् । रोदसी द्यावापृथिव्यौ धारयं च धृतवान् अस्मि ॥ ३ ॥

अहमेव उक्षमाणाः सिञ्चतीः अपः अपिन्वम् असेचयम् । तथा ऋतस्य उदकस्य आदित्यस्य वा सदने स्थाने निमित्ते सति दिवं द्युलोकं धारयम् । यद्वा उदकाधारे स्थाने दिवम् आदित्यं धारयम् । अहमेव ऋतेन उदकेन निमित्तेन अदितेः पुत्रः ऋतावा अभूवम् । उत अपि च भूम व्याप्तम् आकाशं त्रिधातु त्रिप्रकारं वि विशेषेण प्रथयत् । मदर्थमेव क्षित्यादिलोकत्रयम् अकार्षीत् परमेश्वरः ॥ ४ ॥

मा मामेव स्वश्वाः शोभनाश्वाः वाजयन्तः संग्रामम् इच्छन्तः नरः नेतारो भटाः अनुगच्छन्ति इति शेषः । माम् एव वृताः सन्तः समरणे संग्रामे हवन्ते आह्वयन्ति युद्धार्थम् । मघवा धनवान् अहम् इन्द्रः सन् आजिं रणं कृणोमि करोमि । अभिभूत्योजाः परेषाम् अभिभाविबलः अहं रेणुम् इयर्मि प्रेरयामि ॥ ५ ॥

अहं त्रसदस्युः ता तानि प्रसिद्धानि विश्वा सर्वाणि चकरम् अकार्षम् । अप्रतीतम् अप्रतिगतं मा मां दैव्यं सहः देवसंबन्धि सहो बलं नकिः वरते नैव वारयति । यत् यस्मात् सोमासः सोमाः मा मां ममदन् अमदयन् । यच्च उक्था शस्त्राण्यपि ममदन् । तस्मात् मत्तः अपारे दूरपारे उभे रजसी द्यावापृथिव्यौ भयेते चलतः ॥ ६ ॥

इतः परम् इन्द्रावरुणयोः स्तुतिः । हे वरुण तस्य ते । कर्मणि षष्ठी । तं त्वां विश्वा सर्वाणि ता तानि भुवनानि भूतजातानि विदुः जानन्ति । हे वेधः । स्तोतृनाम एतत् । हे स्तोतः वरुणाय प्र ब्रवीषि वरुणं स्तौषि । हे

इन्द्र त्वं वृत्राणि वैरिणः जघन्वान् हतवान् इति शृण्विषे श्रूयसे । किंच हे इन्द्र त्वं वृतान् आच्छन्नान् सिन्धून् स्यन्दनस्वभावान् अप्संघान् अरिणाः अगमयः ॥ ७ ॥

पुरुकुत्सस्य महिषी दौर्गहे बन्धनस्थिते ।
पत्यावराजकं दृष्ट्वा राष्ट्रं पुत्रस्य लिप्सया ॥ १ ॥
यदृच्छया समायातान् सप्तर्षीन् पर्यपूजयत् ।
ते च प्रीताः पुनः प्रोचुर्यजेन्द्रावरुणौ भृशम् ॥ २ ॥
सा चेन्द्रावरुणाविष्ट्वा त्रसदस्युमजीजनत् ।
इतिहासमिमं जानन् ऋषिर्ब्रूते ऋचाविह ॥ ३ ॥

*अथ अस्माकम् अत्र अराजके देशे अस्यां पृथिव्यां वा* पितरः पालयितारः ते आसन् अभवन् । एते सप्त ऋषयः प्रसिद्धाः दौर्गहे दुर्गहस्य पुत्रे पुरुकुत्से बध्यमाने दृढं पाशैः अस्या. अस्यै पुरुकुत्सान्यै त्रसदस्युम् आयजन्त प्रादुः इन्द्रावरुणयोः अनुग्रहात् । कीदृशं तम् । वृत्रतुरं वृत्रस्य शत्रोर्हन्तारम् । अर्धदेवम् । देवानाम् अर्धे समीपे वर्तमानम् । यद्वा देवानाम् अर्धभूतम् इन्द्रम् न इन्द्रमिव स्थितं पुत्रं ददवन्तः । यत् सर्वेषाम् अर्धम् इन्द्रः प्रति तस्माद् इन्द्रो देवतानां भूयिष्ठभाक्तमः (तै. सं. ५. ४. ८. ३) इति तैत्तिरीयकम् ॥ ८ ॥

हे इन्द्रावरुणौ पुरुकुत्सानी पुरुकुत्सस्य पत्नी ऋषिप्रेरिता वां युवाम् अदाशत् हि अप्रीणयत् खलु । हव्येभिः हविर्भिः नमोभिः स्तुतिभिश्च । अथ राजानं त्रसदस्युं वृत्रहणम्

अर्धदेवम् उक्तलक्षणं पुत्रम् अस्याः अस्यै पुरुकुत्सान्यै ददथुः दत्तवन्तौ इति ॥ ९ ॥

राया धनेन मदेम ससवांसः युवां संभक्तारः वयम् । हव्येन देवाः मोदन्तु यवसेन गावः । तां धेनुं प्रीणयित्रीं रयिं हे इन्द्रावरुणौ विश्वाहा विश्वस्य हन्तारौ युवं युवां नः अस्माकं धत्तं दत्तम् । कीदृशीम् । अनपस्फुरन्तीम् अनवहिंसिताम् । यद्वा विश्वाहा इति अव्ययम् । सर्वदा इत्यर्थः ॥ १० ॥

---

## ११

### म. ४. सू. ५१

इदम् उ पुरतो दृश्यमानम् इदं त्यद् तद् अस्माभिः स्तुत्यं सर्वप्रसिद्धं पुरुतमम् अत्यन्तप्रभूतं ज्योतिः तेजः वयुनावत् । वेतेः कान्तिकर्मण इदम् । प्रकृष्टकान्तिमत् । अथवा वयुनम् इति प्रज्ञानाम । प्रज्ञोपेतम् । सर्वस्य प्रज्ञापकम् इत्यर्थः । कीदृक् तेजः । पुरस्तात् पूर्वस्यां दिशि तमसः अन्धकारात् अस्यात् उदतिष्ठत् । एवं सति नूनं सत्यं दिवः आदित्यस्य दुहितरः दुहितृस्थानीयाः विभातीः विभानं कुर्वतीः उषसो जनाय यजमानाना गातुं गमनं गमनादिव्यापारसामर्थ्यं कृणवन् अकुर्वन् ॥ १ ॥

चित्राः चायनीयाः उपसः पुरस्तात् पूर्वस्यां दिशि अस्युः तिष्ठन्ति । व्याप्ताः इत्यर्थः । तत्र दृष्टान्तः । अध्वरेषु मिताः खाताः स्वरवः यूपाः इव । ते यथा वेद्याः पुरतो भासन्ते तद्वत् । यद्यपि स्वरुशब्दो यूपच्छेदपतितप्रथमशकलवाची तथापि अत्र मितशब्दश्रवणाद् यूपवचनः । ताः व्रजस्य वारकस्य तमसो द्वारा द्वाराणि वि उच्छन्तीः शुचयः दीप्ताः पावकाः शोधिकाः अव्रन् व्यावृण्वन् ॥ २ ॥

अद्य अस्मिन् दिने उच्छन्तीः तमः विवासयन्त्यः मघोनीः धनवत्यः उपसः भोजान् भोजयितॄन् यजमानान् तेषां राधोदेयाय सोमादिधनदानाय चितयन्त प्रज्ञापयन्ति । अचित्रे अचायनीये तमसो विमध्ये । अत्यन्तगाढान्धकारे इत्यर्थः । तत्र पणयः वणिजः इव अदातारः अबुध्यमानाः ससन्तु स्वपन्तु ॥ ३ ॥

हे देवीः द्योतमानाः उपसः वः युष्मान् सनयः पुराणः नवो वा यामः गमनसाधनः सः रथः अद्य अस्मिन् यागदिने कुवित् बहुवारं बभूयात् भवेत् गच्छेत् इत्यर्थः । येन रथेन हे रेवतीः धनवत्यो यूयं नवग्वे दशग्वे सप्तास्ये सप्तच्छन्दोयुक्तमुखे अङ्गिरे अङ्गिरोगणे । तौ द्वौ तत्र येऽप्यङ्गिरसः तेषां गणे । तथान्यत्र नवग्वो नु दशग्वो अङ्गिरस्तमः (ऋ. १०. ६२. ६) इति । रेवत् धनवत् यथा भवति तथा ऊप विभात कृतवत्यः ॥ ४ ॥

हे देवीः द्योतमानाः उपसः यूयं हि खलु ऋतयुग्भिः यज्ञगामिभिः अ[illegible]वनानि सद्यः परिप्रयाथ परितः प्रकृष्टं

गच्छथ । किं कुर्वत्यः । ससन्तं स्वपन्तं द्विपात् चतुष्पात् मनुष्यगवादिलक्षणं जीवं चरथाय चरणाय गमनादिव्यवहाराय प्रबोधयन्तीः प्रबोधयन्त्यः सत्यः परिप्रयाथ ॥ ५ ॥

आसाम् उषसां मध्ये क्व स्वित् अभूद् अद्य कतमा पुराणी पुरातनी । यया ऋभूणां संबन्धीनि विधाना चमसादिनिर्माणानि विदधुः अकुर्वन् ऋभवः । यत् याश्च उषसः शुभ्राः दीप्ताः शुभं चरन्ति शोभां दीप्तिं कुर्वन्ति । ताः अजुर्याः अजीर्णाः नित्यनूतनाः न विज्ञायन्ते । यतः सदृशीः सदृश्यः सर्वेष्वपि दिवसेषु एकरूपाः अतः अद्यतन्य एताः एताः पुराण्यः इति न ज्ञायन्ते । उषःसादृश्यं सदृशीरद्य सदृशीरिदु श्वः ( ऋ. १. १२३. ८ ) इत्यत्र प्रतिपादितम् ॥ ६ ॥

ता घ । घ इति प्रसिद्धौ । ताः खलु उपकारिण्यः ताः भद्राः कल्याण्यः स्तुत्या वा उषसः पुरा पूर्वम् आसुः अभवन् । अभिष्टिद्युम्नाः अभिगमनमात्रेण द्युम्नं धनं यासां ताः । ऋतजातसत्याः । ऋतार्थं यज्ञार्थं जाताश्च ताः सत्याः सत्यफलाश्च तादृश्यः । यासु उषःसु ईजानः यागं कुर्वाणः उक्थैः शस्त्रैः शशमानः शंसमानः स्तुवन् सामभिः स्तोत्रं निष्पादयन् शंसन् शस्त्राणि कुर्वन् द्रविणं धनं सद्यः आप प्राप्नोति । ता भद्रा इति संबन्धः ॥ ७ ॥

ता उषसः आ सर्वतः चरन्ति । समना सर्वतः समानाः पुरस्तात् पूर्वस्यां दिशि समानतः समानात् देशात् अन्तरिक्षात् समना पप्रथानाः प्रथमानाः ऋतस्य यज्ञस्य सदसः सदः ।

तत्रत्यम् ऋत्विग्धविरादिकम् इत्यर्थः । बुधानाः बोधयन्त्यः । अन्तर्भावितण्यर्थोऽयम् । 'एवं महानुभावाः उषसो जरन्ते स्तूयन्ते । गवां सर्गाः न उदकानां सृष्टयः इव । गवां सर्गा न रश्मयः ( ऋ. ४. ५२. ५ ) इति हि श्रुतम् । ता यथा सर्वत्र प्रसङ्गाद् उपकारकत्वाच्च स्तूयन्ते तद्वत् ॥ ८ ॥

ताः एव उषसः । इदिति पूरणः । नु अद्य समना समानाः एकधा इत्यर्थः । समानीः एकरूपाः अमीतवर्णाः अहिंसितवर्णाः अपरिमितवर्णा वा उपसश्चरन्ति सर्वतः । किं कुर्वत्यः । अभ्वम् । महन्नामैतत् । अतिमहत् असितं कृष्णं रूपं गूहन्तीः गोपयन्त्यः रुशद्भिः रोचमानैः तनूभिः स्वशरीरैः शुक्राः दीप्ताः शुचयः शुद्धाः रुचानाः रोचमाना रोचयन्त्यो वा ॥ ९ ॥

हे दिवो दुहितरः द्योतमानस्य आदित्यस्य दुहितृस्थानीयाः विभातीः विभात्यो विशेषेण भानं कुर्वत्यः अस्मासु प्रजावन्तं रयिं पुत्राद्युपेतं धनं यच्छत दत्त । हे देवीः देव्यः स्योनात् सुखात् निमित्तभूतात् वः युष्मान् प्रतिबुध्यमानाः प्रतिबोधयन्तो वयं सुवीर्यस्य पतयः स्याम । पुत्रादिसहितस्य धनस्य पालका भवेम ॥ १० ॥

हे दिवो दुहितरः हे उषसः विभातीः वः युष्मान् तत् उत्तरार्धप्रथमपादेन वक्ष्यमाणं फलं यज्ञकेतुः यज्ञ एव केतुः प्रज्ञापको यस्य तादृशोऽहम् उप ब्रुवे उपेत्य ब्रवीमि । अथ बहुवद् उच्यते । वयं स्तुवन्तः जनेषु अस्मत्समानेषु मध्ये यशसः कीर्तेः अन्नस्य वा स्वामिनः स्याम । तत् यशः द्यौः पृथिवी च देवी धत्तां धारयताम् ॥ ११ ॥

## १२

### म. ५. सू. ६२

सूर्यस्य ऋतं सत्यभूतं मण्डलम् ऋतेन उदकेन अपिहितम् आच्छादितं ध्रुवं शाश्वतम् अपश्यम् इति संबन्धः । यत्र वां युवाभ्यां स्थितिः तत् इत्यर्थः । सूर्यमण्डले मित्रावरुणयोः स्थितिः चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः (ऋ. १. ११५. १) इत्यादिषु प्रसिद्धा । यत्र यस्मिन् मण्डले स्थितान् अश्वान् विमुञ्चन्ति विमोचयन्ति स्तोतारः । मन्देहादिभिर्निरुद्धान् इत्यर्थः । अथवा शीघ्रधावनाय स्तुत्या प्रेरयन्ति । यस्मिंश्च मण्डले॰दश शता शतानि सहस्रसंख्याका रश्मयः तस्थुः तिष्ठन्ति तादृशं देवानां वपुषां वपुष्मतां तेजोवताम् अग्न्यादीनां श्रेष्ठं प्रशस्यम् । मत्वर्थलक्षणा । अथवा व्यधिकरणषष्ठी । देवानां वपुषां शरीराणां श्रेष्ठम् । मण्डलं हि सूर्यस्य वपुःस्थानीयम् । तत् मण्डलम् अपश्यम् । अथवा वां युवयोर्मध्ये सूर्यस्य मण्डलम् अपश्यम् इति व्याख्येयं मैत्रं वा अहः (तै. ब्रा. १. ७. १०. १) इति श्रुतेर्मित्रस्यैव सूर्यत्वादित्याशयेन ॥ १ ॥

हे मित्रावरुणा वां युवयोः तत् महित्वं महत्त्वं सु सुष्ठु अतिप्रशस्तम् इत्यर्थः । किं तद् इत्युच्यते । ईर्मा सततगन्ता सर्वस्य प्रेरको वा आदित्यः अहभिः अहोभिः वर्षर्तुसंबन्धिभिः तस्थुषीः स्थावरभूता अपः दुदुहे दुग्धे ।

किंच स्वसरस्य स्वयं सर्तुः आदित्यस्य विश्वाः सर्वाः धेनाः लोकानां प्रीणयित्रीर्द्युतीः पिन्वथः वर्धयथः । वां युवयोः एकः अप्रतियोगी पविः । पविरिति रथस्य नेमिः । पवी रथनेमिर्भवति (नि. ५. ५) इति यास्कवचनात् । तथापि अत्र लक्षितलक्षणया रथे वर्तते केवलचक्रस्य आवर्तनायोगात् । युवयोरेको रथः अनु आ ववर्त अनुक्रमेण परिभ्रमति ॥ २ ॥

हे मित्रराजाना । मित्रभूताः स्तोतारः राजानः स्वामिनः ईश्वराः भवन्ति ययोः सकाशात् तौ मित्रराजानौ । हे वरुणा । प्रतियोग्यपेक्षया द्विवचनम् । हे देवौ महोभिः तेजोभिः स्वसामर्थ्यैः पृथिवीम् उत अपि च द्याम् अधारयतम् । हे देवौ युवाम् ओषधीः वर्धयतं वृष्टिप्रेरणेन । गाः पिन्वतं गवाश्वादीन् वर्धयतम् । तदर्थं वृष्टिम् अव सृजतम् अवाङमुखं प्रेरयतं हे जीरदानू क्षिप्रदानौ ॥ ३ ॥

हे मित्रावरुणौ वां युवाम् अश्वासः अश्वाः सुयुजः सुष्ठु रथे युक्ताः सन्तः आ वहन्तु । यतरश्मयः सारथिनियतप्रग्रहाः ते अर्वाक् उप यन्तु । घृतस्य उदकस्य निर्णिक् रूपं वाम् अनु वर्तते अनुगच्छति । किंच प्रदिवि । पुराणनामैतत् । पुराणाः सिन्धवः उप क्षरन्ति उपगच्छन्ति युवयोरनुग्रहात् ॥ ४ ॥

श्रुतां विश्रुताम् अमतिम् । रूपनामैतत् । शरीरदीप्तिम् इत्यर्थः । ताम् अनु वर्धत् अनुवर्धयन्तौ । बर्हिः यज्ञः । सः इव स यथा यजुषा मन्त्रेण रक्ष्यते तद्वत् उर्वी रक्षमाणा पालयन्तौ नमस्वन्ता अन्नवन्तौ हे धृतदक्षा आत्तबलौ हे

मित्र हे वरुण हे मित्रावरुणौ युवाम् उक्तलक्षणौ सन्तौ इळासु यागभूमिषु अन्तः मध्ये गर्ते अधि रथे आसाथे उपविशथः। रथोऽपि गर्त उच्यते (नि. ३. ५) इति यास्कः। आ रोहथो वरुण मित्र गर्तम् (ऋ. ५. ६२. ८) इति ॥ ५ ॥

अङ्क्रिविहस्ता अकृपणहस्तौ। दानशूरौ इत्यर्थः। कस्मै। सुकृते शोभनस्तुतिकर्त्रे। परस्पा परस्तात् पातारौ रक्षितारौ हे वरुणा मित्रावरुणौ युवां यं यजमानम् इळासु यागभूमिषु अन्तः मध्ये आसाथे रक्षथः तस्मै सुकृते अङ्क्रिविहस्ता परस्पा च भवथ इति संबन्धः। किंच युवां राजाना राजमानौ अहृणीयमाना अक्रुध्यन्तौ द्वौ परस्परं सह साहित्येन क्षत्रं धन सहस्रस्थूणम् अनेकावष्टकस्तम्भोपेतं सौधादिरूपं गृहं च बिभृथः धारयथः सुकृते यजमानाय। अथवा क्षत्रं बलम् अपरिमिताभिः स्थूणाभिः उपेतं रथं चागमनार्थं सह धारयथः ॥ ६ ॥

अनयो रथः हिरण्यनिर्णिक् हिरण्यरूपः। निर्णिगिति रूपनाम। अस्य रथस्य स्थूणा कीलकादयः अयः। हिरण्यनामैतत्। अयोविकारा इत्यर्थः। अयोमया वा। तादृशो रथः दिवि अन्तरिक्षे वि भ्राजते। किमिव। अश्वाजनीव। अश्वाः व्यापनशीला मेघाः तान् अजति इति अश्वाजनी विद्युत्। सा इव दिवि भ्राजते। किंच भद्रे कल्याणे स्तुत्ये वा क्षेत्रे देवयजने तिल्विले वा। तिल स्नेहने। तिलः स्निग्धा इला भूमिर्यस्य तत् क्षेत्रं तिल्विलं देवयजनम्।

घृतसोमादिना स्निग्धे भद्रे च क्षेत्रे निमिता स्थूणा-यूपयष्टि-रवस्थितः । मध्वः मधुपूर्णं गर्त्यस्य गर्तं रथं सनेम संभजेम । कर्मणि षष्ठचौ । अवीति पूरणः । अथवा गर्तस्य अधि रथस्य उपरि मध्वो मधु सोमरसं सनेम स्थापयेम इत्यर्थः ॥ ७ ॥

उषसो व्युष्टौ प्रातःकाले इत्यर्थः । सूर्यस्य उदिता उदितौ उदये । स एव कालः प्रकारान्तरेण उक्तः । तस्मिन् काले हिरण्यरूपम् अयःस्थूणम् अयोमयशङ्कुं गर्तं रथं हे वरुण हे मित्र युवां गर्तम् आ रोहथः यज्ञं प्राप्तुम् । अतः अस्माद् हेतोः अदितिम् अखण्डनीयां भूमिं दितिं खण्डितां प्रजादिकां च चक्षाथे पश्यथः ॥ ८ ॥

हे सुदानू शोभनदानौ हे भुवनस्य गोपा युवां बंहिष्ठं बहुतमं यत् अच्छिद्रम् अनवच्छिन्नं शर्म सुखं गृहं वा नातिविधे अतिवेद्धुम् अशक्यं शर्मेति शर्मविशेषणम् । तादृशं शर्म धारयथः । तेन शर्मणा नः अस्मान् अविष्टं रक्षतम् । हे मित्रावरुणौ सिषासन्तः धनानि सभक्तुम् इच्छन्तो वयं जिगीवांसः शत्रूणां धनानि जेतुम् इच्छन्तः स्याम भवेम ॥ ९ ॥

हे स्तोतः तवसं बलवन्तं पर्जन्यम् अच्छ अभिप्राप्य वर्द प्रार्थय । पर्जन्यशब्दो यास्केन बहुधा निरुक्तः । पर्जन्यः तृपेः आद्यन्तविपरीतस्य तर्पयिता जन्यः परो जेता वा जनयिता वा प्रार्जयिता वा रसानाम् ( नि. १०. १० ) इति । आभिः गीर्भिः स्तुतिवाग्भिः स्तुहि । नमसा अन्नेन हविर्लक्षणेन आ विवास सर्वतः परिचर । यः पर्जन्यः वृषभः अपां वर्षिता जीरदानुः क्षिप्रदानः कनिक्रदत् गर्जनशब्दं कुर्वन् ओषधीषु गर्भस्थानीयं रेतः उदकं दधाति स्थापयति तं स्तुहि ॥ १ ॥

अयं मन्त्रो निरुक्ते स्पष्टं व्याख्यातः । तदेवात्र लिख्यते । पर्जन्यो विहन्ति वृक्षान् विहन्ति च रक्षांसि । सर्वाणि च अस्माद् भूतानि बिभ्यति महावधात् । महान् हि अस्य वधः । अपि अनपराधो भीतः पलायते वर्षकर्मवतः । यत् पर्जन्यः स्तनयन् हन्ति दुष्कृतः पापकृतः (नि. १०.११) इति ॥ २ ॥

रथीव रथस्वामीव । स यथा कशया अश्वान् अभिक्षिपन् दूतान् भटान् आविष्करोति तद्वद् असौ पर्जन्योऽपि कशया अश्वान् मेघान् अभिक्षिपन् अभिप्रेरयन् वर्ष्यान् वर्षकान् दूतवत् वृष्टिप्रेरकान् मेघान् मरुतो वा आविः कृणुते प्रकटयति । अह इति पूरणः । एवं सति सिंहस्य ।

सहतेः हिंसतेर्वा शब्दकर्मणः सिंहशब्दः । अवर्षणेन अभिभवितुः शब्दयितुर्वा मेघस्य स्तनथाः गर्जनशब्दाः दूरात् उदीरते उद्गच्छन्ति । कदा । यत् यदा पर्जन्यः नभः अन्तरिक्षं वर्ष्यं वर्षोपेतं कृणुते करोति तदा ॥ ३ ॥

प्र वान्ति वाताः वृष्ट्यर्थम् । पतयन्ति गच्छन्ति समन्तात् संचरन्ति विद्युतः । ओषधीः ओषधयः उत् जिहते उद्गच्छन्ति प्रवर्धन्ते । स्वः अन्तरिक्षं पिन्वते क्षरति । इरा भूमिः विश्वस्मै सर्वस्मै भुवनाय सर्वजगद्धिताय जायते समर्था भवति । कदा एवमिति । यत् यदा पर्जन्यः देवः पृथिवीं रेतसा उदकेन अवति रक्षति अभिगच्छति वा तदैवं भवति ॥ ४ ॥

यस्य पर्जन्यस्य व्रते कर्मणि पृथिवी नन्नमीति अत्यर्थं नमति सर्वेषाम् अधो भवति । यस्य व्रते शफवत् पादोपेतं गवादिकं जर्भुरीति भ्रियते पूर्यते गच्छतीति वा । यस्य व्रते कर्मणि ओषधीः ओषध्यः विश्वरूपाः नानारूपाः भवन्ति । हे पर्जन्य सः महान् त्वं नः अस्मभ्यं महि शर्म महत् सुखं यच्छ प्रयच्छ ॥ ५ ॥

हे मरुतः यूयं दिवः अन्तरिक्षसकाशात् नः अस्मदर्थं वृष्टिं ररीध्वं दत्त । वृष्णः वर्षकस्य अश्वस्य व्यापकस्य मेघस्य संबन्धिन्यः धाराः उदकधाराः प्र पिन्वत प्रक्षरत । हे पर्जन्य त्वम् एतेन स्तनयित्नुना गर्जता मेघेन सह अर्वाङ् अस्मदभिमुखम् एहि आगच्छ । किं कुर्वन् । अपः अम्भांसि निषिञ्चन् । स देवः असुरः उदकानां निरसितापि सन् नः अस्माकं पिता पालकश्च ॥ ६ ॥

अभि भूम्यभिमुखं क्रन्द शब्दय । तदेव पुनरुच्यते दार्ढ्याय । स्तनय गर्ज । गर्भं गर्भस्थानीयम् उदकम् ओषधीषु आ धाः आ धेहि । तदर्थम् उदन्वता उदकवता रथेन परि दीय परितो गच्छ । दृतिं दृतिवत् उदकधारकं मेघं विषितं विशेषेण सितं बद्धं न्यञ्चं न्यक् अधोमुखं सु सुष्ठु कर्ष आकर्ष वृष्ट्यर्थम् । यद्वा विषितं विमुक्तबन्धनम् एवं कर्ष । एवं कृते उद्वतः ऊर्ध्ववन्तः उन्नतप्रदेशाः निपादाः न्यग्भूतपादाः निकृष्टपादाः वा निम्नोन्नतप्रदेशाः समाः एकस्थाः भवन्तु उदकपूर्णाः भवन्तु इत्यर्थः ॥ ७ ॥

हे पर्जन्य त्वं महान्तं प्रवृद्धं कोशं कोशस्थानीयं मेघम् उदच उद्गच्छ उद्गमय वा । तथा कृत्वा नि षिञ्च नीचैः क्षारय । कुल्याः नद्यः विषिताः विप्लुताः सत्यः स्यन्दन्ताम् प्रवहन्तु पुरस्तात् पूर्वाभिमुखम् । प्रायेण नद्यः प्राच्यः स्यन्दन्ते । घृतेन उदकेन द्यावापृथिवी दिवं च पृथिवीं च व्युन्धि क्लेदय अत्यधिकम् । अघ्न्याभ्यः गोभ्यः सुप्रपाणं सुष्ठु प्रकर्षेण पातव्यमुदकं भवतु ॥ ८ ॥

हे पर्जन्य यत् यदा त्वं कनिक्रदत् अत्यर्थं शब्दयन् स्तनयन् दुष्कृतः पापकृतो मेघान् हंसि विदारयसि तदानीम् इदं विश्वं जगत् प्रति मोदते । विश्वं विशेष्यते । यत् किं च पृथिव्याम् अधि भूम्याम् अधिष्ठितं यच्च चराचरात्मकं तदिदं विश्वं मोदते हृष्यति । वृष्टेः सर्वजगत्प्रीतिकारणत्वं प्रसिद्धम् ॥ ९ ॥

इयम् अतिवृष्टिविमोचनी । हे पर्जन्य त्वम् अवर्षीः वृष्टयानसि । वर्षम् उत् उ सु गृभाय उत्कृष्टं सु सुष्ठु

गृभाय गृहाण । परिहर इत्यर्थः । धन्वानि निरुदकप्रदेशान् अकः जलवतः कृतवान् असि । किमर्थम् । अत्येतवा उ । अतिक्रम्य गन्तुम् । ओषधीः अजीजनः उदपादयः । किमर्थम् । भोजनाय धनाय भोगाय वा । कम् इत्ययं पादपूरणः । उत अपि च प्रजाभ्यः सकाशात् मनीषां स्तुतिम् अविदः प्राप्तवानसि ।। १० ।।

---

## १४

### म. ५. सू. ८४

द्विरूपा पृथिवी चैषा प्रत्यक्षा देवतापि च ।
मध्यस्थाना देवता सा अत्र संबोध्य वर्ण्यते ।।

हे पृथिवि प्रथनवति मध्यस्थानदेवते । त्वम् इत्था इत्थम् अमुत्र अन्तरिक्षे वा बट् सत्यं पर्वतानां मेघानां वा खिद्रं खेदनं भेदनं बिभर्षि धारयसि । हे महिनि महति हे प्रवत्वति प्रकर्षवति प्रवणोदकवति वा या त्वं भूमिं प्रत्यक्षां पृथिवीं मह्ना महत्त्वेन महतोदकेन वा प्र जिनोषि प्रकर्षेण प्रीणयसि ।। १ ।।

हे विचारिणि विविधं चरणशीले पृथिवि देवि त्वा त्वां स्तोमासः स्तोतारः अक्तुभिः गमनशीलैः स्तोत्रैः प्रति ष्टोभन्ति अभिष्टुवन्ति । किंच या त्वं हेषन्तं शब्दयन्तं वाजं न अश्वम् इव उद्वृत्तं पेरुं पूरकं मेघं प्र अस्यसि प्रक्षिपसि हे अर्जुनि गमनशीले वा ।। २ ।।

हे पृथिवि या त्वं दृळ्हा चित् दृढया क्षमया भूम्या सह वनस्पतीन् वृक्षान् ओजसा बलेन दर्धापि धारयसि । अथवा दृळ्हेति विधेयविशेषणम् । वनस्पतीन् दृढान् कृत्वा धारयसि इत्यर्थः । यत् यस्याः ते तव संबन्धिनः वृष्टयः वर्षका मेघाः विद्युतः विद्योतमानात् अभ्रस्य । पञ्चम्यर्थे षष्ठी । अभ्रात् अपां हर्तुः दिवः अन्तरिक्षात् आदित्याद् वा वर्षन्ति । अथवा यत् यस्याः ते तव अभ्रस्य मेघस्य वृष्टयः उदकसंघाता विद्युतो विद्योतमानायाः दिवः सकाशात् वर्षन्ति पतन्ति ॥ ३ ॥

---

## १५

### म. ५. सू. ८५

अत्रिः स्वात्मानं संबोध्य ब्रवीति । हे अत्रे त्वं सम्राजे सम्यग् राजमानाय ईश्वराय श्रुताय सर्वत्र श्रूयमाणाय वरुणाय उपद्रवस्य निवारकाय जनानाम् आवरकाय च एतन्नामकाय देवाय बृहत् प्रभूतं गभीरं दुरवगाहं बह्वर्थपितं प्रियं प्रियभूतं ब्रह्म स्तोत्ररूपं कर्म प्र अर्च प्रार्चय । प्रोच्चारय इत्यर्थः । यः वरुणः शमितेव चर्म शमिता पशुविशसनकर्ता यथोपस्तरणाय चर्म हन्ति तद्वत् पृथिवीं विस्तीर्णम् अन्तरिक्षम् । तृतीयस्यां पृथिव्याम् (तै. सं. १. २. १२. १) इति श्रुतेः अन्तरिक्षस्यापि पृथिवीशब्दवाच्यत्वम् । सूर्याय सूर्यस्य उपस्तिरे आस्तरणाय वि जघान विस्तारयमास ।

विस्तृतं हि व्यवहारयोग्यं भवति । तस्मात् व्यवहाराय अन्तरिक्षं विस्तारितवान् ॥ १ ॥

अयं वरुणः वनेषु वृक्षाग्रेषु अन्तरिक्षं वि ततान विस्तारितवान् । तथा वाजसनेयकम् । वनेषु ह्रीदमेषु वृक्षाग्रेष्वन्तरिक्षं विततं तस्मादाह वनेषु व्यन्तरिक्षं ततान (शत. ३. ३. ४. ७) इति । वाजं बलम् अर्वत्सु अश्वेषु वि ततान । पयः क्षीरम् उस्रियासु गोषु । उस्रियेति गोनाम । उत्स्राविणोऽस्यां भोगा इति तद्व्युत्पत्तिः । हृत्सु हृदयेषु क्रतुं कर्मसंकल्पम् । यद्धि मनसा ध्यायति तत् कर्मणा करोति । अप्सु उदकेषु अग्निं वैद्युतम् और्वं वा । सर्वत्र वि ततानेति संबन्धः । किंच दिवि द्युलोके सूर्यम् अदधात् स्थापितवान् । सोमं च अद्रौ पर्वते अदधात् ॥ २ ॥

नीचीनबारम् अधोमुखबिलं प्र ससर्ज कृतवान् । कम् । कवन्धम् । कवनम् उदकं तत् धीयते अत्र इति कवन्धो मेघः तं तथा अकरोत् । अथवा कवन्धम् उदकम् । तद् उदकं नीचीनवारं नीचीननिर्गमनविलं चकार । मेघं विदार्य उदकम् अधोमुखं चकार इत्यर्थः । किं प्रति इत्युच्यते । रोदसी द्यावापृथिव्यौ अन्तरिक्षं च प्रति । लोकत्रयहिताय् इत्यर्थः । तेन उदकेन विश्वस्य सर्वस्य भुवनस्य भूतजातस्य राजा स्वामी वरुणः भूम भूमिं व्युनत्ति क्लेदयति । वृष्टिः सेक्ता पुमान् यवं न यवम् इव यवान् यथा प्ररोहाय सर्वत्र प्रसारयति तद्वत् भूमिं सर्वत्र उनत्ति । अथवा वृष्टिः वरुण इति संबन्धः । वर्षकः पर्जन्यः इत्यर्थः । अस्मिन् पक्षे यवं पुरुष इव इति पुरुषशब्दोऽध्याहार्यः ॥ ३ ॥

वरुणः भूमिं पृथिवीं प्रथितम् अन्तरिक्षम् । उत अपि च द्यां द्युलोकम् उनत्ति क्लेदयति । यदा अयं दुग्धम् उदकपूरणं वष्टि कामयते । अथवा दुग्धम् उदकम् । तेन तत्कार्यम् ओषध्यादिकं लक्ष्यते । ओषध्यादयः प्रवर्धन्ताम् इति यदा कामयते आदित् अनन्तरमेव सं वसत समाच्छादयन्ति । के । पर्वतासः पर्ववन्तः अद्रयः । केन । अभ्रेण मेघेन । किंच तविषीयन्तः बलम् इच्छन्तः वीराः विशेषेण वृष्टेः प्रेरयितारः मरुतः श्रथयन्त श्रथयन्ति मेघान् ॥ ४ ॥

आसुरस्य असुरसंबन्धिनः । असुराणाम् अस्य च वध्यघातकभावः संबन्धः । असुरहन्तुः इत्यर्थः । अथवा असुरो मेघः । प्राणदानात् । तत्संबन्धिनः । श्रुतस्य विश्रुतस्य । महीं महतीम् इमां मायां प्रज्ञां प्र वोचम् प्रब्रवीमि । कैषा माया इति सा उच्यते । यः वरुणः अन्तरिक्षे तस्थिवान् तिष्ठन् मानेनेव दण्डेनेव सूर्येण पृथिवीम् अन्तरिक्षं वि ममे परिच्छिनत्ति तस्यैषा माया ॥ ५ ॥

कवितमस्य प्रकृष्टप्रज्ञस्य देवस्य द्योतमानस्य स्तुत्यस्य वा वरुणस्य इमां सर्वप्रसिद्धां मही महतीं मायां प्रज्ञां नकिः नैव आ दधर्ष न हिनस्ति कश्चिदपि । ऊ नु इति पूरणौ । यत् यस्मात् एकं समुद्रम् उद्ना उदकेन न पृणन्ति न पूरयन्ति । काः । एनीः एन्यः शुभ्राः गमनशीलाः वा आसिञ्चन्तीः उदकम् आसेचयन्त्यः अवनयः नद्यः । बह्व्यो नद्यः सर्वदा उदकेन पूरयन्त्योऽपि न एकमपि समुद्रं पूरयन्ति इति । इदं वरुणस्य महत् कर्म इति ॥ ६ ॥

हे वरुण अर्यम्यम् । अर्यमा एव अर्यम्यः । स्वार्थिको यत् । प्रदातारम् इत्यर्थः । अथवा ईरणात् मननात् च शास्तीति अर्यमा गुरुः । तम् । वा अथवा मित्र्यं मित्रम् । स्वार्थिको यत् । अनुरक्तम् इत्यर्थः । वा अथवा सखायं समानख्यानम् । सदमित् सर्वदैव भ्रातरं वा । नित्यं निरन्तरं वेशं निकटनिकेतनवर्तिनं वा । अरणं वा अशब्दम् इत्यर्थः । अथवा अरणम् अदातारं वा । नित्यं निरन्तरम् । एतान् प्रति यत् सीम् यदेतद् आगः अपराधं चकृम तत् शिश्रथः अस्मत्तो विनाशय ॥ ७ ॥

कितवासः कितवाः द्यूतकृतः । किं तवास्ति सर्वं मया जितम् इति वदतीति कितवः । ते दीवि न देवने द्यूते यथा यद् रिरिपुः लेपयन्ति पापम् आरोपयन्ति तथा अस्मासु द्वेष्टारो मयि त्वम् एतत् पापम् अकरोः इति आक्षिपन्ति । अत्र पुरस्तादुपचारोऽपि नकारः उपमार्थीयः । वा अथवा । घ इति पूरणः । यत् पापम् सत्यम् आरोपम् अन्तरेण कृतवन्तः स्मः । उत अपि च यत् कृतं पापं न विद्म न जानीमः । ता तानि सर्वाणि शिथिरेव शिथिलानीव शिथिलबन्धनानि फलानीव वि ष्य विमोचय । स्यतिरुपसृष्टो विमोचने । हे देव अध अनन्तरं ते तव प्रियासः प्रियाः स्याम भवेम ॥ ८ ॥

---

म. ६. सू. ५८

हे पूषन् ते तव शुक्रं शुक्लवर्णम् अन्यत् एकम् अहः भवति वासरात्मकम् । तथा ते तव संबन्धि यजतम् । यजिः अत्र संगतिकरणे वर्तते । यजनीयं प्रकाशेन संगमनीयं स्वतः कृष्णवर्णम् अन्यत् एकम् अहः भवति राज्याख्यम् । इत्थं विषुरूपे शुक्लकृष्णतया नानारूपे अहनी तव महिम्ना निष्पद्येते । यद्वा हे पूषन् त्वदीयम् अन्यत् एकं रूपं शुक्रं निर्मलं दिवसस्योत्पादकम् । त्वदीयम् अन्यत् एकं रूपं यजतं केवलं यजनीयं न प्रकाशकं रात्रेरुत्पादकम् । अत एव विषुरूपे अहनी अहश्च रात्रिश्च भवतः । अहोरात्रयोर्निर्माणे सूर्यं एव कर्ता । कथमस्य प्रसक्तिः इति तत्र आह । द्यौरिवासि । यथा द्यौः आदित्यः प्रकाशयिता तथा त्वं प्रकाशकोऽसि । कुतः । सर्वाः मायाः प्रज्ञाः हि यस्मात् कारणात् अवसि रक्षसि अतः कारणात् त्वं सूर्य इव भवसि इत्यर्थः । तादृशस्य ते तव भद्रा कल्याणी रातिः दानम् इह अस्मासु अस्तु भवतु ॥ १ ॥

अजाश्वः छागवाहनः पशुपाः पशूनां पालयिता वाजपस्त्यः । वाजाः अन्नानि पस्त्ये गृहे यस्य तादृशः । धियंजिन्वः । धियः स्तोतारः कर्माणि वा तेषां प्रीणयिता । विश्वे विश्वस्मिन् सर्वस्मिन् भुवने लोके अर्पितः प्रजापतिना पोषकत्वेन स्थापितः । अतः एवंभूतः पूषा पोषको देवः अष्ट्राम्

आराम् स्वहस्तगतां शिथिलां सतीम् उद्वरीवृजत् उद्यच्छन् भुवना भुवनानि सर्वान् लोकान् भूतजातानि वा संचक्षाणः संपश्यन् सूर्यात्मना प्रकाशयन् ईयते नभसि गच्छति ॥ २ ॥

हे पूषन् ते त्वदीयाः या हिरण्ययीः हिरण्मय्यो हितरमणीयाः नावः समुद्रे उदधौ अन्तः मध्ये अन्तरिक्षे नभसि चरन्ति संचरन्ति ताभिः नौभिः सूर्यस्य दूत्यां यासि गच्छसि। कदाचित् देवैः सार्धं सूर्ये असुरवधार्थं प्रस्थिते सति तस्य भार्या स्वभर्तरि संजातोत्सुक्या बभूव। तां प्रति सूर्यः पूषणं प्राहैषीत्। तेन चात्र पूषा स्तूयते। अपि च त्वं श्रवः हविर्लक्षणम् अन्नम् इच्छमानः इच्छन् कामेन पश्वादिविषयेण स्तोतृभिः कृत वशीकृतोऽसि ॥ ३ ॥

पूषा पोषको देवः दिव आ द्युलोकस्य च पृथिव्याः च सुबन्धुः शोभनो बन्धुर्भवति। तथा इळस्पतिः इळायाः अन्नस्य पतिः। मघवा। मघमिति धननाम। तद्वान्। यद्वा मंहतेः दानकर्मणः भावसाधनो मघशब्दः। दानवान्। वर्च इति रूपनाम। दस्मं दर्शनीयं वर्चो यस्य तादृशः। यं पूषणं देवासः सर्वे देवाः सूर्यायै सूर्यस्य पत्न्यै यद्वा सावित्र्यै सूर्याख्यायै अश्विनोर्वरणाय अददुः दत्तवन्तः। कीदृशं पूषणम्। कामेन पश्वादिविषयेण कृतं स्तोतृभिर्वशीकृतं तवसं बलवन्तं प्रवृद्धं वा स्वञ्चं स्वञ्चनं सुष्ठु गच्छन्तम्। एवंविधं यं पूषणम् अददुः स पूषा सुबन्धुरित्यन्वयः ॥ ४ ॥

---

हे नरा नेतारौ इन्द्रावरुणौ युवाम् । षष्ठ्यर्थे द्वितीया । युवयोः आप्यं बन्धुभावं पश्यमानासः पश्यन्तो युष्मद्बान्धवलाभार्थिनः गव्यन्तः गा आत्मन इच्छन्तो यजमानाः पृथुपर्शवः । पृथुः विस्तीर्णः पर्शुः पार्श्वास्थि येषां ते तथोक्ताः । अथवा विस्तीर्णाश्वपर्शुहस्ताः सन्तः प्राचा प्राचीनं ययुः बर्हिराहरणार्थं गच्छन्ति । पर्शवा हि बर्हिराच्छिद्यते । तथा च तैत्तिरीयकम् । अश्वपर्शवा बर्हिरच्छैति (तै. ब्रा. ३. २. २. १) इति । हे इन्द्रावरुणौ युवां दासा दासानि उपक्षपयितॄणि च वृत्राणि आवरकाणि शत्रुजातानि आर्याणि च कर्मानुष्ठानपराणि च शत्रुजातानि हतं हिंस्तम् । अपि च सुदासम् अस्मद्याज्यम् एतत्संज्ञं राजानम् अवसा रक्षणेन सार्धम् अवतम् आगच्छतम् ॥ १ ॥

यत्र यस्मिन् संग्रामे नरः मनुष्याः कृतध्वजः उच्छ्रितध्वजाः समयन्ते युद्धार्थं संगच्छन्ते । यस्मिन् च आजा आजौ युद्धे । चन इति निपातद्वयसमुदायो विभज्य योजनीयः । किंच किमपि प्रियम् अनुकूलं न भवति । अपि तु सर्वं दुष्करं भवति । यत्र च युद्धे भुवना भुवनानि भूतजातानि स्वर्दृशः शरीरपाताद् ऊर्ध्वं स्वर्गस्य द्रष्टारो वीराश्च भयन्ते बिभ्यति । तत्र तादृशे संग्रामे हे इन्द्रावरुणौ नः अस्मान् अधि वोचतम् अस्मत्पक्षपातवचनौ भवतम् ॥ २ ॥

हे इन्द्रावरुणौ भूम्या अन्ताः पर्यन्ताः ध्वसिराः सैनिकैः ध्वस्ताः सम् अदृक्षत संदृश्यन्ते । तथा दिवि द्युलोके घोषः सैनिकानां शब्दश्च आरुहत् आरूढोऽभूत् । जनानाम् अस्मदीयानां भटानाम् अरातयः शत्रवः माम् उप अस्थुः उपस्थिताः । एवं प्रवर्तमाने अस्मिन् युद्धे हे हवनश्रुता आह्वानशीलौ इन्द्रावरुणौ अर्वाक् अस्मदभिमुखम् अवसा रक्षणेन सह आ गतम् आगच्छतम् ॥ ३ ॥

हे इन्द्रावरुणा इन्द्रावरुणौ वधनाभिः वधकरैरायुधैः अप्रतिगतम् अप्राप्तं भेदम् एतत्संज्ञं सुदासः शत्रुं वन्वन्ता हिंसन्तौ युवां सुदासम् । शोभनं ददातीति सुदाः । एतत्संज्ञं मम याज्यं राजानं प्र आवतं प्रकर्षेण अरक्षतम् । एषां तृत्सूनां मम याज्यानां ब्रह्माणि स्तोत्राणि शृणुतम् अशृणुतम् । कदा । हवीमनि । आहूयन्ते अस्मिन् युद्धार्थं परस्परम् इति हवीमा संग्रामः । तस्मिन् । यस्मादेवं तस्मात् तृत्सूनाम् एतत्संज्ञानां मम याज्यानां पुरोहितिः मम पुरोधानं सत्या सत्यफलम् अभवत् । तेषु यत् मम पौरोहित्यं तत् सफलं जातम् इत्यर्थः ॥ ४ ॥

हे इन्द्रावरुणौ अर्यः अरेः शत्रोः संबन्धीनि अघानि आहन्तॄणि आयुधानि मा माम् अभ्यातपन्ति अभितो बाधन्ते । अपि च वनुषां हिंसकानां मध्ये अरातयः अभिगमनशीलाः शत्रवश्च माम् अभिपतन्ति । युवं हि युवां खलु उभयस्य पार्थिवस्य दिव्यस्य च वस्वः वसुनो धनस्य राजथः ईशाथे । राजतिरैश्वर्यकर्मा । अध स्म अतः कारणात् पार्ये तरणीये दिवि दिवसे युद्धदिने नः अस्मान् अवतं रक्षतम् ॥ ५ ॥

उभयासः उभयविधाः सुदाःसंज्ञो राजा तत्सहायभूताः तृत्सवश्च एवं द्विप्रकारा जनाः आजिषु संग्रामेषु इन्द्रं च वरुणं च युवां हवन्ते आह्वयन्ते । किमर्थम् । वस्वः धनस्य सातये संभजनार्थम् । यत्र येषु आजिषु दशभिः दशसंख्याकैः राजभिः शत्रुभूतैः नृपैः निबाधितं नितरां हिंसितं सुदासं तृत्सुभिः सह वर्तमानं प्र आवतं युवां प्रकर्षेण अरक्षतम् ॥ ६ ॥

हे इन्द्रावरुणौ दशसंख्याकाः राजानः सुदासः शत्रवः समिताः संगताः परस्परं समवेताः अयज्यवः अयजमाना एवंभूताः ते सुदासम् एतत्संज्ञकम् एकमपि राजानं न युयुधुः न संप्रजहुः । युवाभ्याम् अनुगृहीतं तं प्रहर्तुं न शेकुः । तदानीम् अद्मसदाम् । अद्मनि अन्ने हविषि सीदन्तीति अद्मसदः ऋत्विजः । हविर्भिः युक्तानां नृणां यज्ञस्य नेतॄणाम् ऋत्विजाम् उपस्तुतिः स्तोत्रं सत्या सफला अभूत् । अपि च एषां देवहूतिषु । देवाः हूयन्ते एषु इति देवहूतयो यज्ञाः । तेषु सर्वे च देवाः अभवन् युष्मदनुग्रहात् प्रादुर्भवन्ति ॥ ७ ॥

हे इन्द्रावरुणौ दाशराज्ञे । दशशब्दस्य छान्दसो दीर्घः विभक्तिव्यत्ययश्च । दशभिः राजभिः शत्रुभूतैः विश्वतः सर्वतः परियत्ताय परिवेष्टिताय सुदासे राज्ञे अशिक्षतं बलं प्रायच्छतम् । यत्र यस्मिन् देशे श्वित्यञ्चः श्वितिः श्वैत्यं नैर्मल्यम् अञ्चन्तो गच्छन्तः कपर्दिनः जटिलाः धीवन्तः कर्मभिर्युक्ताः तृत्सवः वसिष्ठशिष्या एतत्संज्ञा ऋत्विजः नमसा हविर्लक्षणेन अन्नेन धिया स्तुत्या च असपन्त पर्यचरन् । तस्मिन् देशे युवां तस्मै राज्ञे बलं प्रायच्छतम् इत्यर्थः ॥ ८ ॥

हे इन्द्रावरुणौ युवयोः अन्यः एकः इन्द्रः वृत्राणि शत्रून् समिथेषु संग्रामेषु जिघ्नते हन्ति । अन्यः एकः वरुणः सदा सर्वदा व्रतानि कर्माणि अभि रक्षते अभितः सर्वतो रक्षति । हे वृषणा कामानां वर्षितारौ इन्द्रावरुणौ तथाविधौ वां युवां सुवृक्तिभिः सुप्रवृत्ताभिः स्तुतिभिः हवामहे आह्वयामहे । आहूतौ च युवाम् अस्मे अस्मभ्यं शर्म सुखं यच्छतं दत्तम् ॥ ९ ॥

अस्मे अस्मभ्यम् इन्द्रादयः द्युम्नं द्योतमानं धनं यच्छन्तु प्रयच्छन्तु । तथा महि महत् सप्रथः सर्वतः पृथु विस्तीर्णं शर्म गृहं च प्रयच्छन्तु । अपि च ऋतावृधः यज्ञस्य वर्धयित्र्याः अदितेः अदीनायाः देवमातुः ज्योतिः तेजश्च नः अस्माकम् अवध्रम् अहिंसकम् अस्तु । वयं च देवस्य दानादिगुणयुक्तस्य सवितुः सर्वस्य प्रेरकस्य श्लोकं स्तोत्रं मनामहे जानीमः । कुर्मः इत्यर्थः । यद्वा देवेन सवित्रा अस्मभ्यं देयं श्लोकं यशो मनामहे याचामहे ॥ १० ॥



अस्य वरुणस्य जनूंषि जन्मानि महिना महिम्ना तु क्षिप्रं धीरा धीराणि धैर्यवन्ति भवन्ति । यः वरुणः उर्वी विस्तीर्णे रोदसी चित् द्यावापृथिव्यौ अपि वि`तस्तम्भ विविधं स्तब्धे स्वकीये स्थाने स्थिते अकरोत् । यश्च बृहन्तं महान्तं नाकम् आदित्यं नक्षत्रं च ऋष्वं दर्शनीयं द्विता द्वैधं प्र नुनुदे प्रेरयति स्म । अहनि सूर्यं दर्शनीयं प्रेरयति रात्रौ नक्षत्रं तथा इति द्विप्रकारः । भूम भूमिं च यः पप्रथत् अप्रथयत् विस्तारितवान् ॥ १ ॥

वरुणं शीघ्रं दिदृक्षमाणः ऋषिरनया वितर्कयति । उत इति विचिकित्सायाम् । उत किं स्वया तन्वा स्वीयेन आत्मीयेन शरीरेण सं वदे सहवदनं करोमि । आहोस्वित् तत् तेन वरुणेन सह संवदे । कदा नु कदा खलु वरुणे देवे अन्तः भुवानि अन्तर्भूतो भवानि । वरुणस्य चित्ते संलग्नो भवानि इत्यर्थः । अपि च मे मदीयं हव्यं स्तोत्रं हविर्वा अहृणानः अक्रुध्यन् वरुणः किं केन हेतुना जुषेत सेवेत । सुमनाः शोभनमनस्कः सन् अहं कदा कस्मिन् काले मृळीकं सुखयितारं वरुणम् अभि ख्यम् अभिपश्येयम् ॥ २ ॥

हे वरुण तद् एनः पापं पृच्छे त्वां पृच्छामि । दिदृक्षु । छान्दसः सुलोपः । द्रष्टुमिच्छन् अहम् । येन पापेन हेतुना त्वदीयैः पाशैः बद्धोऽस्मि पृष्टः सन् त्वं तत् पापं कथय । अहं विपृच्छं विविधं प्रष्टुं चिकितुषः विदुषो

जनान् उपो एमि उपागाम् । ते कवयश्चित् क्रान्तदर्शिनो जनाश्च मे मह्यं समानमित् समानमेव एकरूपमेव आहुः अकथयन् । यदाहुः तदाह । हे स्तोतः तुभ्यम् अयं ह अयमेव वरुणः क्रुध्यतीति ॥ ३ ॥

हे वरुण ज्येष्ठम् अधिकं किम् आगः आस कोऽपराधो मया कृतो बभूव । यत् येन आगसा सखायं मित्रभूतं सन्तं स्तोतारं जिघांससि हन्तुमिच्छसि । हे दूळभ दुर्दभ अन्यैः बाधितुम् अशक्य स्वधावः तेजस्विन् हे वरुण तत् आगः मे मह्यं प्र वोचः प्रब्रूहि । एवं सति तस्य प्रायश्चित्तं कृत्वा अनेनाः अपापः सन् अहं तुरः त्वरमाणः शीघ्रः नमसा नमस्कारेण हविषा वा त्वाम् अव इयाम् उपगच्छेयम् ॥ ४ ॥

हे वरुण पित्र्या पितृतः प्राप्तानि नः अस्मदीयानि द्रुग्धानि द्रोहान् बन्धनहेतुभूतान् अव सृज विमुञ्च । अस्मत्तो विश्लेषय । वयं च या यानि द्रोहजातानि तनूभिः शरीरैः चकृम कृतवन्तः स्मः तानि च अव सृज । हे राजन् राजमान वरुण पशुतृपं न तायुं स्तैन्यप्रायश्चित्तं कृत्वा अवसाने घासादिभिः पशूनां तर्पयितारं स्तेनमिव दाम्नः रज्जोः वत्सं न वत्समिव च वसिष्ठं मां बन्धकात् पापात् अव सृज विमुञ्च ॥ ५ ॥

हे वरुण सः स्वो दक्षः पुरुषस्य स्वभूतं तद् बलं पापप्रवृत्तौ कारणं न भवति । किं तर्हि । ध्रुतिः स्थिरा उत्पत्तिसमये एव निर्मिता दैवगतिः कारणम् । सा च ध्रुतिः वक्ष्यमाणरूपा । सुरा प्रमादकारिणी मन्युः क्रोधश्च गुर्वादिविषयः सन् अनर्थहेतुः । विभीदकः द्यूतसाधनः अक्षः ।

स च द्यूतेषु पुरुषं प्रेरयन् अनर्थहेतुर्भवति । अचित्तिः अज्ञानम् अविवेककारणम् । अतः ईदृशी दैवक्लृप्तिरेव पुरुषस्य पापप्रवृत्तौ कारणम् । अपि च कनीयसः अल्पस्य हीनस्य पुरुषस्य पापप्रवृत्तौ उपारे समीपे नियन्तृत्वेन स्थितः ज्यायान् अधिकः ईश्वरः अस्ति । स एव तं पापे प्रवर्तयति । तथा चाम्नातम् । एष हि एव असाधु कर्म कारयति तं यम् अधो निनीषते (कौ. उ. ३. ८) । एवं च सति स्वप्नश्चन स्वप्नोऽपि अनृतस्य पापस्य प्रयोता प्रकर्षेण मिश्रयिता भवति । इत् इति पूरकः । स्वप्ने कृतैरपि कर्मभिः बहूनि पापानि जायन्ते किमु वक्तव्यं जाग्रति कृतैः कर्मभिः पापानि उत्पद्यन्ते इति । अतो ममापराधो दैवागतः इति हे वरुण त्वया क्षन्तव्यः इति भावः ॥ ६ ॥

मीळ्हुषे सेक्त्रे कामानां वर्षित्रे भूर्णये जगतो भर्त्रे देवाय दानादिगुणयुक्ताय वरुणाय अनागाः तत्प्रसादात् अपापः सन् अहम् अरम् अलं पर्याप्तं कराणि परिचरणं करवाणि । दासो न । यथा भृत्यः स्वामिने सम्यक् परिचरति तद्वत् । अयं स्वामी स च देवः अचितः अजानतः अस्मान् अचेतयत् चेतयतु प्रज्ञापयतु । गृत्सं स्तोतारं च कवितरः प्राज्ञतरो देवः राये धनाय धनप्राप्त्यर्थं जुनाति जुनातु प्रेरयतु ॥ ७ ॥

हे स्वधावः अन्नवन् वरुण तुभ्यं त्वदर्थं क्रियमाणः अयम् एतत्सूक्तात्मकः स्तोमः स्तोत्रं हृदि त्वदीये हृदये सु सुष्ठु उपश्रितः उपगतः समवेतः अस्तु । चित् इति

पूरकः । अप्राप्तस्य प्रापणं योगः प्राप्तस्य रक्षणं क्षेमः । नः अस्मदीये क्षेमे रक्षणे शम् उपद्रवाणां शमनम् अस्तु । योगे च नः अस्मदीये प्रापणे शम् शमनमेव अस्तु उपद्रवाणाम् । हे वरुणादयो देवाः नः अस्मान् सर्वदा स्वस्तिभिः अविनाशैः पात रक्षत ॥ ८ ॥

---

## १९

### म. ७. सू. ८८

ऋषिरात्मानमेव प्रत्यक्षीकृत्य स्तुतौ नियुङ्क्ते । हे वसिष्ठ त्वं मीळ्हुषे सेक्त्रे वरुणाय शुन्ध्युवं शोधयित्रीं यद्वा स्वत एव शुद्धां प्रेष्ठां प्रियतमां मतिं मननीयाम् ईदृशीं स्तुतिं प्र भरस्व प्र हर प्रापय । यः वरुणः ईम् एनं सूर्यम् अर्वाञ्चम् अस्मदभिमुखं करते अन्तरिक्षे करोति । कीदृशं सूर्यम् । यजत्रं यष्टव्यं सहस्रामघं बहुधनं वृषणं कामानां वर्षकं बृहन्तं महान्तम् ॥ १ ॥

अध अधुना अस्य वरुणस्य संदृशं संदर्शनं नु क्षिप्रं जगन्वान् गतवान् अहम् अग्नेः अनीकं ज्वालासंघं मंसि स्तवानि । यत् यदा वरुणः स्वः सुखकरम् अश्मन् अश्मनि अभिषवार्थे पाषाणे अवस्थितम् । अभिषुतमित्यर्थः । ईदृशम् अन्धः सोमलक्षणम् अन्नम् अधिपाः अधिकं पाता भवेत् । छान्दसः षष्ठ्यभावः । उ इति पूरकः । तदानीं मा मां

वपुः शरीरं स्वकीयं प्रशस्तं रूपं वा दृशये दर्शनार्थम् अभि निनीयात् अभिप्रापयेत् ॥ २ ॥

यत् यदा वरुणे प्रसन्ने सति अहं वरुणश्च उभौ नावं द्रुममयीं तरणसाधनभूताम् आ रुहाव उभौ आरूढौ अभूव । तां च नावं यत् यदा समुद्रं मध्यं समुद्रस्य मध्यं प्रति प्र ईरयाव प्रकर्षेण गमयाव । यत् यदा च अपाम् उदकानाम् अधि उपरि स्नुभिः गन्त्रीभिः अन्याभिः अपि नौभिः चराव वर्तावहै । तदानी शुभे शोभार्थं प्रेङ्खे नौरूपायां दोलायामेव प्र ईङ्खयावहै । निम्नोन्नतैः तरङ्गैः इतस्ततश्च प्रविचलन्तौ संक्रीडावहै । कम् इति पूरकः । यद्वा क्रियाविशेषणम् । कं सुखं यथा भवति तथा इत्यर्थः ॥ ३ ॥

एवं वसिष्ठेन आत्मना उक्ते यद् वरुणेन कृतं तद् दर्शयति । वसिष्ठं ह वसिष्ठं खलु वरुणः नावि स्वकीयायाम् आधात् आरोहयत् । तथा तम् ऋषिम्* अवोभिः रक्षणैः स्वपां स्वपां स्वपसं शोभनकर्माणं चकार वरुणः कृतवान् । अपि च विप्रः मेधावी वरुणः अह्नां दिवसानां मध्ये सुदिनत्वे यत्फलत्वेन शोभनदिनत्वं तत्र स्तोतारम् अस्थापयत् इति शेषः । किं कुर्वन् । यात् यातो गच्छतः द्यावः दिवसान् यात् यातीः उषासः उषसोपलक्षिता रात्रीश्च नु क्षिप्रं ततनन् सूर्यात्मना विस्तारयन् ॥ ४ ॥

---

* संहितापाठः 'स्वपामहोभिः' इति। पदपाठः 'सुऽअपाः। महःऽभिः' इति। किन्तु श्रीसायणाचार्यः 'स्वपामवोभिः' इति पठित्वा 'स्वपाम् अवोभि-' इति पदे पृथक्कृत्य एतमंशं विवृणोति। यथास्थितपाठे तु 'स्वपाः' इति वरुणविशेषणम्। 'महोभिः' इत्यस्य च महत्तापादकैः गुणविशेषैः युक्तम् इत्यर्थः॥

हे वरुण त्यानि तानि पुरातनानि नौ आवयोः सख्या सख्यानि सखित्वानि क्व कुत्र बभूवुः । पुरा पूर्वस्मिन् काले अवृकम् अहिंस्यम् आत्यन्तिकं यत् सख्यम् अस्ति तत् सचावहे आवां सेवावहे । चित् इति पूरकः । अपि च हे स्वधावः अन्नवन् वरुण ते त्वदीयं गृहं जगम गच्छानि । लोडर्थे लिट् । कीदृशम् । बृहन्तं महान्तम् । मानम् । मान्ति अस्मिन् सर्वाणि भूतानि इति मानम् । सर्वस्य भूतजातस्य परिच्छेदकम् इत्यर्थः । सहस्रद्वारं बहुद्वारम् ॥ ५ ॥

हे वरुण यः वसिष्ठः नित्यः ध्रुवः आपिः बन्धुः । औरसः पुत्र इत्यर्थः । यः पूर्वं प्रियः सन् त्वां प्रति आगांसि अपराधान् कृणवत् अकरोत् स इदानीं ते तव सखा समानख्यानः प्रियोऽस्तु । हे यक्षिन् यजनीय वरुण ते तव स्वभूता वयम् एनस्वन्तः एनसा पापेन युक्ताः सन्तः मा भुजेम मा भुज्महि । त्वत्प्रसादात् पापरहिता एव सन्तो भोगान् भुनजामहै । विप्रः मेधावी त्वं च स्तुवते स्तोत्रं कुर्वते वसिष्ठाय वरूथम् अनिष्टनिवारकं वरणीयं वा गृहं यन्धि प्रयच्छ । स्म इति पूरकः ॥ ६ ॥

ध्रुवासु नित्यासु आसु दृश्यमानासु क्षितिषु भूमिषु क्षियन्तः निवसन्तः वयं हे वरुण त्वा त्वां स्तुम इति शेषः । स च वरुणः अस्मत् अस्मत्तः पाशं बन्धकं पापं वि मुमोचत् मोचयेत् । तथा अदितेः अखण्डनीयायाः पृथिव्याः उपस्थात् उपस्थानात् अवः रक्षणं वरुणेन दत्तं वन्वानाः संभजमानाः वयं स्याम । हे वरुणादयो देवाः यूयम् अस्मान् सर्वदा कल्याणैः पालयत ॥ ७ ॥

म. ८. सू. १०

अश्विनौ दीर्घप्रसद्मनि । प्रसीदन्ति एषु देवा इति प्रसद्मानो यज्ञगृहाः । दीर्घाः आयताः प्रसद्मानो यस्मिन् तस्मिन् लोके यत् यदि स्थः भवथः वर्तेथे । यद्वा यदि वा अदः अमुष्मिन् दिवः द्युलोकस्य संबन्धिनि रोचने रोचमाने स्थाने भवथः । यद्वा यदि वा समुद्रे अन्तरिक्षे । समुद्द्रवन्ति अस्मात् आपः इति समुद्रम् अन्तरिक्षं तस्मिन् । आकृते निर्मिते गृहे अधिवसथः । अतः मितयादपि स्थानात् हे अश्विनौ आ यातम् आगच्छतम् ॥ १ ॥

हे अश्विनौ यद्वा यथा वा येन प्रकारेण मनवे प्रजापतये यजमानाय यज्ञं प्रमिमिक्षथुः संसिक्तवन्तौ युवां कृतवन्तौ एवेत् एवमेव काण्वस्य कण्वगोत्रस्य मम यज्ञं कर्तुं बोधतम् अवगच्छतम् । अपि च बृहस्पतिं बृहतां देवानां पतिं देवपुरोहितं विश्वान् सर्वान् मित्रादीन् देवान् च इन्द्राविष्णू च आशुहेषसा शीघ्राश्वौ । यद्वा हेषृ शब्दे । शीघ्रं सर्वत्र शब्द्यमानौ स्तूयमानौ अश्विनौ च अहं हुवे आह्वये ॥ २ ॥

त्या त्यौ पूर्वोक्तगुणौ अश्विनौ नु क्षिप्रम् अहम् हुवे आह्वयामि । कीदृशौ । सुदंससा शोभनकर्माणौ गृभे गृहे ग्रहणाय अस्माभिर्दत्तानां हविषां स्वीकरणाय अस्मभ्यं धनदानाय वा कृता कृतौ प्रादूर्भूतौ देवेषु मध्ये । अधिः

सप्तम्यर्थानुवादी । ययोः अश्विनोः आप्यम् आप्तव्यं नः अस्माकं सख्यं सखित्वं प्र अस्ति प्रभवति उत्कर्षेण वर्तते ॥ ३ ॥

ययोः अश्विनोः अधि उपरि यज्ञाः ज्योतिष्टोमादयः सर्वे यागाः प्र सन्ति प्रभवन्ति । छिन्नस्य यज्ञशिरसः अश्विभ्यां संधानात् । असूरे स्तोतृरहितेऽपि देशे ययोश्च सूरयः स्तोतारः सन्ति । तौ अश्विनौ अध्वरस्य हिंसाप्रत्यवायरहितस्य यज्ञस्य ज्योतिष्टोमादेः प्रचेतसा प्रकृष्टं ज्ञातारौ स्वधाभिः बलहेतुभिः स्तुतिभिः आह्वयामि इति शेषः । या यौ अश्विनौ सोम्यं सोममयं मधु मधुरं सोमरसं पिबतः ॥ ४ ॥

हे अश्विनौ अद्य इदानीं यत् यदि अपाक् प्रतीच्यां दिशि स्थः भवथः वर्तेथे । हे वाजिनीवसू अन्नवद्धनौ यत् यदि प्राक् प्राच्यां दिशि स्थः भवथः । यत् यदि वा द्रुह्युप्रभृतिषु चतुर्षु स्तोतृषु संनिहितौ भवथः । एवं सर्वत्र संनिहितौ वां युवां हुवे अहम् आह्वयामि । अथ अनन्तरमेव मा माम् आ गतम् आगच्छतम् ॥ ५ ॥

हे पुरुभुजा बहूनां पालयितारौ बहुलहविषो भोक्तारौ वा यत् यदि अन्तरिक्षे पतथः गच्छथः । यद्वा यदि वा इमे रोदसी द्यावापृथिव्यौ अनुलक्ष्य गच्छथः । यद्वा यदि वा स्वधाभिः आत्मीयैः तेजोभिः बलैर्वा सार्धं रथम् अधितिष्ठथः रथे उपविशथः । अतः सर्वस्मात् स्थानात् हे अश्विनौ आ यातम् आगच्छतम् ॥ ६ ॥

---

म. ९. सू. ११

हे नरः नेतारः ऋत्विजः यज्ञस्य देवान् इन्द्रादीन् अभि इयक्षते आभिमुख्येन यष्टुम् इच्छते पवमानाय क्षरते अस्मै अभिपूयमाणाय इन्दवे सोमाय उप गायत उपगानं कुरुत ॥ १ ॥

हे सोम ते तव देवं देवनशीलं देवयु देवयुं देवकामं रसं देवाय देवनशीलाय इन्द्राय मधुना पयः गव्येन पयसा अथर्वाणः ऋषयः अभि अशिश्रयुः अभ्यश्रीणन् । समस्कुर्वन् इत्यर्थः ॥ २ ॥

हे राजन् दीप्यमान सोम सः प्रसिद्धः त्वं नः अस्माकं गवे शं सुखं पवस्व क्षर । जनाय पुत्रादये च शं पवस्व । अर्वते अश्वाय च शं पवस्व । ओषधीभ्यः च शं पवस्व ॥ ३ ॥

हे स्तोतारः बभ्रवे बभ्रुवर्णाय स्वतवसे स्वबलाय अरुणाय कदाचिद् अरुणवर्णाय दिविस्पृशे दिवं स्पृशते सोमाय नु क्षिप्रं गाथं स्तुतिरूपां वाचम् अर्चत उच्चारयत इत्यर्थः ॥ ४ ॥

हे ऋत्विजः हस्तच्युतेभिः हस्तप्रच्युतैः अद्रिभिः अभिषवग्रावभिः सुतम् अभिषुतं सोमं पुनीतन पवित्रे पावयत । अपि च मधौ मदकरे सोमे मधु गव्यं पयः आ धावत प्रक्षिपत ॥ ५ ॥

हे ऋत्विजः नमसेत् नमस्कारेणैव उप सीदत सोमम् उपगच्छत । दध्नेत् दध्नैव अभि श्रीणीतन अभिश्रीणीत च । इन्द्रे इन्दुं सोमं दधातन धत्त च ॥ ६ ॥

हे सोम अमित्रहा अमित्राणां हन्ता विचर्षणिः विद्रष्टा देवेभ्यः अनुकामकृत् अभीष्टस्य कर्ता त्वं गवे अस्माकं गवे शं सुखं पवस्व क्षर ॥ ७ ॥

हे सोम मनश्चित् मनसो ज्ञाता मनसस्पतिः ईश्वरः त्वम् इन्द्राय इन्द्रस्य पातवे पानाय मदाय च परि षिच्यसे परितः पात्रेषु सिच्यसे ॥ ८ ॥

हे इन्दो क्लिद्यमान पवमान सोम त्वं सुवीर्यं शोभनवीर्योपेतं रयिं धनं नः अस्माकं संबन्धिना इन्द्रेण युजा सहायेन नः अस्मभ्यं रिरीहि देहि ॥ ९ ॥

---

## २२

म. १०. सू. १४

हे मदीयान्तरात्मन् यजमान वा त्वं राजानं पितॄणां स्वामिनं यमं हविषा पुरोडाशादिना दुवस्य परिचर । कीदृशम् । प्रवतः प्रकृष्टकर्मवतो भूलोकवर्तिभोगसाधनं पुण्यम् अनुष्ठितवतः पुरुषान् महीः तत्तद्भोगोचितभूप्रदेशविशेषान् अनु परेयिवांसं मरणादूर्ध्वं प्रापितवन्तम् । तथा बहुभ्यः स्वर्गार्थिभ्यः पुण्यकृद्भ्यः पुण्यकृतामर्थे पन्थां स्वर्गस्योचितं मार्गम्

अनुपस्पशानम् अबाधमानम् । पापिन एव पुरुषान् स्वर्गमार्ग-बाधेन नरकं प्रापयति न तु पुण्यकृतः । वैवस्वतं विवस्वतः सूर्यस्य पुत्रं जनानां पापिनां संगमनं गन्तव्यस्थानरूपम् ॥१॥

प्रथमः सर्वेषां मुख्यः यमः नः अस्माकं प्रजानां गातुं शुभाशुभनिमित्तं विवेद जानाति । एषा गव्यूतिः न अपभर्तवा उ । अतिशयज्ञानयोगात् यमस्य न केनचिद् अपहर्तुम् अपनेतुं शक्यते इत्यर्थः । यत्र यस्मिन् मार्गे नः अस्माकं पूर्वे पितरः परेयुः एना अनेन मार्गेण गच्छन्तः जज्ञानाः जाताः सर्वे स्वाः स्वभूताः पथ्याः स्वकर्ममार्गभूता गतीः अनु गच्छन्ति ॥ २ ॥

मातली । मातलिः इन्द्रस्य सारथिः । तद्वान् इन्द्रो मातली । स च कव्यैः कव्यभाग्भिः सह ववृधानः वर्धमानो भवति । यमः च अङ्गिरोभिः पितृविशेषैः सह वर्धमानो भवति । तत्र देवा इन्द्रादयः यांश्च कव्यभागादीन् पितॄन् ववृधुः वर्धयन्ति ये च कव्यभागादयः पितरः देवान् इन्द्रादीन् वर्धयन्ति तेषां मध्ये अन्ये इन्द्रादयः स्वाहा मदन्ति स्वाहा-कारेण हृष्यन्ति । अन्ये पितरः स्वधया स्वधाकारेण हृष्यन्ति ॥ ३ ॥

हे यम अङ्गिरोभिः एतन्नामकैः पितृभिः संविदानः ऐकमत्यं गतः त्वम् इमं प्रस्तरं विस्तीर्णं यज्ञविशेषम् आ सीद आगत्य उपविश । हि यस्माद् एवं तस्मात् कविशस्ताः विद्वद्भिर्ऋत्विग्भिः प्रयुक्ताः मन्त्राः त्वा त्वाम् आ वहन्तु । हे राजन् एना एतेन हविषा तुष्टः मादयस्व यजमानं हर्षय ॥ ४ ॥

हे यम वैरूपैः विविधरूपयुक्तैः वैरूपसामप्रियैर्वा यज्ञियेभिः यज्ञयोग्यैः अङ्गिरोभिः सह आ गहि आ गच्छ। आगत्य च इह अस्मिन् यज्ञे मादयस्व यजमानं हर्षय। यः विवस्वान् ते तव पिता अस्ति अस्मिन् यज्ञे तं विवस्वन्तं हुवे आह्वयामि। स च आस्तीर्णे बर्हिषि आ निषद्य उपविश्य यजमानं हर्षयतु ॥ ५ ॥

अङ्गिरसः अङ्गिरोनामकाः अथर्वाणः अथर्वनामकाः भृगवः भृगुनामकाश्च नः अस्माकं पितरः नवग्वा अभिनवगमनयुक्ताः सदा नूतनवत् प्रीतिजनका इत्यर्थः। ते च सोम्यासः। सोमम् अर्हन्तीति सोम्याः। यज्ञियानां यज्ञार्हाणां तेषां सुमतौ अनुग्रहयुक्तायां बुद्धौ वयं स्याम सर्वदा तिष्ठेम। अपि च सौमनसे भद्रे सौमनसस्य कारणे कल्याणे फले स्याम सर्वदा तिष्ठेम ॥ ६ ॥

यत्र यस्मिन् स्थाने नः अस्माकं पूर्वे पुरातनाः पितरः पितामहादयः परेयुः पूर्व्येभिः। पूर्वस्मिन् काले भवैः अनादिकालप्रवृत्तैरित्यर्थः। पथिभिः मार्गैः हे मत्पितः तत्स्थानं प्रेहि प्रगच्छ शीघ्रं गच्छ। गत्वा च स्वधया अमृतान्नेन मदन्ता मदन्तौ तृप्यन्तौ राजाना राजानौ उभा उभौ यमं देवं द्योतमानं वरुणं च पश्यासि पश्य ॥ ७ ॥

हे मदीयपितः ततः त्वं परमे उत्कृष्टे व्योमन् व्योमनि स्वर्गाख्ये स्थाने स्वभूतैः पितृभिः सह सं गच्छस्व। इष्टापूर्तेन श्रौतस्मार्तदानफलेन सं गच्छस्व। तत इष्टापूर्तेन सह आगम्य अवद्यं पापं हित्वा परित्यज्य अस्तं ध्रियमाणाख्यं गृहम् एहि आगच्छ। ततः सुवर्चाः। तृतीयार्थे प्रथमा।

सुवर्चसा शोभनदीप्तियुक्तेन तन्वा स्वशरीरेण सं गच्छस्व ॥ ८ ॥

श्मशाने पूर्वं स्थिता हे पिशाचादयः अतः अस्मात् प्रमृज्यमानदहनस्थानात् अपेत अपगच्छत । वीत विशेषेण गच्छत । वि सर्पत च इदं स्थानं परित्यज्य नानाभावेन दूरतरं देशं गच्छत इत्यर्थः । पितरः अस्मै मृतयजमानस्य अर्थाय एतं लोकम् इदं दहनस्थानम् अक्रन् । यमस्य आज्ञया अकुर्वन् । यमः अपि अहोभिः दिवसैः अद्भिः अभ्युक्षणोदकैः अक्तुभिः रात्रिभिः व्यक्तं संगतम् । शुद्धिनिमित्तैः कालोदकादिभिः शोधितम् इत्यर्थः । अवसानं दहनस्थानम् । अस्मै मृतयजमानस्य अर्थाय ददाति दत्तवान् ॥ ९ ॥

हे अग्ने साधुना पथा समीचीनेन मार्गेण श्वानौ उभौ अति द्रव अतिक्रम्य गच्छ । यमसंबन्धिनौ यौ श्वानौ प्रेतस्य बाधकौ तौ परित्यज्य समीचीनेन मार्गेण प्रेतं नय इत्यर्थः । कीदृशौ श्वानौ । सारमेयौ । सरमा नाम काचित् प्रसिद्धा देवशुनी तस्याः पुत्रौ । चतुरक्षौ उपरिभागे पुनरप्यक्षिद्वयं ययोः तादृशौ । अथ शोभनमार्गेण गमनानन्तरं ये पितरः यमेन सधमादं सहर्षं मदन्ति आनन्दं प्राप्नुवन्ति तान् सुविदत्रान् सुष्ठ्वभिज्ञान् पितॄन् उपेहि उपगच्छ ॥ १० ॥

हे राजन् हे यम ते त्वदीयौ यौ श्वानौ विद्येते ताभ्यां श्वभ्यां हे राजन् यम एनं प्रेतं परि देहि रक्षार्थं प्रयच्छ । कीदृशौ श्वानौ । रक्षितारौ यमगृहस्य रक्षकौ । चतुरक्षौ अक्षिचतुष्टययुक्तौ । पथिरक्षी मार्गस्य रक्षकौ । नृचक्षसौ मनुष्यैः ख्याप्यमानौ । श्रुतिस्मृतिपुराणाभिज्ञाः

पुरुषाः तौ प्रख्यापयन्ति । ताभ्यां श्वभ्यां दत्त्वा, अस्मै प्रेताय स्वस्ति च क्षेममपि अनमीवं न रोगाभावमपि धेहि संपादय ॥ ११ ॥

यमस्य संबन्धिनो दूतौ श्वानौ जनाँ अनु प्राणिनो लक्षीकृत्य सर्वत्र चरतः । कीदृशौ । उरूणसौ दीर्घनासिकायुक्तौ । असुतृपौ परकीयान् प्राणान् स्वीकृत्य तैः तृप्यन्तौ । उदुम्बलौ उरुबलौ विस्तीर्णबलौ । तौ उभौ दूतौ सूर्याय दृशये सूर्यस्य दर्शनार्थम् अद्य दिने इह कर्मणि भद्रम् असुं समीचीनं प्राणं पुनः अस्मभ्यं दाताम् अदत्ताम् ॥ १२ ॥

हे ऋत्विजः यमाय यमदेवतार्थं सोमं सुनुत । लतात्मकं सोमम् अभिषुणुत । तथा यमार्थं हविः जुहुत । अग्निः दूतो यस्मिन् यज्ञे सोऽयम् अग्निदूतः । अरंकृतः बहुभिर्द्रव्यैः अलंकाररूपैः युक्तः तादृशः यज्ञः यमं ह यममेव गच्छति ॥ १३ ॥

हे ऋत्विजः यूयं यमाय घृतवत् आज्येन संयुक्तं हविः पुरोडाशादिकं जुहोत जुहुत । प्र तिष्ठत च यमं यूयम् उपतिष्ठध्वं च । देवेषु मध्ये सः यमो देवः प्र जीवसे प्रकृष्टजीवनार्थं नः अस्माकं दीर्घम् आयुः आ यमत् प्रयच्छतु ॥ १४ ॥

✓ हे ऋत्विजः यमाय राज्ञे मधुमत्तम् अतिशयेन मधुरं हव्यं पुरोडाशादिकं हविः जुहोतन जुहुत । पूर्वजेभ्यः सृष्ट्यादौ उत्पन्नेभ्यः अत एव पूर्वेभ्यः अस्मत्तः पूर्वभाविभ्यः पथिकृद्भ्यः शोभनमार्गकारिभ्यः ऋषिभ्यः इदं प्रत्यक्षं यथा भवति तथा नमः अस्तु ॥ १५ ॥

त्रिकद्रुकेभिः । द्वितीयार्थे तृतीया । त्रिकद्रुकान् । ज्योतिर्गौरायुरिति त्रयो यागविशेषाः त्रिकद्रुका उच्यन्ते । तान् प्रति अङ्गभावाय संरक्षणार्थं च पतति । यमः तान् प्राप्नोति । षट्संख्याकाः उर्वीः भूमीः कृताकृतप्रत्यवेक्षणाय प्राप्नोति । तास्सोर्व्यः शाखान्तरमन्त्रे समाम्नाताः । षण्मोर्वीरंहसस्पान्तु द्यौश्च पृथिवी चापश्चौषधयश्चोर्क् च सूनृता च इति । एकमित् एकमेव बृहत् महत् जगत् यमश्च प्रतिपालनीयः प्राप्नोति । किञ्च यानि त्रिष्टुब्गायत्र्यादीनि छन्दांसि सन्ति सर्वा ता सर्वाणि तानि छन्दांसि यमे आहिता आहितानि ऋत्विग्भिः कृतस्तुतित्वेन अवस्थितानि ॥ १६ ॥

---

## २३

### म. १०. सू. ३४

बृहतः महतः विभीतकस्य फलत्वेन संबन्धिनः प्रवातेजाः प्रवणे देशे जाताः इरिणे आस्फारे वर्वृतानाः प्रवर्तमानाः प्रावेपाः प्रवेपिणः कम्पनशीला अक्षा मा मां मादयन्ति हर्षयन्ति । किंच जागृविः जयपराजययोः हर्षशोकाभ्यां कितवानां जागरणस्य कर्ता विभीदकः विभीतकविकारः अक्षः मह्यं माम् अच्छान् अचच्छदत् अत्यर्थं मादयति । तत्र दृष्टान्तः । सोमस्येव । यथा सोमस्य मौजवतस्य । मुजवति पर्वते जातः मौजवतः तस्य । तत्र हि उत्तमः

सोमो जायते । भक्षः पानं यजमानान् देवांश्च मादयति तद्वत् इत्यर्थः । तथा च यास्कः । प्रवेपिणो मा महतो विभीतकस्य फलानि मादयन्ति । प्रवातेजाः प्रवणेजाः । इरिणे वर्तमानाः । इरिणं निर्ऋणम् ऋणातेः अपार्णं भवति अपरता अस्माद् ओषधयः इति वा । सोमस्य इव मौजवतस्य भक्षः । मौजवतो मुजवति जातः । मुजवान् पर्वतः मुञ्जवान् । मुञ्जो विमुच्यते इषीकया । इषीका इषतेर्गतिकर्मणः । इयमपि इषीका एतस्मादेव । विभीतको विभेदनात् । जागृविः जागरणात् । मह्यम् अचच्छदत् ( नि. ९. ८ ) इति ॥ १ ॥

एषा अस्मदीया जाया मा मां कितवं न मिमेथ न च चुक्रोध न जिहीळे न च लज्जितवती । सखिभ्यः अस्मदीयेभ्यः कितवेभ्यः शिवा सुखकरी आसीत् अभूत् । उत अपि च मह्यं शिवा आसीत् । इत्थम् अनुव्रताम् अनुकूलां जायाम् एकपरस्य एकः परः प्रधानं यस्य तस्य अक्षस्य हेतोः कारणात् अहम् अप अरोधम् । परित्यक्तवान् अस्मि इत्यर्थः ॥ २ ॥

श्वश्रूः जायाया माता गृहगतं कितवं द्वेष्टि । निन्दति इत्यर्थः । किंच जाया भार्या अप रुणद्धि निरुणद्धि । अपि च नाथितः याचमानः कितवो धनं मर्डितारं धनदानेन सुखयितारं न विन्दते न लभते । इत्थं बुद्ध्या विमृशन् अहं जरतः वृद्धस्य वस्न्यस्य । वस्नं मूल्यं तदर्हस्य । अश्वस्य इव कितवस्य भोगं न विन्दामि न लभे ॥ ३ ॥

यस्य कितवस्य वेदने धने वाजी अक्षः देवः अगृधत्

अभिकाङ्क्षां करोति तस्य अस्य कितवस्य जायां भार्याम् अन्ये प्रतिकितवाः परि मृशन्ति वस्त्रकेशाद्याकर्षणेन संस्पृशन्ति । किंच पिता जननी च भ्रातरः सहोदराश्च एनं कितवम् आहुः वदन्ति । न वयम् अस्मदीयम् एनं जानीमः । रज्ज्वा बद्धम् एतं कितवं हे कितवाः यूयं नयत यथेष्टदेशं प्रापयत इति ॥ ४ ॥

यत् यदा अहम् आदीध्ये ध्यायामि तदानीम् एभिः अक्षैः न दविषाणि न दूपये न परितपामि । यद्वा । न दविषाणि न देविष्यामि इत्यर्थः । परायद्भ्यः स्वयमेव परागच्छद्भ्यः सखिभ्यः सखिभूतेभ्यः कितवेभ्यः अव हीये अवहितो भवामि । नाहं प्रथमम् अक्षान् विसृजामीति । किंच बभ्रवः बभ्रुवर्णा अक्षाः न्युप्ताः कितवैः अवक्षिप्ताः सन्तः वाचम् अक्रत शब्दं कुर्वन्ति । तदा संकल्पं परित्यज्य अक्षव्यसनेन अभिभूयमानः अहम् एषाम् अक्षाणां निष्कृतं स्थानं जारिणीव यथा कामव्यसनेन अभिभूयमाना स्वैरिणी संकेतस्थानं याति तद्वत् एमि इत् गच्छाम्येव ॥ ५ ॥

तन्वा शरीरेण शूशुजानः शोशुचानो दीप्यमानः कितवः कोऽत्रास्ति धनिकः तं जेष्यामीति पृच्छमानः पृच्छन् सभां कितवसंबन्धिनीम् एति गच्छति । तत्र प्रतिदीव्ने प्रतिदेविने कितवाय कृतानि देवनोपयुक्तानि कर्माणि आ दधतः जयार्थम् आभिमुख्येन मर्यादया वा दधतः अस्य कामम् इच्छाम् अक्षासः अक्षाः वि तिरन्ति वर्धयन्ति ॥ ६ ॥

अक्षासः इत् अक्षा एव अङ्कुशिनः अङ्कुशवन्तः नितोदिनः नितोदितवन्तश्च निकृत्वानः पराजये निकर्तनशीलाः

छेतारो वा तपनाः पराजये कितवस्य संतापकाः तापयिष्णवः सर्वस्वहारकत्वेन कुटुम्बस्य संतापशीलाश्च भवन्ति । किंच जयतः कितवस्य कुमारदेष्णाः धनदानेन धन्यतां लम्भयन्तः कुमाराणां दातारो भवन्ति । अपि च मध्वा मधुना संपृक्ताः प्रतिकितवेन बर्हणा परिवृद्धेन सर्वस्वहरणेन कितवस्य पुनर्हणः पुनर्हन्तारो भवन्ति ॥ ७ ॥

एषाम् अक्षाणां त्रिपञ्चाशः त्र्यधिकपञ्चाशत्संख्याकः व्रातः संघः क्रीडति आस्फारे विहरति । अक्षिकाः प्रायेण तावद्भिः अक्षैः दीव्यन्ति हि । तत्र दृष्टान्तः । सत्यधर्मा सविता सर्वस्य जगतः प्रेरकः सूर्यो देवइव । यथा सविता देवो जगति विहरति तद्वद् अक्षाणां संघः आस्फारे विहरतीत्यर्थः । किंच उग्रस्य चित् क्रूरस्यापि मन्यवे क्रोधाय एते अक्षाः न नमन्ते न प्रह्वीभवन्ति न वशे वर्तन्ते तं नमयन्ति इत्यर्थः । राजा चित् जगतः ईश्वरोऽपि एभ्यः नम इत् नमस्कारमेव देवनवेलायां कृणोति । न अवशां करोति इत्यर्थः ॥ ८ ॥

अपि च एते अक्षाः नीचा नीचीनस्थले वर्तन्ते । तथापि उपरि पराजयात् भीतानां द्यूतकराणां कितवानां हृदयस्य उपरि स्फुरन्ति । अहस्तासः हस्तरहिता अपि अक्षाः हस्तवन्तं द्यूतकरं कितवं सहन्ते पराजयकरणेन अभिभवन्ति । दिव्याः दिवि भवाः अपकृताः अङ्गाराः अङ्गारसदृशाः अक्षाः इरिणे इन्धनरहिते आस्फारे न्युप्ताः शीताः शीतस्पर्शाः सन्तः अपि हृदयं कितवानाम् अन्तःकरणं निर्दहन्ति पराजयजनितसंतापेन भस्मीकुर्वन्ति ॥ ९ ॥

क्व स्वित् क्वापि चरतः निर्वेदाद् गच्छतः कितवस्य जाया भार्या हीना परित्यक्ता सती तप्यते वियोगजसंतापेन संतप्ता भवति । माता जननी अपि पुत्रस्य क्वापि चरतः कितवस्य संबन्धात् हीना तप्यते । पुत्रशोकेन सन्तप्ता भवति । ऋणावा अक्षपराजयात् ऋणवान् कितवः सर्वतो बिभ्यद् धनं स्तेयजनितम् इच्छमानः कामयमानः अन्येषां ब्राह्मणादीनाम् अस्तं गृहं नक्तं रात्रौ उप एति चौर्यार्थम् उपगच्छति ॥ १० ॥

कितवं कितवः । विभक्तिव्यत्ययः । अन्येषां स्वव्यतिरिक्तानां पुरुषाणां जायां जायाभूतां स्त्रियं नारी सुखेन वर्तमानां सुकृतं सुष्ठु कृतं योनिं गृहं च दृष्ट्वाय मज्जाया दुःखिता गृहं च असंस्कृतमिति ज्ञात्वा तताप तप्यते । पुनः पूर्वाह्णे प्रातःकाले बभ्रून् बभ्रुवर्णान् अश्वान् व्यापकान् अक्षान् युयुजे युनक्ति । पुनश्च वृषलः वृषलकर्मा सः कितवः रात्रौ अग्नेः अन्ते समीपे पपाद शीतार्तः सन् शेते ॥ ११ ॥

हे अक्षाः वः युष्माकं महतो गणस्य संघस्य यः अक्षः सेनानीः नेता बभूव भवति व्रातस्य च । गणव्रातयोः अल्पो भेदः । राजा ईश्वरः प्रथमः मुख्यो बभूव तस्मै अक्षाय कृणोमि अहम् अञ्जलिं करोमि । अतः परं धना धनानि अक्षार्थम् अहं न रुणध्मि न संपादयामि इत्यर्थः । एतदेव दर्शयति । अहं दश दशसंख्याका अङ्गुलीः प्राचीः प्राङमुखीः करोमि । तत् एतत् अहम् ऋतं सत्यमेव वदामि ॥ १२ ॥

हे कितव बहु मन्यमानः मद्वचने विश्वासं कुर्वन् त्वम् अक्षैः मा दीव्यः द्यूतं मा कुरु । कृषिमित् कृषिमेव कृषस्व

कुरु । वित्ते कृष्या संपादिते धने रमस्व रतिं कुरु । तत्र कृषौ गावः भवन्ति । तत्र जाया भवति । तत् एव धर्मरहस्यं श्रुतिस्मृतिकर्ता सविता सर्वस्य प्रेरकः अयं दृष्टिगोचरः अयं ईश्वरः वि चष्टे विविधम् आख्यातवान् ॥ १३ ॥

हे अक्षाः यूयं मित्रं कृणुध्वम् अस्मासु मैत्रीं कुरुत । खलु इति पूरणः । नः अस्मान् मृळत सुखयत च । नः अस्मान् धृष्णु धृष्णुना । तृतीयार्थे प्रथमा । घोरेण असह्येन मा अभि चरत मा गच्छत । किंच वः युष्माकं मन्युः क्रोधः अरातिः अस्माकं शत्रुः नि विशताम् अस्मच्छत्रुषु तिष्ठतु । अन्यः अस्माकं शत्रुः कश्चित् बभ्रूणां बभ्रुवर्णानां युष्माकं प्रसितौ प्रबन्धने नु क्षिप्रम् अस्तु भवतु ॥ १४ ॥

---

## २४

### म. १०. सू. ७५

हे आपः वः युष्माकं महिमानं महत्त्वं स्तोत्रम् उत्तमम् उत्कृष्टतमं कारुः स्तोता सिन्धुक्षिद् अहं विवस्वतः परिचरणवतः यजमानस्य सदने यज्ञगृहे सु सुष्ठु प्र वोचाति प्रब्रवीमि । ता नद्यः सप्तसप्त भूत्वा त्रेधा । पृथिव्याम् अन्तरिक्षे दिवि चेति त्रिधा । त्रिप्रकारं चक्रमुः प्रावहन् । सृत्वरीणाम् आसां मध्ये सिन्धुः एतन्नामिका नदी ओजसा स्वबलेन अति सर्वा अपि नदीः अतिक्रम्य प्रवहति इति शेषः ॥ १ ॥

हे सिन्धो देवि ते तव यातवे गमनाय वरुणः देवः पथः मार्गान् प्र अरदत् प्राचीनं व्यलिखत् । सा हि *प्राक् प्रवहति । अथवा प्रकृष्टम् इतरनदीभ्योऽपि अत्यन्तं विस्तृतं व्यदारयत् । यत् यस्मात् हे सिन्धो वाजान् अन्नानि अभिलक्ष्य त्वम् अभ्यद्रवः अभ्यगच्छः । किंच त्वं भूम्या अति उपरि सानुना समुच्छ्रितेन प्रवता मार्गेण यासि गच्छसि । सिन्धुः खलु पर्वतान् विभिद्य गता । यत् येन समुच्छ्रितेन मार्गेण गच्छन्ती त्वम् एषां सर्वेषां जगतां जङ्गमानां प्राणिनाम् अग्रं प्रत्यक्षम् इरज्यसि ईशिषे ॥ २ ॥

भूम्योपरि भूमेः उपरि प्रवर्तमानः स्वनः दिवि यतते गच्छति दिवं व्याप्नोति । सेयं सिन्धुः अनन्तम् अपर्यन्तं शुष्मं वेगं भानुना दीप्तेन ऊर्मिणा उदियर्ति उद्गमयति । अभ्रादिव अन्तरिक्षाद् यथा वृष्टयः प्र स्तनयन्ति तद्वद् अस्याः शब्दाः प्रादुर्भवन्ति । यत् यदा सिन्धुः इयं रोरुवत् भृशं शब्दयन् वृषभो न वृषभ इव एति गच्छति ॥ ३ ॥

हे सिन्धो त्वा त्वां शिशुम् इत् न मातरः मातरः पुत्रम् इव वाश्राः शब्दयन्त्यः इतरा नद्यः अभि अर्षन्ति अभिगच्छन्ति । पयसेव धेनवः पयसा युक्ताः नवप्रसूतिका गावः इव । किंच युध्वा युद्धकृत् राजेव त्वमित् त्वमेव सिचौ सिच्यमानौ तटौ नयसि उदकपूरं यत् यदा आसां

*सिन्धोः प्रवाहस्य पश्चिमदिग्गामित्वात् चिन्त्यमेतत् । दक्षिणापथनदीनां प्रवाहान् पूर्वदिग्गामिनः दृष्ट्वा तत्प्रदेशस्थः श्रीसायणाचार्यः सर्वाः नदीः प्रायः प्राक् प्रवहन्तीर्मन्यते ॥

प्रवतां त्वया सह गच्छन्तीनाम् अग्रम् अग्रे इनक्षसि व्याप्नोषि सर्वासां पुरतो गच्छसि ॥ ४ ॥

अत्र प्रधानभूताः सप्त नद्यः तदवयवभूताश्च तिस्रो नद्यः स्तूयन्ते । हे गङ्गे हे यमुने हे सरस्वति हे शुतुद्रि हे परुष्णि हे असिक्न्या अवयवभूतया सहिते मरुद्वृधे हे वितस्तया सुषोमया च सहिते आर्जीकीये त्वं च एवं सप्त नद्यो यूयं मे स्तोमं स्तोत्रम् अस्मदीयम् आ सचत आसेवध्वम् । शृणुहि शृणुत च ॥ ५ ॥

हे सिन्धो त्वं क्रुमुं क्रमणशीलां गोमतीं नदीं यातवे प्रतियातुं पर्वताद् अवरूढा प्रथमं तृष्टामया नद्या सजूः संगता असि । पश्चात् सुसर्त्वा रसया श्वेत्या त्या कुभया मेहत्न्वा च सह सजूः भव । याभिः त्वं सरथं समानं रथम् आरुह्य ईयसे गच्छसि ॥ ६ ॥

ऋजीती ऋजुगामिनी एनी श्वेतवर्णा रुशती दीप्यमाना सिन्धुः त्यांसि वेगवन्ति रजांसि उदकानि परि भरते प्रभरति । तादृशी अदब्धा अहिंसिता सिन्धुः अपसां कर्मवतीनां मध्ये अपस्तमा वेगाख्यकर्मवती भवति । अश्वा न वडवा इव चित्रा चायनीया वपुषी वपुष्मती योषित् इव दर्शता दर्शनीया भवति ॥ ७ ॥

सेयं सिन्धुः स्वश्वा शोभनाश्वोपेता सुरथा शोभनरथा सुवासाः शोभनवसना हिरण्ययी हिरण्मयाभरणा सुकृता वाजिनीवती अन्नवती ऊर्णावती । तस्याः समीपे देशे हि सन्ति ऊर्णाः यासां रोमभिः कम्बलाः क्रियन्ते । युवतिः

नित्यतरुणी सर्वदा हीनोदका सीलमावती । सीराणि मया ओषध्या रज्जुभूतया बध्यन्ते सा सीलमा इति निगद्यते कृषीवलैः । तादृगोषध्युपेता । उत अपि च सुभगा सिन्धुः मधुवृधं मधुवर्धकं निर्गुण्ड्यादिकम् अधि वस्ते आच्छादयति। तस्यास्तीरे निर्गुण्ड्यादीनि बहूनि सन्ति ॥ ८ ॥

सिन्धुः देवता सुखं सुखकरं शोभनद्वारं वा अश्विनम् अश्ववन्तं रथं युयुजे युनक्ति । तेन रथेन वाजम् अन्नं सनिषत् प्रयच्छतु । अस्मिन् आजौ संग्रामे यज्ञे वा । अस्य सिन्धुरथस्य महिमा महान् हि पनस्यते स्तूयते । कीदृशस्य अस्य । अदब्धस्य अन्यैः अहिंस्यस्य स्वयशसः स्वायत्तकीर्तेः विरप्शिनः महतः । महन्नाम एतत् ॥ ९ ॥

---

## २५

### म. १०. सू. ८२

चक्षुषः चक्षुरुपलक्षितस्य इन्द्रियसंघातमकस्य शरीरस्य पिता उत्पादयिता । यद्वा चक्षुः व्यापकं तेजः तस्य उत्पादयिता । मनसा नहि मत्समोऽस्ति कश्चित् इति बुद्धया हि खलु धीरः धृष्टो विश्वकर्मा प्रथमं घृतम् उदकम् अजनत् अजनयत् । पश्चात् एने द्यावापृथिव्यौ नम्नमाने तस्मिन्नुदके इतस्ततः चलन्त्यौ यः अजनयत् । अथ यदेत् यदैव अन्ताः

पर्यन्तप्रदेशाः पूर्वे पुराणाः द्यावापृथिव्योः संबन्धिनः अददृहन्त दृढा अभवन् विश्वकर्मणा दृढाः संपादिताः इत्यर्थः । आदित् अनन्तरमेव द्यावापृथिवी द्यावापृथिव्यौ अप्रथेतां यथाकामं प्रथिते अभूताम् ॥ १ ॥

अयं मन्त्रः अधियज्ञ-अध्यात्मयोः भेदेन द्विधा व्याख्येयः ॥

तत्र प्रथमं दैवतम् अधिकृत्य उच्यते । विश्वकर्मा बहुविधप्रकाशवृष्टिप्रदानादिकर्मणां कर्ता आदित्यः स च विमनाः विभूतमनाः । आत् इति अनर्थकः सर्वत इत्यर्थे वा । विहायाः विविधम् आप्ता महान् इत्यर्थः । धाता वृष्ट्यादिकर्ता च विधाता जगतः कर्ता च परमा परमः संदृक् संद्रष्टा च भूतानाम् । तेषां सप्तर्षीणाम् ज्योतिषां रश्मीनाम् इत्यर्थः । चरमपादे वक्ष्यमाणत्वात् । इष्टानि स्थानानि शरीराणि वा इषा उदकेन सं मदन्ति सं मोदन्ते । यत्र यस्मिन् आदित्ये तं देवं सप्तर्षीन् सप्तर्षिभ्यः इत्यर्थः । तेभ्यः परः परस्तात् एकम् एव आदित्यम् आहुः मन्त्रविदः ॥

अध्यात्मपक्ष उच्यते । विश्वकर्मा यः परमात्मा प्राणप्रकाशाभ्याम् उपेतः सन् बहुकर्मा भवति । स च विमनाः विभूतमनाः विहायाः वस्तुतो महान् विशेषेण सुकृतदुष्कृतफलस्य आप्ता धाता विधाता च परमा उत संदृक् परमश्च संद्रष्टा इन्द्रियाणां तेषां सप्तर्षीणां द्रष्टॄणाम् इन्द्रियाणाम् इष्टानि स्वरूपाणि इषा अन्नेन सह सं मदन्ति संमोदन्ते । यत्र यस्मिन् आत्मनि तम् आत्मानं सप्तर्षीन् सप्तसंख्याकेभ्यः सर्पणस्वभावेभ्यो वा परः परस्ताद्

वर्तमानम् इन्द्रियाद्यतीतम् एकं परमात्मानम् आहुः तत्त्वविदः ॥ २ ॥

यः विश्वकर्मा नः अस्माकं पिता पालयिता । न केवलं पालकः किन्तु जनिता उत्पादकः । किम् अनेन अस्माकम् उत्पादकः इति संकोचेन यो विधाता सर्वस्य जगत उत्पादकः । यः विश्वकर्मा नः अस्माकम् उत्पन्नानि धामानि देवानां तेजःस्थानानि वेद वेत्ति । किं बहुना । विश्वा विश्वानि भुवना भूतजातानि वेद वेत्ति । यश्च देवानाम् अग्निवाय्वादीनां नामधाः नाम्नां धाता इन्द्रादीन् निर्माय तेषाम् इन्द्रादि नाम कृत्वा तत्तत्पदेषु स्थापयिता एक एव । तं देवम् अन्या अन्यानि भुवना भूतजातानि प्रश्नं कः परमेश्वर इति पृच्छां यन्ति प्राप्नुवन्ति ॥ ३ ॥

ते पूर्वे ऋषयः अस्मै विश्वकर्मणे द्रविणं चरुपुरोडाशादिलक्षणं धनं सं सम्यक् आयजन्त सर्वतो यजन्ते । जरितारो न भूना स्तोतारो यथा भूना महता स्तोत्रेण यजन्ति तद्वत् । ये महर्षयः असूर्ते सरणवर्जिते सूर्ते सरणसहिते स्थावरजङ्गमात्मके रजसि लोके नियत्ते निषण्णे निश्चलमवस्थिते इमानि भूतानि भुवनानि । प्राणिनः इत्यर्थः । समकृण्वन् सम्यग् धनादिना अपूजयन् । अथवा अयमर्थः । ये स्थावरजङ्गमात्मके जगति वर्तमानान् एतान् प्राणिनः तेजसा समकृण्वन् ते पूर्वे ऋषयः द्रष्टारः रश्मयः अस्मै आदित्यात्मकाय विश्वकर्मणे द्रविणं तेजः आयजन्त ॥ ४ ॥

यद् ईश्वरतत्त्वं दिवा परः द्युलोकादपि परः परस्ताद् वर्तमानं तथा एना अस्याः पृथिव्याः परः परस्ताद् वर्तमानं

तथा देवेभिः देवैः परस्ताद् वर्तमानम् असुरैः परस्ताद् वर्तमानं च यद् अस्ति तद् गुहायाम् अवस्थितं कं स्विद् गर्भं गर्भवत् सर्वस्य ग्राहकं तत्त्वम् आपः प्रथमं दध्रे घृतवत्यः । यत्र यस्मिन् गर्भे देवाः इन्द्रादयः विश्वे सर्वेऽपि समपश्यन्त संगताः परस्परं पश्यन्ति । एवं जानन् एव कश्चित् तत्त्ववित् प्रश्नं करोति ॥ ५ ॥

अनया पूर्वमन्त्रोक्तस्य प्रश्नस्य उत्तरम् अभिधीयते । तमित् तमेव विश्वकर्माणं गर्भं गर्भस्थानीयं प्रथमम् इतरसृष्टेः पूर्वम् आपः दध्रे घृतवत्यः । यत्र गर्भे विश्वे सर्वे देवाः इन्द्रादयः समगच्छन्त संगता भवन्ति । तस्य अजस्य नाभौ अधि नाभौ । अधीति सप्तम्यर्थानुवादी । एकम् अर्पितम् इति अण्डाभिप्रायेण उक्तम् । अण्डं हि प्राक् सर्गात् नाभिस्थाने तिष्ठति । यस्मिन् अण्डे विश्वानि भुवनानि सर्वाणि भूतजातानि तस्थुः तिष्ठन्ति । अथवा अजस्य जन्मरहितस्य ब्रह्मणः स्वसृष्टे जले शयानस्य नाभौ सर्वजगद्बन्धके उदके एकं ब्रह्माण्डम् अर्पितं स्थापितम् । शिष्टं समानम् । अथ अस्मिन्नर्थे स्मृतिः । अप एव ससर्जादौ तासु वीर्यमवाकिरत् । तदण्डमभवद्धैमं सूर्यकोटिसमप्रभम् ॥ (मनु. १. ८-९) इति ॥ ६ ॥

हे नराः तं विश्वकर्माणं न विदाथ न जानीथ । यः इमा इमानि भूतानि जजान उत्पादितवान् । युष्माकम् अहंप्रत्ययगम्यानां जीवानाम् अन्तरम् अन्यत् अहंप्रत्ययगम्यात् अतिरिक्तं सर्ववेदान्तवेद्यम् ईश्वरतत्त्वं बभूव भवति विद्यते । तत् कुतो न विद्मः इति चेत् श्रूयताम् । *नीहारेण प्रावृताः*

यूयं नीहारसदृशेन अज्ञानेन आच्छन्नाः अतो न जानीथ । न केवलं प्रावृतत्वं किंतु जल्प्या च देवोऽहं मनुष्योऽहम् इत्याद्यनृतजल्पेन प्रावृताः । किंच असुतृपः केनाप्युपायेन असून् तृप्यन्तः उदरंभराः इत्यर्थः । न तु पारमेश्वरं तत्त्वं विचारितवन्तः । न केवलम् इहलोकभोगमात्रतृप्ताः । किन्तु उक्थशासः अपि नानाविधेषु यज्ञेषु उक्थं प्रउगनिष्केवल्यादिकं शंसन्तः चरन्ति पृथिव्यां वर्तन्ते । एवं केवलम् ऐहिकामुष्मिकभोगपराः वर्तध्वे अतो विश्वकर्माणं देवं न जानीथ इत्यर्थः ॥ ७ ॥

---

## २६

### म. १०. सू. ९५

पुरूरवसो वाक्यम् । जायां पश्यन् वदति । हये हे घोरे अस्माकं दुःखजनकत्वात् घोरकारिणि जाये मनसा अस्मदुपरि अनुरागवता मनसा युक्ता सती तिष्ठ क्षणमात्रं संनिधावेव निवस । किमर्थं संस्थानम् इति तत्र आह । वचांसि वाक्यानि मिश्राणि उक्तिप्रत्युक्तिरूपाणि नु अद्य क्षिप्रं वा कृणवावहै करवावहै । किमर्थं वचसः करणम् इति चेत् उच्यते । नौ आवयोः मन्त्राः रहस्यार्थाः एते विवक्षिताः अनुदितासः अव्याहृयमाणाः परस्परम् असंभाष्यमाणा गुम्फिताः

सन्तः परतरे चन अहन् । चनेति निपातसमुदायः चार्थे ।
अनेकेषु दिवसेषु चरमेऽप्यहनि मयः सुखं न करन्
कुर्वन्ति ॥ १ ॥

अनया तम् उर्वशी प्रत्युवाच । एता एतया वाचा केवलया पुनःसंभोगरहितया किं करवाव । अहं तु इदानीं त्वत्सकाशात् प्राक्रमिषम् अतिक्रान्तवती अस्मि । अतिक्रमे दृष्टान्तः । उषसाम् अग्रियेव । बह्वीनाम् उषसां मध्ये अग्र्या अग्रे भवा पूर्वा उषाः प्राक्रमीद् यथा तथा अहमपि । यस्माद् एवं तस्माद् हे पुरूरवः त्वं पुनः अस्मत्सकाशात् अस्तं गृहं परेहि परागच्छ । मा मयि अभिलाषं कार्षीः । स्वस्या दुर्ग्रहत्वम् आह । अहं वातइव वायुरिव दुरापना दुष्प्रापा दुरापा वा अस्मि ॥ २ ॥

अनया पुरूरवाः स्वस्य विरहजनितं वैक्लव्यं तां प्रति ब्रूते । इषुधेः । इषवो धीयन्ते अत्र इति इषुधिः निषङ्गः । ततः सकाशात् इषुः असना असनार्थं प्रक्षेप्तुं न भवति श्रिये विजयार्थम् त्वद्विरहात् युद्धस्य बुद्धावपि अनिधानात् । तथा रंहिः वेगवान् अहं शत्रुसकाशात् गोषाः तेषां शत्रूणां गवां संभक्ता न अभवम् । तथा शतसाः शतानाम् अपरिमितानां शत्रुधनानां संभक्ता न अभवम् किंच अवीरे वीरवर्जिते क्रतौ राजकर्मणि सति न वि दविद्युतत् न विद्योतते मत्सामर्थ्यम् । किंच धुनयः कम्पयितारः अस्मदीयाः भटाः उरा उरौ विस्तीर्णे संग्रामे मायुम् । मीयते प्रक्षिप्यते इति मायुः शब्दः । सिंहनादं न चितयन्त न बुध्यन्ते ॥ ३ ॥

इदम् उत्तरं च उर्वशीवाक्यम् । आत्मेन पुरा आत्मना कृतम् उपसे निवेदयति । हे *उपः सा इयम् उर्वशी वसु वासकं वयः अन्नं श्वशुराय मर्तुः पुरूरवसः पित्रे दधती प्रयच्छन्ती तत्र गृहे स्थिता यदि पतिं वष्टि कामयते तदा अन्तिगृहात् । स्वभर्तृभोगगृहान्तिके यत् श्वशुरस्य भोजनगृहं तत् अन्तिगृहम् । तस्माद् गृहात् सा उर्वशी अस्तं पतिगृहं ननक्षे व्याप्नोति । यस्मिन् गृहे चाकन् कामयत उर्वशी . . . ॥ ४ ॥

अनेन पुरूरवसमेव संबोध्य उक्तवती । . . . हे पुरूरवः ते तव केतं गृहम् अनु आयम् अन्वगमं पूर्वम् । हे वीर राजा त्वं च मे मम तन्वः शरीरस्य तत् तदा आसीः अभवः । सुखयिता इति शेषः । परमप्येवं मन्तव्यं किमिति कातरो भवसि इति ॥ ५ ॥

पुरूरवसो वाक्यम् । या सुजूर्णिः सुजवा एतन्नामिका अस्ति तया या श्रेणिः या सुम्नआपिः या ह्रदेचक्षुः । नकारः समुच्चये । ताभिः चतसृभिः आलिभूताभिः मानिनीभिः सहिता ग्रन्थिनी ग्रन्थनवती संदर्भवती चरण्युः चरणशीला उर्वशी आजगाम । यद्वा । ग्रन्थिनी इत्येतत्

---

* उपः इत्यत्र निघाताभावात् तस्य संबोधनार्थकत्वं चिन्त्यम् । ततश्च अस्य वाक्यस्य उपसे निवेदितत्वमपि चिन्त्यम् । वस्तुतस्तु पुरूरवसे पूर्वकालीनं स्वस्वरूपं निरूपयन्ती उर्वशी आत्मानं परोक्षतया निर्दिशति । तथा चायमर्थः । सा उर्वशी यदा श्वशुराय वसु वासकम् अन्नं दधती ददती आसीत् तदा यदि पुरूरवाः अन्तिगृहात् निकटवर्तिगृहात् वयः उपः उच्छत् प्रकाशमानं वयः यौवनं वष्टि भोक्तुम् इच्छति ऐच्छत् तर्हि यस्मिन् गृहे वर्तमानः स पुरूरवाः चाकन् अकामयत तत् अस्तं गृहं ननक्षे सा गतवती आसीत् ॥

सखीभूताप्सरोनामधेयम् । या सुजूर्णिः सुजवा उर्वशी सा ताभिः सह जगाम । ताः अप्सरसः अञ्जयः आभरणोपेताः अरुणयः अरुणवर्णाः न सस्रुः पूर्ववत् न गच्छन्ति । श्रिये श्रयणाय धेनवः नवप्रसूताः गावो न गाव इव । आश्रयार्थं यथा गावः अनवन्त शब्दायन्ते तथा न शब्दयन्ति इति व्यतिरेके दृष्टान्तः ॥ ६ ॥

अनया एताभिः सह संसर्गः त्वया अनुभूतः इति उर्वशी वदति । अस्मिन् पुरूरवसि जायमाने सति ग्नाः अप्सरसः देववेश्याः अपि सम् आसत संगता अभवन् । अथवा जायमाने यज्ञार्थं प्रवर्धमाने सति ग्नाः देवपत्न्यः अपि समासत समभवन् । उत अपि च ईम् एनं पुरूरवसं स्वगूर्ताः स्वयंगामिन्यः नद्यः तासाम् आश्रयभूताः अवर्धयन् । किंच हे पुरूरवः यत् यस्मात् त्वा त्वां महे महते रणाय रमणीयाय संग्रामाय दस्युहत्याय दस्युहननाय देवाः त्वाम् अवर्धयन् ॥ ७ ॥

इदमादित्रीणि ऐळस्य ( = पुरूरवसः ) वाक्यानि । तत्र आदितो द्वाभ्याम् उर्वशीम् अन्याश्च सह स्तौति । यत् यदा सचा सहायभूतः पुरूरवाः अत्कं स्वकीयं रूपं जहतीषु परित्यजन्तीषु अमानुषीषु देवताभूतासु अप्सरःसु, मानुषः सन् निषेवे अभिमुखं गच्छति तदानीं ताः अप्सरसः मत् मत्तः अप अपसृत्य अत्रसन् गच्छन्ति । पलायने दृष्टान्तः । तरसन्ती भुज्युः न । तरसन्नाम मृगः । तस्य भुज्युः भोगसाधनभूता स्त्री मृगी । सा यथा व्याधाद् भीता

पलायते । किंच रथस्पृशो नाश्वाः रथे नियुक्ताः अश्वाः इव । यथा ते पलायन्ते तद्वत् पलायन्ते इति ॥ ८ ॥

उर्वश्या अनेकाभिः अस्माभिः सह भोगम् अनुभुक्तवान् असि इत्युक्तः प्रत्याचष्टे । यत् यदा आसु अमृतासु अप्सरःसु मर्तः मनुष्यः पुरूरवाः निस्पृक् निःशेषेण स्पृशन् क्षोणीभिः वाग्भिः ऋतुभिर्न कर्मभिश्च सं पृङ्क्ते संपर्कं करोति । नकारः समुच्चयार्थः । ताः अप्सरसः आतयः आतिभूताः । आतयः जलचारिणः पक्षिविशेषाः । तदानीं स्वाः तन्वः आत्मीयानि रूपाणि न शुम्भन्त न प्रकाशयन्ति । अश्वासो न अश्वाः इव क्रीळयः संक्रीडमानाः दन्दशानाः । दन्दशूका जिह्वाभिः आत्मीयाः सृक्वाः भक्षयन्तः । ते यथा चापल्येन धावन्तः स्वरूपं न प्रयच्छन्ति रथिकाय तद्वत् इति दुःखाद् ब्रूते ॥ ९ ॥

अनया उर्वशी स्तौति । या उर्वशी विद्युन् न विद्युदिव पतन्ती गच्छन्ती दविद्योतत् द्योतते । किं कुर्वती । अप्या । अप इत्यन्तरिक्षनाम । तत्संबन्धीनि व्याप्तानि वा काम्यानि अस्मदभिमतानि उदकानि वा मे मह्यं भरन्ती संपादयन्ती । यदा आगतायाः तस्याः सकाशात् अपः व्याप्तः कर्मसु कर्मवान् वा नर्यः नरेभ्यो हितः सुजातः सुजननः पुत्रः जनिष्टो अजनिष्ट उत्पद्यते तदानी मम उर्वशी दीर्घम् आयुः प्र तिरत प्रवर्धयति । प्रजामनु प्रजायसे तदु ते मर्त्य अमृतम् ( तै. ब्रा. १. ५. ५. ६ ) इति हि मन्त्रः ॥ १० ॥

उर्वशी ब्रूते । इत्था इत्थं गोपीथ्याय । गोः पृथिवी । पीथं पालनम् । भूमेः रक्षणाय जज्ञिषे हि जातोऽसि खलु

पुत्ररूपेण । आत्मा वै पुत्रनामा इति श्रुतेः । पुनस्तदेव आह । हे पुरूरवः मे मम उदरे मयि ओजः अपत्योत्पादन-सामर्थ्यं दधाथ मयि निहितवान् असि । तत् तथास्तु । अथापि स्यातव्यमिति चेत् तत्र आह । अहं विदुषी भावि कार्यं जानती सस्मिन् अहन् सर्वस्मिन्नहनि त्वया कर्तव्यं त्वा त्वाम् अशासं शिक्षितवत्यस्मि । त्वं मे मम वचनं न आशृणोः न शृणोषि । किं त्वम् अभुक् अभोक्ता अपालयिता प्रतिज्ञातार्थम् अपालयन् वदासि हये जाये इत्यादिरूपं प्रलापम् । एडकद्वयम् अस्माकं पुत्रत्वेन परिकल्पय अपत्यो-त्पादनपर्यन्तं वसामि नग्नं त्वां यदा अद्राक्षं तदा गच्छामि इत्येवंरूपो मिथःसमयः । सः पुरूरवसा न संपूर्णतया पालितः ॥ ११ ॥

इदं पुरूरवसो वाक्यम् । कदा कस्मिन् काले सूनुः तव उदरजातः सन् पितरं माम् इच्छात् इच्छेत् । कदा वा विजानन् पितरं माम् अधिगच्छन् चक्रन् क्रन्दमानः नाश्रु वर्तयत् । न इति चार्थे । किंच कः किंविधः सन् सूनुः समनसा समनसौ समनस्कौ दंपती जायापती त्वां मां च वि यूयोत् विश्लेषयेत् । अध अधुना यत् यदा अग्निः तव हृदयस्थितः तेजोरूपः गर्भः श्वशुरेषु दीदयत् दीप्यते ॥ १२ ॥

इदम् उर्वशीवाक्यम् । हे पुरूरवः त्वां प्रति ब्रवाणि प्रतिवच्मि । त्वदपत्यम् अश्रु बाष्पं वर्तयते वर्तयिष्यति । आध्ये आध्याते वस्तुनि शिवायै शिवे कल्याणे समुपस्थिते सति चक्रन् रुदन् अश्रूणि विमुञ्चन् न क्रन्दत् । नकारः

चार्थे । रोत्स्यति च इत्यर्थः । तत् त्वदपत्यं ते तुभ्यं हिनव प्रहिणोमि यत् अपत्यं ते, तव संबन्धि अस्मे अस्मासु निहितम् । त्वं परेहि अस्तम् । स्वगृहं प्रतिगच्छ । हे मूर मूढ मा मां नहि आपः न प्राप्नोषि ॥ १३ ॥

अथ परिदूनः पुरूरवा उवाच । सुदेवः त्वया सह सुक्रीडः पतिः अद्य प्रपतेत् । अत्रैव प्रपततु । अथवा अनावृत् अनावृत्तः सन् परमां परावतं दूरादपि दूरदेशं गन्तवै गन्तुं महाप्रस्थानगमनं कुर्यात् । अध अथवा यत्रकुत्रापि गन्तुम् असमर्थः निर्ऋतेः पृथिव्याः उपस्थे शयीत शयनं कुर्यात् । यद्वा निर्ऋतिः पापदेवता । तस्याः उपस्थे उत्सङ्गे संनिधौ म्रियताम् इत्यर्थः । अध अथवा एनं वृकाः आरण्याः श्वानः रभसासः वेगवन्तः अद्युः भक्षयन्तु ॥ १४ ॥

तम् इतरा प्रत्युवाच । हे पुरूरवः त्वं मा मृथाः मृतिं मा प्राप्नुहि । तथा मा प्र पप्तः अत्रैव पतनं मा कार्षीः । तथा त्वा त्वाम् अशिवासः अशुभाः वृकासः वृकाः मा उ क्षन् । उ इति एवकारार्थे । अक्षन् । मा अभ्यवहारयन्तु । किमिति एवम् अस्मदुपरि आग्रहं करोषि । मा कार्षीः इत्यर्थः । अथ स्वस्नेहस्य असारताम् आह । स्त्रैणानि स्त्रीणां कृतानि सख्यानि न वै सन्ति । न सन्ति खलु । अभावे कारणम् आह । एता एतानि सख्यानि सालावृकाणां हृदयानि यथा वत्सादीनां विश्वासापन्नानां घातुकानि तद्वत् ॥ १५ ॥

यत् यदा विरूपा मनुष्यसंपर्काद् विगतसहजभूतदेवरूपा पत्यानुकूल्येन नानारूपा वा मर्त्येषु अचरं तदानीं रात्रीः प्ररमयित्रीः चतस्रः शरदः अवसं न्यवसम् । तदानीं घृतस्य

स्तोकं सकृद् अह्नः आश्नाम् । तादेव तेनैव स्तोकेन अहम् इदं संप्रति तातृपाणा तृप्ता सती चरामि ॥ १६ ॥

तदा राजा उवाच । अन्तरिक्षप्रां स्वतेजसा अन्तरिक्षस्य पूरयित्रीं तया रजसः रञ्जकस्य उदकस्य विमानीं निर्मात्रीम् उर्वशीं वसिष्ठः समानानां मध्ये अतिशयेन वासयिता अहम् उप शिक्षामि वशं नयामि । सुकृतस्य शोभनकर्मणः रातिः दाता पुरूरवाः त्वा त्वाम् उप तिष्ठात् उपतिष्ठतु । मे हृदयं तप्यते अतो निवर्तस्व ॥ १७ ॥

हे ऐळ पुरूरवः त्वा त्वाम् इमे देवाः इति आहुः । मृत्युबन्धुः मृत्योः बन्धकः मृत्योर्बन्धुभूतो वा मृत्युवशम् अप्राप्नुवन् यथेम् यथा एतद् भवसि भविष्यसि । प्रजा प्रकर्षेण जायमानः त्वं ते तव संबन्धिनो यष्टव्यान् देवान् हविषा यजासि यजसि । स्वर्गे उ स्वर्ग एव त्वमपि मादयासे मादयसे अस्माभिः सह । इत्येवं सा पुरूरवसं प्रत्युवाच ॥ १८ ॥

---

अनया आगच्छन्ती सरमां दृष्ट्वा पणयो वदन्ति । सरमा सरणशीला एतन्नामिका देवशुनी किमिच्छन्ती किं प्रार्थयमाना सती इदम् अस्मदीयं स्थानं प्र आनट् प्राप्नोत् । पराचैः पराञ्चि पराङ्मुखानि आवृत्तिवर्जितानि यानि गमनानि तैः जगुरिः उद्गूर्णः । महता प्रयत्नेनापि गन्तुं न शक्येत इत्यर्थः । तादृशोऽयम् अध्वा दूरे हि विप्रकृष्टः खलु । यद्वा । पराचैः पराञ्चनैः जगुरिः अत्यर्थं गन्त्री पार्ष्णिभागम् अनालोकमाना सती इदं स्थानं प्राप्नोति । दूरेऽयम् अध्वा यदृच्छया गन्तुं न शक्यते । अतो वयम् एतां पृच्छामः । हे सरमे का कीदृशी अस्मेहितिः । कः अस्मासु अर्थहितिः । कः अस्मासु त्वदपेक्षितार्थो निहितः । यद्वा । अस्मासु कोऽर्थो गतः । आगच्छन्त्याः तव कीदृशी परितक्म्या रात्रिः आसीत् । यद्वा । तकतिर्गत्यर्थः । परितकनं परितो गमनं भ्रमणं वा कीदृशम् आसीत् । कथं च रसायाः शब्दायमानायाः अन्तरिक्षनद्याः योजनशतविस्तीर्णायाः पयांसि उदकानि अतरः तीर्णवती असि ॥ १ ॥

अनया तान् सरमा प्रत्युवाच । हे पणयः एतन्नामकाः असुराः इन्द्रस्य दूतीः अहम् इषिता तेनैव प्रेषिता सती चरामि युष्मदीयं स्थानम् आगच्छामि । किमर्थम् । वः युष्मदीयान् युष्मदीये पर्वते अधिष्ठापितान् महः महतः निधीन् बृहस्पतेः

गोनिधीन् इच्छन्ती कामयमाना सती चरामि । किंच अतिष्कदः अतिष्कन्दनात् अतिक्रमणात् जातेन भियसा भयेन तत् नदीजलं नः । पूजायां बहुवचनम् । माम् आवत् अरक्षत् । तथा तेन प्रकारेण रसायाः नद्याः पयांसि उदकानि अतरं तीर्णवती अस्मि ॥ २ ॥

पणीनां वाक्यम् । हे सरमे तव स्वामी इन्द्रः कीदृक् कियत्पराक्रमवान् । का दृशीका । तस्य कीदृशी दृष्टिः । दृष्टिरूपा सेना कियती । यस्य दूतीः दूती त्वम् इदम् अस्मदीयं स्थानं पराकात् अतिदूरात् असरः आगमः । इति ताम् उक्त्वा ते परस्परम् आहुः । एषा सरमा आ गच्छात् च आगच्छतु च । मित्रम् एन दधाम अनया मित्रभावं करवाम । अथ नः अस्माकं गवां गोपतिः स्वामी भवाति भवतु नहि एकस्या गोः किन्तु बहूनां गवां स्वामी भवतु ॥ ३ ॥

सरमा वदति । हे पणयः तम् इन्द्रं दभ्यं हन्तव्यम् इति न वेद न जानामि । कथम् । सः इन्द्रः दभत् सर्वान् जनान् दभति हिनस्त्येव । यस्य दूतीः दूती अहम् इदं युष्मदीयं स्थानं पराकात् अतिदूराद् देशात् असरं प्राप्ता अभूवम् । इन्द्रो हिंसितव्यो न भवति इत्यत्र युक्तिमाह । स्रवतः स्रवणं स्रवः तम् आचरन्ति ताः स्रवणशीलाः गभीराः गम्भीरा नद्यः तम् इन्द्रं न गूहन्ति न संवृण्वन्ति न आच्छादयन्ति । किंतु आविष्कुर्वन्ति । वयं यस्य महिम्ना समुद्रं प्रतिसरामः तस्मात् अहिंस्य इति एनं प्रकटीकुर्वन्ति । तस्माद् हे पणयः यूयम् इन्द्रेण तादृशपराक्रमेण हताः सन्तः शयध्वे ॥ ४ ॥

क्रुद्धाः पणयः प्रत्यूचुः । हे सुभगे शोभनसौभाग्यवति हे सरमे दिवः द्युलोकस्य अन्तान् पर्यन्तान् परि पतन्ती कुत्र गावः तिष्ठन्ति इति परितो गच्छन्ती त्वम् इमाः परिदृश्यमानाः याः गावः । सुव्यत्ययः । गाः ऐच्छः कामयसे ताः एनाः गाः ते त्वदीयः कः अयुध्वी अयुद्ध्वा अत्र सृजात् अस्मात् पर्वतात् अवसृजेत् विनिर्गमयेत् । उत अपि च अस्माकं तिग्मा तीक्ष्णानि आयुधा आयुधानि सन्ति । तस्माद् अस्माभिः युद्धम् अकृत्वा को वा गाः आहरति ॥ ५ ॥

सा तान् निराह । हे पणयः वः युष्माकं वचांसि पूर्वोक्तानि वचनानि असेन्या असेन्यानि सेनार्हाणि न भवन्ति । तथा तन्वः युष्मदीयानि शरीराणि अनिषव्या इष्वर्हाणि न सन्तु पराक्रमराहित्येन । यतः पापीः पापयुक्तानि खलु । किंच वः युष्मदीयः पन्थाः मार्गः एतवै गन्तुम् अधृष्टः असमर्थः अस्तु । तत्र हेतुम् आह । वः युष्मदीयान् उभया उभयविधान् पूर्वोक्तान् तन्वो देहान् बृहस्पतिः इन्द्रप्रेरितः न मृळात् न सुखयेत् । किन्तु बाधेत ॥ ६ ॥

ते पुनराहुः । हे सरमे अयं निधिः अस्मदीयः कोशः अद्रिबुध्नः अद्रिर्बंधको यस्य तादृशः । तथा आहूतैः गोभिः अश्वेभिः अश्वैश्च वसुभिः आत्मीयैर्धनैश्च न्यृष्टः नितरां प्राप्तो भवति । सुगोपाः सुष्ठु गोपायितारः ये पणयः ते असुराः तं निधिं रक्षन्ति पालयन्ति । रेकु । रेकृ शङ्कायाम् । औणादिक उप्रत्ययः । शङ्कितं गोभिः शब्दायमानं पदम् अस्माभिः पालितं स्थानम् अलकं व्यर्थमेव आ जगन्थ आगतवत्यसि ॥ ७ ॥

सरमा पुनः प्रत्युवाच । हे पणयः सोमशिताः सोमेन तीक्ष्णीकृताः सोमपानेन मत्ताः । तादृशाः नवग्वाः नवगतयः । यद्वा । अङ्गिरसां सत्रम् आसीनानां मध्ये केचन नवसु मासेषु उदतिष्ठन् ते नवग्वाः । अनेन दशग्वाः अपि उपलक्ष्यन्ते । उभयविधाः ते अङ्गिरसः ऋषयः । तेषां प्रथमः अयास्यः एतन्नामा च । ते एते इह युष्मदीये स्थाने आ गमन् आगच्छेयुः । आगत्य च ते गोनां गवाम् ऊर्वं तं समूहं वि भजन्त विभागं कुर्युः । अथ अनन्तरं पणयः यूयम् एतद् वचः पूर्वं यद् व्यर्थम् आगतासीति वाक्यम् अवोचत तद् वाक्यं तदा वमन् इत् वमन्तः परित्यजन्त एव भवथ ॥ ८ ॥

तया एवम् उक्ते सति पणयः प्रणयवाक्यम् आहुः । हे सरमे त्वं दैव्येन देवसंबन्धिना सहसा बलेन प्रबाधिता यथातथा बलपुरं प्राप्य तत्र स्थिताः गाः दृष्ट्वा पुनः आगच्छ इति तेन प्रपीडिता त्वम् एवं चेत् आजगन्थ आगतवती असि । चशब्दश्चेदर्थे । तर्हि त्वा त्वां स्वसारं भगिनीं कृणवै करवै । समूहापेक्षया एकवचनम् । त्वं तु पुनः मा गाः इन्द्रादीन् मा गच्छ । अपि तर्हि हे सुभगे सरमे ते त्वदीयानां गवां समूहं पर्वताद् अपगमय्य भजाम । त्वं च वयं च विभजाम । विभागं करवाम इत्यर्थः ॥ ९ ॥

सा तान् प्रत्याचष्टे । हे पणयः अहं भ्रातृत्वं न वेद न जानामि । तथा स्वसृत्वं च नो वेद नैव जानामि । के जानन्ति तान् आह । इन्द्रः घोराः शत्रूणां भयंकराः अङ्गिरसश्च विदुः जानन्ति । किंच अस्मात् स्थानात् अहं

यत् यदा आयम् इन्द्रादीन् प्राप्नवं तदा मे मदीयाः गोकामाः युष्माभिः अपहृताः गाः कामयमानाः इन्द्रादयः अच्छदयन् युष्मदीयं स्थानम् आच्छादयन्ति । अतः कारणाद् हे पणयः वरीयः उरुतरं गवां वृन्दं परित्यज्य अप इत अन्यत् स्थानं प्रति गच्छत । यद्वा । वरीयः प्रभूतम् अतिदूरं देशं गच्छत ॥ १० ॥

हे पणयः यूयं वरीयः उरुतरं दूरं दूरदेशम् इत गच्छत । युष्माभिः अपहृताः गावः ऋतेन सत्येन मिनतीः मिनत्यः द्वारस्य पिधायकं पर्वतं हिंसन्त्यः विदारयन्त्यः उत् यन्तु तस्माद् उद्गच्छन्तु । यद्वा । मिनतीः । व्यत्ययेन कर्मणि शतृ । मीयमाना युष्माभिर्बाध्यमानाः ता गावः । सुब्व्यत्ययः । गाः ऋतेन स्तुतिभिर्गन्तव्येन इन्द्रेण सहायेन बृहस्पत्यादयः उद्यन्तु पर्वताद् उद्गमयन्तु । निगूढाः नितरां स्थापिताः याः गाः बृहस्पतिः अविन्दत् लप्स्यते तथा सोमः तदभिषवकारिणः ग्रावाणः च विप्राः मेधाविनः ऋषयः अङ्गिरसः च लप्स्यन्ते ॥ ११ ॥

---

भिक्षुः प्रथमं व्यतिरेकमुखेन अन्नदानं प्रशंसति । देवाः वै देवाः खलु सर्वेषां क्षुधं न ददुः न प्रायच्छन् । किंतु वधम् इत् वधमेव दत्तवन्तः । एतादृशीं वधरूपां क्षुधम् अन्नदानेन यः शमयति स दाता खलु । उ इति पूरणः । यः अदत्वा भुङ्क्ते तम् आशितं भुञ्जानं पुरुषम् अपि मृत्यवः मरणानि उप गच्छन्ति समीपे यान्ति । क्षुधार्तानां भोक्तृणां च मरणं समानम् । तथापि किं दानेन धननाशरूपेण । अत आह । उतो । उतशब्दः अप्यर्थे । पृणतः प्रयच्छतः पुरुषस्य रयिः धनं नोप दस्यति न उपक्षीयते । दानप्रसङ्गेन अदातारं दूषयति । अपृणन् अप्रयच्छन् पुरुषस्तु मर्डितारम् आत्मनः सुखयितारं न विन्दते न कुत्रापि लभते । इह बन्धवः अप्रदानात् न सुखयन्ति देवाः अपि हविष्प्रदानाभावात् ।। १ ।।

यः पुरुषः स्वयम् अन्नवान् सन् अपि आध्राय । आधार्यते असौ इति आध्रः दुर्बलः तस्मै । पित्वः पितून् अन्नानि चकमानाय कामयमानाय रफिताय दारिद्र्येण हिंसिताय उपजग्मुषे गृहं प्रत्यागताय अतिशयं मनः आत्मीयम् अन्तःकरणम् अदाने स्थिरं कृणुते कुरुते मनःस्थैर्यकरणेन तं क्लेशयति इत्यर्थः । न केवलं क्लेशकरणम् अपि तु

पुरा तस्य पुरस्तादेव सेवते भोगान् । सः अपि मर्डितारम् आत्मनः सुखयितारं न विन्दते ।। २ ।।

अन्वयमुखेन प्रशंसति । स इत् स एव भोजः दाता खलु यो गृहवे प्रतिग्रहीत्रे अन्नकामाय अन्नं याचमानाय चरते गृहम् आगतवते कृशाय दारिद्र्येण एतादृशाय अतिथये अन्नं ददाति प्रयच्छति । यामहूतौ । यामाः गन्तारो देवाः ते आहूयन्ते अत्र इति यामहूतिः यज्ञः तस्मिन् । अस्मै दात्रे फलम् अरम् अलं पर्याप्तं भवति । कामप्रदानं भवति इत्यर्थः । उत अपि च अपरीषु अन्यासु शात्रवीषु सेनासु सखायं कृणुते । तद्वद् आचरति इत्यर्थः । तस्य सर्वे सखाय एव न शत्रव इत्यर्थः ।। ३ ।।

व्यतिरेकेण निन्दाम् आह । सः पुरुषः सखा न भवति यः पुरुषः सचाभुवे सर्वदा सहभवनशीलाय सचमानाय सेवमानाय उपसर्जनीभूताय सख्ये सखिजनाय पित्वः पितून् अन्नानि न ददाति न प्रयच्छति स सुहृद् न भवति इत्यर्थः । अस्मात् अदातुः सख्युः सः अप प्रेयात् अपगच्छेत् यदि एनं परित्यज्य गच्छेत् तर्हि तद् ओकः निवासः सदनं न अस्ति न भवति । सदनं हि बन्धुभिः परिवृतम् । स गतः पुरुषः पृणन्तम् अन्नादिकं प्रयच्छन्तम् अन्यम् अरणं चित् अर्यं स्वामिनम् एव इच्छेत् काममेत ।। ४ ।।

धनवन्तं पुरुषं दाने प्रेरयति । तव्यान् तवीयान् धनैः अतिशयेन प्रवृद्धः पुरुषः नाधमानाय याचमानाय अतिथये पृणीयात् इत् धनानि दद्यादेव यदि दद्यात् द्राघीयांसम् दीर्घतमं पन्थां पन्थानं सुकृतमार्गम् अनु पश्येत पश्येत् ।

व्यत्ययेन आत्मनेपदम् । तत्र कारणम् आह । रायः धनानि ओ हि । आ उ आ वर्तन्ते एव खलु । एकत्र न तिष्ठन्ति इत्यर्थः । तत्र दृष्टान्तः । रथ्येव यथा रथ्यानि । रथसंबन्धीनि चक्रा चक्राणि उपर्यधोभावेन आवर्तन्ते तद्वत् आवृत्तिमेव दर्शयति । अन्यम् अन्यं पुरुषं धनानि उप तिष्ठन्ति उपतिष्ठन्ते । समवेतानि भवन्ति । तस्माद् धनानि देयानि इति भावः ।। ५ ।।

अदातारं दूषयति । अप्रचेताः अप्रकृष्टज्ञानः दाने चेतो मनो यस्य न भवति सः मोघं व्यर्थमेव अन्नं विन्दते लभते । इदं सत्यं यथार्थमेव इति ब्रवीमि । ऋषिरहं वदामि । न केवलं व्यर्थं किन्तु तस्य पुरुषस्य सः वध इत् वध एव अन्नं परामृशतः । तच्छब्दस्य वधसामानाधिकरण्यात् पुंलिङ्गता । अथवा स निरर्थको वध एव यः पुरुषः अर्यमणम् । उपलक्षणम् इदम् । सर्वान् देवान् अर्यमादीन् न पुष्यति हविष्प्रदानेन न पोषयति नो नापि सखायं समानख्यानम् अभ्यागतम् अतिथिं मित्रवर्गं च न पोषयति । अत एव केवलादी केवलम् असाक्षिकम् अन्नं भुञ्जानः स केवलाघो भवति । केवलपापवान् भवति । अघमेव केवलं तस्य शिष्यते । नैहिकं नामुष्मिकम् इति। तस्माद् यथाकथञ्चिद् दातव्यम् इत्यभिप्रायः ।। ६ ।।

कृषन् कृषिं कुर्वन् फालः (=हलम्) आशितं कर्षकं भोक्तारं कृणोति करोति । तथा अध्वानं मार्गं यन् गच्छन् पुरुषः चरित्रैः आत्मीयैः गमनैः अप वृङ्क्ते स्वामिनो धनम् आवर्जयति । वदन् शास्त्रार्थं ब्रुवाणः ब्रह्मा ब्राह्मणः अवदतः

शास्त्रार्थम् अब्रुवाणात् जनात् वनीयान् संभक्ततमः प्रियकरो भवति । ते यथा स्वकर्मणि प्रवर्तमानाः परेषाम् उपकारकाः तथा पृणन् दाता पुरुषः अपृणन्तम् अदातारं जनम् अभि अभिलक्ष्य आपिः स्यात् बन्धुर्भवेत् ॥ ७ ॥

अत्र पादशब्दो भागवचनः । एकपात् एकपादधनः पुरुषः द्विपदः द्विगुणधनस्य मार्गं भूयः भूयसा कालेन वि चक्रमे विविधं गच्छति । तथा द्विपात् पुरुषः त्रिपादं त्रिभागधनं पुरुषं पश्चात् अभ्येति अभिगच्छति । चतुष्पात् चतुर्भागधनस्तु द्विपदाम् । बहुवचनात् एकपादादयः उपलभ्यन्ते । एकपादधनादीनां पङ्क्तीः अभिस्वरे अभिगमने संपश्यन् सम्यक् ईक्षमाणः सन् उपतिष्ठमानः एति गच्छति । अन्योन्यापेक्षया सर्वे उत्तमाधमाः । तस्मात् त्वम् अहमेव धनवान् इति न मन्येः किंतु अतिथिभ्यो धनानि ददस्व इत्यर्थः ॥ ८ ॥

अतिथिभ्यो धनम् अप्रयच्छन्नपि मम भ्राता दास्यति इति चेत् तत्र हेतुम् आह । समौ चिद् हस्तौ समावपि समं समानं न विविष्टः कार्यं न व्याप्नुतः । तथा सं मातरा वत्सस्य मातरौ धेनू समे अपि समं समानं पयः न दुहाते । यमयोश्चित् सहजातयोः पुत्रयोरपि समा समानि वीर्याणि न सन्ति । तस्मात् ज्ञाती चित् एकस्मिन् कुले सन्तौ जातौ अपि समं न पृणीतः न प्रयच्छतः । तस्मात् यस्य धनम् अस्ति स एव दद्यात् इत्यर्थः ॥ ९ ॥

---

हिरण्यगर्भः हिरण्मयस्य अण्डस्य गर्भभूतः प्रजापा
हिरण्यगर्भः । यद्वा । हिरण्मयः अण्डः गर्भवद् यस्य उ
वर्तते सोऽसौ सूत्रात्मा हिरण्यगर्भ इत्युच्यते । अग्रे प्रपञ्च
त्पत्तेः प्राक् समवर्तत । मायाध्यक्षात् सिसृक्षोः परमात्मन
समजायत । यद्यपि परमात्मैव हिरण्यगर्भः तथापि तदुपा-
भूतानां ब्रह्मणः उत्पत्तेः तदुपहितः अपि उत्पन्न इत्युच्यते
स च जातः जातमात्र एव एकः अद्वितीयः सन् भूतस
विकारजातस्य ब्रह्माण्डादेः सर्वस्य जगतः पतिः ईश्वर
आसीत् । न केवलं पतिरासीदेव अपि तर्हि सः हिरण्यगर्भ
पृथिवीं विस्तीर्णां द्यां दिवम् उत अपि च इमाम् अस्माभि-
र्दृश्यमानां पुरोवर्तिनीम् इमां भूमिम् । यद्वा पृथिवी इत्यन्त-
रिक्षनाम । अन्तरिक्षं दिवं भूमिं च दाधार धारयति ।
कस्मै । अत्र किंशब्दः अनिर्ज्ञातस्वरूपत्वात् प्रजापतौ वर्तते ।
यद्वा सृष्ट्यर्थं कामयते इति कः । यद्वा कं सुखं तद्रूपत्वात्
क इत्युच्यते । अथवा इन्द्रेण पृष्टः प्रजापतिः मदीयं महत्त्वं
तुभ्यं प्रदाय अहं कः कीदृशः स्याम् इत्युक्तवान् । स इन्द्रः
प्रत्यूचे यदि इदं ब्रवीषि अहं कः स्याम् इति तदेव त्वं भवेति ।
अतः कारणात् क इति प्रजापतिराख्यायते । इन्द्रो वै वृत्रं
हत्वा सर्वा विजितीर्विजित्य अब्रवीत् (ऐ ब्रा ३. २१)
इत्यादिकं ब्राह्मणम् अत्र अनुसंधेयम् । यदासौ किंशब्दः तदा

सर्वनामत्वात् स्मैभावः सिद्धः । यदा तु यौगिकः तदा व्यत्ययेनेति द्रष्टव्यम् । कस्मै कं प्रजापतिं देवाय देवं दानादिगुणयुक्तं हविषा प्राजापत्यस्य पशोः वपारूपेण एककपालात्मकेन पुरोडाशेन वा विधेम वयम् ऋत्विजः परिचरेम । विधतिः परिचरणकर्मा । क्रियाग्रहणं कर्तव्यम् इति कर्मणः संप्रदानत्वाच् चतुर्थी ॥ १ ॥

\ यः प्रजापतिः आत्मदाः आत्मनां दाता । आत्मानो हि सर्वे तस्मात् परमात्मन उत्पद्यन्ते । यथा अग्नेः सकाशात् विस्फुलिङ्गाः जायन्ते तद्वत् \ यद्वा आत्मनां शोधयिता । दैप् शोधने । बलदाः बलस्य च दाता शोधयिता वा । यस्य च प्रशिषं प्रकृष्टं शासनम् आज्ञां विश्वे सर्वे प्राणिनः उपासते प्रार्थयन्ते सेवन्ते वा । तथा देवाः अपि यस्य प्रशासनम् उपासते । अपि च अमृतम् अमृतत्वम् । भावप्रधानो निर्देशः । यद्वा । अमृतम् ।\मरणं नास्ति अस्मिन् इति अमृतं सुधा ।\ तदपि यस्य प्रजापतेः छाया छायेव *वति भवति । मृत्युः यमश्च प्राणापहारी छायेव भवति । तस्मै कस्मै देवाय इत्यादि समानं पूर्वेण ॥ २ ॥

यः हिरण्यगर्भः प्राणतः प्रश्वसतः निमिषितः अक्षिपक्ष्मचलनं कुर्वतः जगतः जङ्गमस्य प्राणिजातस्य महित्वा महत्त्वेन माहात्म्येन एक इत् अद्वितीय एव सन् राजा बभूव ईश्वरो भवति । अस्य परिदृश्यमानस्य द्विपदः पादद्वययुक्तस्य मनुष्यादेः

* वति – शब्दः मूले नास्ति । द्वितीय – 'यस्य' – शब्दस्य स्थाने स श्रीसायणाचार्येण पठितो भवेत् इति संभाव्यते ॥

चतुष्पदः गवाश्वादेश्च यः प्रजापतिः ईशे ईष्टे । ईदृशो यः प्रजापतिः तस्मै कस्मै इत्यादि समानं पूर्वेण ॥ ३ ॥

हिमाः अस्मिन् सन्तीति हिमवान् । तेन बहुवचनान्तेन सर्वे पर्वता लक्ष्यन्ते । हिमवन्तः हिमवदुपलक्षिताः इमे दृश्यमानाः सर्वे पर्वताः यस्य प्रजापतेः महित्वा महत्त्वं माहात्म्यम् ऐश्वर्यम् इति आहुः । तेन सृष्टत्वात् तद्रूपेण अवस्थानात् । तथा रसया । रसो जलम् । तद्वती रसा नदी । जातौ एकवचनम् । रसाभिः नदीभिः सह समुद्रम् । पूर्ववद् एकवचनम् । सर्वान् समुद्रान्. यस्य महाभाग्यम् इति आहुः कथयन्ति सृष्टयभिज्ञाः । यस्य च इमाः प्रदिशः प्राच्यारभ्मा आग्नेय्याद्याः कोणदिशः ईशितव्याः । तथा बाहू । वचनव्यत्ययः । बाहवो भुजाः । भुजवत् प्राधान्ययुक्ताः प्रदिशश्च यस्य स्वभूताः । तस्मै कस्मै इत्यादि समानं पूर्वेण ॥ ४ ॥

येन प्रजापतिना द्यौः अन्तरिक्षम् उग्रा उद्गूर्णं पृथिवी भूमिः च दृळ्हा येन स्थिरीकृता । स्वः स्वर्गश्च येन स्तभितं स्तब्धं कृतम् । यथा अधो न पतति तथा उपरि अवस्थापितम् इत्यर्थः । तथा नाकः आदित्यश्च येन अन्तरिक्षे स्तभितः । यश्च अन्तरिक्षे रजसः उदकस्य विमानः निर्माता । तस्मै कस्मै इत्यादि समानं पूर्वेण ॥ ५ ॥

क्रन्दितवान् रोदितवान् अनयोः प्रजापतिः इति क्रन्दसी द्यावापृथिव्यौ । श्रूयते हि यदरोदीत् तद् अनयो रोदस्त्वम् (तै. ब्रा. २. २. ९. ४) इति । ते अवसा रक्षणेन हेतुना लोकस्य रक्षणार्थं तस्तभाने प्रजापतिना सृष्टे लब्धस्थैर्ये सत्यौ यं प्रजापतिं मनसा बुद्धया अभ्यैक्षेताम् आवयोः महत्त्वम्

अनेन इत्यभ्यपश्येताम् । कीदृश्यौ द्यावापृथिव्यौ । रेजमाने राजमाने दीप्यमाने । आकारस्य व्यत्ययेन एत्वम् । यत्राधि यस्मिन् आधारभूते प्रजापतौ सूरः सूर्यः उदितः उदयं प्राप्तः सन् विभाति प्रकाशते । तस्मै कस्मै इत्यादि समानं पूर्वेण ।। ६ ।।

बृहतीः बृहत्यः महत्यः। अग्निम् । उपलक्षणम् एतत् । तदर्थं गर्भं वियदादि भूतजातं जनयन्तीः जनयन्त्यः । तदर्थं गर्भं हिरण्मयाण्डस्य गर्भभूतं प्रजापतिं दधानाः धारयन्त्यः । आपो ह आप एव विश्वम् आयन् सर्वं जगत् व्याप्नुवन् । यत् यस्मात् ततः तस्माद् हेतोः देवानां देवादीनां सर्वेषां प्राणिनाम् असुः प्राणभूतः एकः प्रजापतिः समवर्तत समजायत । यद्वा । यत् यं गर्भं दधानाः आपः विश्वात्मना अवस्थिताः ततो गर्भभूतात् प्रजापतेः देवादीनां प्राणात्मको वायुः अजायत । अथवा यत् । लिङ्गवचनयोर्व्यत्ययः । उक्तलक्षणा या आपः विश्वमावृत्य स्थिताः ततः ताभ्यः अद्भ्यः सकाशात् एकः अद्वितीयः असुः प्राणात्मकः प्रजापतिः समवर्तत निश्चक्राम । तस्मै कस्मै इत्यादि समानं पूर्वेण ।। ७ ।।

यज्ञं यज्ञोपलक्षितं विकारजातं जनयन्तीः उत्पादयन्तीः तदर्थं दक्षं प्रपञ्चात्मना वर्धिष्णुं प्रजापतिम् आत्मनि दधानाः धारयित्रीः आपः । व्यत्ययेन प्रथमा । अपः प्रलयकालीनाः महिना महिम्ना । छान्दसो मलोपः । स्वमाहात्म्येन यश्चित् यश्च प्रजापतिः पर्यपश्यत् परितो दृष्टवान् । यश्च देवेषु अधि देवेषु मध्ये देवः तेषामपि

ईश्वरः सन् एकः अद्वितीयः आसीत् भवति । अस्तेश्छान्दसो लङ् । तस्मै कस्मै इत्यादि समानं पूर्वेण ॥ ८ ॥

सः प्रजापतिः नः अस्मान् मा हिंसीत् मा वाधताम् । यः पृथिव्याः भूमेः जनिता जनयिता स्रष्टा । यो वा यश्च सत्यधर्मा सत्यम् अवितथं धर्म जगतो धारणं यस्य सः । तादृशः प्रजापतिः दिवम् अन्तरिक्षोपलक्षितान् सर्वान् लोकान् जजान जनयामास । यश्च बृहतीः महतीः चन्द्राः आह्लादनीः अपः उदकानि जजान जनयामास । तस्मै कस्मै इत्यादि समानं पूर्वेण ॥ ९ ॥

हे प्रजापते त्वत् त्वत्तः अन्यः कश्चित् एतानि इदानीं वर्तमानानि विश्वा विश्वानि सर्वाणि जातानि प्रथमविकारभाञ्जि ता तानि सर्वाणि भूतजातानि न परि बभूव न परिगृह्णाति न व्याप्नोति । त्वमेव एतानि परिगृह्य स्रष्टुं शक्नोषि इति भावः । परिपूर्वो भवतिः परिग्रहार्थः । वयं च यत्कामाः यत् फलं कामयमानाः ते तुभ्यं जुहुमः हवींषि प्रयच्छामः तत् फलं नः अस्माकम् अस्तु भवतु । तथा वयं च रयीणां धनानां पतयः ईश्वराः स्याम भवेम ॥ १० ॥



अहं सूक्तस्य द्रष्ट्री वाग् आम्भृणी यद् ब्रह्म जगत्कारणं तद्रूपा भवन्ती रुद्रेभिः रुद्रैः एकादशभिः । इत्थंभावे तृतीया । तदात्मना चरामि । एवं वसुभिः इत्यादौ तत्तदात्मना चरामीति योज्यम् । तथा मित्रावरुणा मित्रं च वरुणं च । उभा उभौ अहम् एव ब्रह्मीभूता बिभर्मि धारयामि । इन्द्राग्नी अपि अहम् एव धारयामि । उभा उभौ अश्विना अश्विनौ अपि अहम् एव धारयामि ॥ १ ॥

आहनसम् आहन्तव्यम् अभिषोतव्यं सोमम् । यद्वा । शत्रूणाम् आहन्तारं दिवि वर्तमानं देवतात्मानं सोमम् । अहमेव बिभर्मि । तथा त्वष्टारम् उत अपि च पूषणं भगं च अहमेव बिभर्मि । तथा हविष्मते हविर्भिः युक्ताय सुप्राव्ये शोभनं हविः देवानां प्रापयित्रे तर्पयित्रे । सुन्वते सोमाभिषवं कुर्वते । ईदृशाय यजमानाय द्रविणं धनं यागफलरूपम् अहमेव दधामि धारयामि ॥ २ ॥

अहं राष्ट्री सर्वस्य जगतः ईश्वरी । तथा वसूनां धनानां संगमनी संगमयित्री उपासकानां प्रापयित्री । चिकितुषी यत् साक्षात्कर्तव्यं परं ब्रह्म तज् ज्ञातवती स्वात्मतया साक्षात्कृतवती । अत एव यज्ञियानां यज्ञार्हाणां प्रथमा मुख्या । या एवंगुणविशिष्टा अहं तां मां भूरिस्थात्रां बहुभावेन प्रपञ्चात्मना अवतिष्ठमानां भूरि भूरीणि बहूनि

भूतजातानि आवेशयन्तीं जीवभावेन आत्मानं प्रवेशयन्तीम् ईदृशीं मां पुरुत्रा बहुषु देशेषु व्यदधुः देवाः विदधति कुर्वन्ति । उक्तप्रकारेण वैश्वरूप्येण-अवस्थानात् । यद् यत् कुर्वन्ति तत् सर्वं मामेव कुर्वन्ति इत्यर्थः ॥ ३ ॥

यः अन्नम् अत्ति सः भोक्तृशक्तिरूपया मया एव अन्नम् अत्ति । यश्च विपश्यति । आलोकयति इत्यर्थः । यश्च प्राणिति श्वासोच्छ्वासरूपं व्यापारं करोति सोऽपि मयैव । यश्च उक्तं शृणोति ॥ यः ईदृशीम् अन्तर्यामिरूपेण स्थितां मां न जानन्ति ते अमन्तवः अमन्यमानाः अजानन्तः उप क्षियन्ति उपक्षीणाः संसारेण हीनाः भवन्ति । हे श्रुत विश्रुत सखे श्रुधि मया वक्ष्यमाणं शृणु । किं तत् श्रोतव्यम् । श्रद्धिवम् । श्रद्धिः श्रद्धा तया युक्तम् । श्रद्धायत्नेन लभ्यम् इत्यर्थः । मत्वर्थीयो वः । ईदृशं ब्रह्मात्मकं वस्तु ते तुभ्यं वदामि उपदिशामि ॥ ४ ॥

अहं स्वयम् एव इदं वस्तु ब्रह्मात्मकं वदामि उपदिशामि । देवेभिः देवैः इन्द्रादिभिः अपि जुष्टं सेवितम् । उत अपि च मानुषेभिः मनुष्यैः अपि जुष्टम् । ईदग्वस्त्वात्मिका अहं यं कामये यं पुरुषं रक्षितुम् अहं वाञ्छामि तंतं पुरुषम् उग्रं कृणोमि सर्वेभ्यः अधिकं करोमि । तम् एव ब्रह्माणं स्रष्टारं करोमि । तम् एव ऋषिम् अतीन्द्रियार्थदर्शिनं करोमि । तम् एव सुमेधां शोभनप्रज्ञं च करोमि ॥ ५ ॥

पुरा त्रिपुरविजयसमये रुद्राय रुद्रस्य । षष्ठ्यर्थे चतुर्थी । महादेवस्य धनुः चापम् अहम् आ तनोमि ज्यया आ ततं करोमि । किमर्थम् । ब्रह्मद्विषे ब्राह्मणानां

द्वेष्टारं शरवे शरुं हिंसकं त्रिपुरनिवासिनम् असुरं हन्तवै हन्तुं हिंसितुम् । क्रियाग्रहणं कर्तव्यम् इति कर्मणः संप्रदानत्वात् चतुर्थी । उ-शब्दः पूरकः । अहम् एव समदम् । समानं माद्यन्ति अस्मिन् इति समत् संग्रामः । स्तोतृजनार्थं शत्रुभिः सह संग्रामम् अहम् एव कृणोमि करोमि । तथा द्यावापृथिवी दिवं च पृथिवीं च अन्तर्यामितया अहम् एव आ विवेश प्रविष्टवती ॥ ६ ॥

द्यौः पिता (तै. ब्रा. ३. ७. ५. ४) इति श्रुतेः पिता द्यौः । पितरं दिवम् अहं सुवे प्रसुवे जनयामि । कुत्र इति तद् आह । अस्य परमात्मनः मूर्धन् मूर्धनि उपरि । कारणभूते तस्मिन् हि वियदादिकार्यजातं सर्वं वर्तते तन्तुषु पट इव । मम च योनिः कारणं समुद्रे । समुद्द्रवन्ति अस्मात् भूतजातानि इति समुद्रः परमात्मा । तस्मिन् अप्सु व्यापनशीलासु धीवृत्तिषु अन्तः मध्ये यद् ब्रह्म चैतन्यं तत् मम कारणम् इत्यर्थः । यतः ईदग्भूता अहम् अस्मि ततः हेतोः विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि अनु प्रविश्य वि तिष्ठे विविधं व्याप्य तिष्ठामि । उत अपि च अमूं द्यां विप्रकृष्टदेशे अवस्थितं स्वर्गलोकम् । उपलक्षणमेतत् एतदुपक्षितं कृत्स्नं विकारजातं वर्ष्मणा कारणभूतेन मायात्मकेन मदीयेन देहेन उप स्पृशामि ॥ यद्वा । अस्य भूलोकस्य मूर्धन् मूर्धनि उपरि अहं पितरम् आकाशं सुवे । समुद्रे जलधौ अप्सु उदकेषु अन्तः मध्ये मम योनिः कारणभूतः अम्भृणाख्यः ऋषिः वर्तते । यद्वा । समुद्रे अन्तरिक्षे अप्सु अम्मयेषु देवशरीरेषु मम कारणभूतं ब्रह्म चैतन्यं वर्तते ।

ततोऽहं कारणात्मिका सती सर्वाणि भुवनानि व्याप्नोमि । अन्यत् समानम् ॥ ७ ॥

विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि कार्याणि आरभमाणा कारणरूपेण उत्पादयन्ती अहम् एव परेण अनधिष्ठिता स्वयम् एव प्र वामि प्रवर्ते । वातइव । यथा वातः परेण अप्रेरितः सन् स्वेच्छयैव प्रवाति तद्वत् । उक्तं सर्वं निगमयति । परो दिवा । परः इति सकारान्तं परस्तादित्यर्थे वर्तते यथा अध इत्यधस्तादर्थे । तद्योगे च तृतीया सर्वत्र दृश्यते । दिवः आकाशस्य परस्तात् । एना पृथिव्या अस्याः पृथिव्याः परः परस्तात् । द्यावापृथिव्योः उपादानम् उपलक्षणम् । एतदुपलक्षितात् सर्वस्मात् विकारजातात् परस्ताद् वर्तमाना असङ्गा उदासीनकूटस्थब्रह्मचैतन्यरूपा अहं महिना महिम्ना एतावती संबभूव । एतत्–शब्देन उक्तं सर्वं परामृश्यते । एतत् परिमाणम् अस्याः इति एतावती । सर्वजगदात्मना अहं संभूतास्मि ॥८॥



आयती आगच्छती अक्षभिः अक्षिस्थानीयैः प्रकाशमानैः नक्षत्रैः । यद्वा अक्षभिः अञ्जकैः तेजोभिः । पुरुत्रा बहुषु देशेषु देवी देवनशीला रात्री इयं रात्रिदेवता व्यख्यत् विचष्टे विशेषेण पश्यति । अपि च एषा विश्वाः सर्वाः श्रियः शोभाः अधि अधित अधिधारयति ॥ १ ॥

अमर्त्या मरणरहिता देवी देवनशीला रात्रिः उरु विस्तीर्णम् अन्तरिक्षम् आ अप्राः । प्रथमतः तमसा आपूरयति । तथा निवतः नीचीनान् लतागुल्मादीन् उद्वतः उत्थितान् वृक्षादींश्च स्वकीयेन तेजसा आवृणोति । तदनन्तरं तत् तमः अन्धकारं ज्योतिषा ग्रहनक्षत्रादिरूपेण तेजसा बाधते पीडयति ॥ २ ॥

आयती आगच्छन्ती देवी देवनशीला रात्रिः स्वसारं भगिनीम् उपसं निः अकृत निष्करोति प्रकाशेन संस्करोति । तस्याम् उपसि जातायां नैशं तमः अपेत् ह्रासते अप एव गच्छति ॥ ३ ॥

अद्य अस्मिन् काले नः अस्माकं सा रात्रिदेवता प्रसीदतु । यस्याः रात्रेः यामन् यामनि प्राप्तौ सत्यां वयं नि अविक्ष्महि निविशामहे सुखेन गृहे आस्महे । तत्र दृष्टान्तः । वयः पक्षिणः वृक्षे न यथा वृक्षे नीडाश्रये वसति रात्रौ निवासं कुर्वन्ति तथा निवसामः इत्यर्थः ॥ ४ ॥

ग्रामासः ग्रामाः । अत्र ग्रामशब्दः जनसमूहे वर्तते यथा ग्रामः आगतः इति । सर्वे जनाः नि अविक्षत । तस्यां रात्रौ आगतायां निविशन्ते । शेरते । तथा पद्वन्तः पादयुक्ताः गवाश्वादयश्च निविशन्ते । तथा पक्षिणः पक्षोपेताश्च निविशन्ते । अर्थिनः । अर्थैरर्थो गमनम् । शीघ्रगमनयुक्ताः । श्येनासश्चित् श्येनाः अपि तस्यां रात्र्यां निविशन्ते । एषा रात्रिः सर्वाणि भूतजातानि अहनि संचारेण श्रान्तानि स्वयम् आगत्य सुखयति इत्यर्थः ॥ ५ ॥

हे ऊर्म्ये । रात्रिनाम एतत् । रात्रे वृक्यं वृकस्य स्त्रियं वृकं च अस्मान् हिंसन्तं यवय अस्मत्तः पृथक्कुरु । अस्मान् बाधितुं यथा न प्राप्नोति तथा । स्तेनं तस्करं च यवय अस्मत्तः वियोजय । अथ अनन्तरं नः अस्माकं सुतरा सुखेन तरणीया क्षेमकरी भव ॥ ६ ॥

पेपिशत् भृशं पिंशत् सर्ववस्तुषु आश्लिष्टं तमः अन्धकारं कृष्णं कृष्णवर्णं व्यक्तं विशेषेण स्वभासा सर्वस्य अञ्जकं स्पष्टरूपं वा ईदृशं नैशं तमः माम् उप अस्थित उपागच्छत् । हे उषः उषोदेवते त्वम् ऋणेव ऋणानि इव तत् तमो यातय अपगमय । स्तोतॄणाम् ऋणानि यथा धनप्रदानेन अपाकरोषि तथा तमोऽपि अपसारय इत्यर्थः ॥ ७ ॥

हे रात्रि रात्रिदेवते ते त्वां गाइव पयसो दोग्ध्रीः धेनूः इव उपेत्य आ अकरम् स्तुतिभिः अभिमुखीकरोमि । दिवः दुहितः द्योतमानस्य सूर्यस्य पुत्रि । यद्वा दिवसस्य तनये । त्वत्प्रसादात् जिग्युषे शत्रून् जिग्युषः मम स्तोमं न स्तोत्रम् इव हविः अपि वृणीष्व त्वं भजस्व ॥ ८ ॥

---

म. १०. सू. १२९

अस्मिन् सूक्ते सृष्टेः प्रागवस्था निरस्तसमस्तप्रपञ्चा या प्रलयावस्था सा निरूप्यते ॥

तदानीं प्रलयदशायाम् अवस्थितं यद् अस्य जगतो मूलकारणं तत् असत् शशविषाणवत् निरुपाख्यं न आसीत्। नहि तादृशात् कारणाद् अस्य सतो जगतः उत्पत्तिः संभवति । तथा नो सत् नैव सदात्मवत् सत्त्वेन निर्वाच्यम् आसीत् । उभयविलक्षणम् अनिर्वाच्यम् एव आसीत् इत्यर्थः । नासीद् रजः । लोका: रजांसि उच्यन्ते ( नि. ४. १९ ) इति यास्कः । अत्र च सामान्यापेक्षम् एकवचनम् । व्योम्नः वक्ष्यमाणत्वात् तस्य अधस्तनाः पातालादयः पृथिव्यन्ताः न आसन् इत्यर्थः । तथा व्योम अन्तरिक्षं तदपि नो नैव आसीत् । परः इति सकारान्तं परस्तादित्यर्थे वर्तते । परः व्योम्नः परस्ताद् उपरिदेशे द्युलोकप्रभृति सत्यलोकान्तं यद् अस्ति तदपि न आसीत् इत्यर्थः । अनेन चतुर्दशभुवनगर्भं ब्रह्माण्डं स्वरूपेण निषिद्धं भवति । किम् आवरीवः इति । किम् आवरणीय तत्त्वम् आवरकभूतजातम् आवरीवः अत्यन्तम् आवृणुयात् । आवार्याभावात् तदावरकम् अपि नासीत् इत्यर्थः । यद्वा किम् इति प्रथमैव । किं तत्त्वम् आवरकम् आवृणुयात् । आव्रियमाणवत् तदपि स्वरूपेण नासीद् इत्यर्थः । आवण्वत् तत् तत्त्वं कुह कुत्र देशे अवस्थाय आवृणोति । आधारभूतः तादृशो देशोऽपि नासीद् इत्यर्थः । कस्य शर्मन् कस्य वा भोक्तुः जीवस्य शर्मणि सुखदुःखसाक्षात्कार-

लक्षणे भोगे निमित्तभूते सति तद् आवरकं तत्त्वम् आवृणुयात् । जीवानाम् उपभोगार्था हि सृष्टिः । तस्यां हि सत्यां ब्रह्माण्डस्य भूतैः आवरणम् । प्रलयदशायां च भोक्तारो जीवाः उपाधिविलयात् प्रलीनाः भवन्ति इति कस्य चित् कश्चिदपि भोक्ता न संभवति इति आवरणस्य निमित्ताभावात् अपि तत् न घटते । एतेन भोग्यप्रपञ्चवत् भोक्तृप्रपञ्चोऽपि तदानीं नासीद् इत्युक्तं भवति । यद्यपि सावरणस्य ब्रह्माण्डस्य निषेधेन तदन्तर्गतम् अप्सत्त्वमपि निराकृतं तथापि आपो वा इदम् अग्रे सलिलमासीत् (तै. सं. ७. १. ५. १) इति श्रुत्या कश्चिद् अपां सद्भावम् आशङ्केत । तं प्रत्याचष्टे । अम्भः किम् आसीद् इति । गहनं दुष्प्रवेशं गभीरं दुरवस्थानम् अत्यगाधम् ईदृशम् अम्भः किम् आसीत् । तदपि नैव आसीद् इत्यर्थः । श्रुतिस्तु अवान्तरप्रलयविषया ॥ १ ॥

ननु उक्तस्य प्रतिसंहारस्य संहर्त्रपेक्षत्वात् स एव संहर्ता मृत्युः विद्यते इत्यत आह न मृत्युरासीद् इति । ननु यदि सः मृत्युः नासीत् तर्हि तदभावकृतम् अमरणं प्राणिनाम् अवस्थानं तदानी स्यात् तत्र आह । अमृतं न तर्हि इति । तर्हि तस्मिन् प्रतिहारसमये । अयं भावः । सर्वेषां प्राणिनां परिपक्वं भोगहेतुभूतं सर्वं कर्म यदा उपभुक्तम् आसीत् तदा भोगाभावात् निष्प्रयोजनम् इदं जगद् इति परमेश्वरस्य मनसि संजिहीर्षा जायते । तदेव स मृत्युः सर्वं जगत् संहरते इति किम् अनेन मृत्युना संहर्त्रा तदभावकृतं वा कथम् अमरणं स्याद् इति । ननु एतस्य सर्वस्य अधिकरणभूतः कालः विद्यते इत्यत आह । न रात्र्या इति । रात्र्याः अह्नः च

प्रकेतः प्रज्ञानं न आसीत्। तद्धेतुभूतयोः सूर्याचन्द्रमसोः अभावात्। एतेन अहोरात्रनिषेधेन तदात्मकः मासर्तुसंवत्सरप्रभृतिकः सर्वः कालः प्रत्याख्यातः। आनीद् अवातम् इति। तत् सकलवेदान्तप्रसिद्धं ब्रह्मतत्त्वम् आनीत् प्राणितवत्। अप्राणो ह्यमनाः (मु. २. १. २) इति तस्य प्राणसंबन्धाभावात् तद् आनीद् अवातम् इति। प्राणवायोः अभावेऽपि तत् प्राणितवत् इत्यर्थः। स्वधया इति। स्वस्मिन् धीयते ध्रियते आश्रित्य वर्तते इति स्वधा माया। तया तद् ब्रह्म एकम् अविभागापन्नम् आसीत्। सहयुक्तेऽप्रधाने (पा. सू. २. ३. १९) इति तृतीया सह-शब्दयोगाभावेऽपि सहार्थयोगे भवति। तस्माद् इति। तस्मात् खलु पूर्वोक्तात् मायासहितात् ब्रह्मणः अन्यत् किं चन किमपि वस्तु भूतभौतिकात्मकं न बभूव। अन्यत् किम् इत्यत आह पर इति। परः परस्तात् सृष्टेः ऊर्ध्वं वर्तमानम् इदं जगत् तदानीं न बभूव इत्यर्थः॥ २॥

ननु उक्तप्रकारेण यदि पूर्वम् इदं जगत् नासीत् कथं तर्हि तस्य जन्म। अतः आह। तम आसीद् इत्यादि। आत्मतत्त्वस्य आवरकत्वात् मायापरसंज्ञं भावरूपाज्ञानम् अत्र तमः इत्युच्यते। तत् आसीत्। किंच यथा नैशं तमः सर्वपदार्थजातम् आवृणोति तद्वत् अग्रे सृष्टेः प्राक् प्रलयदशायां भूतभौतिकं सर्वं जगत् उक्तलक्षणेन तमसा गूळ्हम् आच्छादितम् आसीत्। आच्छादकात् तस्मात् तमसः नामरूपाभ्यां यद् आविर्भवनं तदेव तस्य जन्म इत्युच्यते। अप्रकेतम् अप्रज्ञायमानं तदा जगत् तदावरकं तमश्च आसीत्।

अत एव मनुना स्मर्यते । आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्यमनिर्देश्यं प्रसुप्तमिव सर्वतः ।। (मनु. १.५) इति । कुतो वा न प्रज्ञायते इति तत्राह । सलिलम् इत्यादि । इदं दृश्यमानं सर्वं जगत् सलिलं कारणेन संगतम् अविभागापन्नम् आः आसीत् । षल गतौ इत्यस्मात् निष्पन्नः सलिलशब्दः । यद्वा सलिलम् इति लुप्तोपमम् । सलिलमिव । यथा क्षीरेण अविभागापन्नं नीरं दुर्विज्ञानं तथा तमसा अविभागापन्नं जगत् न शक्यविज्ञानम् इत्यर्थः । तुच्छयेनेत्यादि । आ समन्तात् भवतीति आभु । तुच्छयेन । छान्दसो यकारोपजनः । तुच्छेन तुच्छकल्पेन सदसद्विलक्षणेन भावरूपाज्ञानेन यद् अपिहितं छादितम् आसीत् तद् एकम् एकीभूतं कारणेन तमसा अविभागतां प्राप्तमपि कार्यजातं तपसः स्रष्टव्यपर्यालोचनरूपस्य महिना माहात्म्येन अजायत उत्पन्नम् ।। ३ ।।

ननु उक्तरीत्या यद् ईश्वरस्य पर्यालोचनं जगतः पुनरुत्पत्तौ कारणं तदेव किंनिबन्धनम् इत्यत आह । कामस्तदग्रे इति । अग्रे अस्य विकारजातस्य सृष्टेः प्रागवस्थायां परमेश्वरस्य मनसि कामः समवर्तत सम्यगजायत । सिसृक्षा जाता इत्यर्थः।* । ईश्वरस्य सिसृक्षा वा किंहेतुका इत्यत आह । मनस इति । मनसः अन्तःकरणस्य संबन्धि वासनाशेषेण मायायां विलीने अन्तःकरणे समवेतम् । सामान्यापेक्षम् एकवचनम् । सर्वप्राण्यन्तःकरणेषु समवेतमित्यर्थः । तादृशं रेतः भाविनः प्रपञ्चस्य बीजभूतं प्रथमम् अतीते कल्पे

* तत्-शब्दः अधि-शब्दश्च सायणाचार्यैः न विवृतौ । तत्-शब्दस्य तदा इत्यर्थः प्रतिभाति । अधि-शब्दस्य च उपरि इत्यर्थः प्रतिभाति ।।

प्राणिभिः कृतं पुण्यापुण्यात्मकं कर्म यत् यतः कारणात् सृष्टिसमये आसीत् अभवत् । भूष्णु वर्धिष्णु अजायत परिपक्वं सत् फलोन्मुखम् आसीद् इत्यर्थः । तत् ततो हेतोः फलप्रदस्य सर्वसाक्षिणः कर्माध्यक्षस्य परमेश्वरस्य मनसि सिसृक्षा अजायत इत्यर्थः । तस्यां च जातायां स्रष्टव्यं पर्यालोच्य ततः सर्वं जगत् सृजति । आत्मना इत्थम् अवगमिते अर्थे विद्वदनुभवमपि अनुग्राहकत्वेन प्रमाणयति सत इति । सतः सत्त्वेन इदानीम् अनुभूयमानस्य जगतः बन्धुं बन्धनहेतुभूत कल्पान्तरे प्राण्यनुष्ठितं कर्मसमूहं कवयः क्रान्तदर्शनाः अतीतानागतवर्तमानाभिज्ञा योगिनः हृदि हृदये निरुद्धया मनीषा मनीषया बुद्धया प्रतीष्य विचार्य असति सद्विलक्षणे अव्याकृते, कारणे निरविन्दन् निष्कृष्य अलभन्त । विविच्य अजानन् इत्यर्थः ॥ ४ ॥

एवम् अविद्याकामकर्माणि सृष्टेर्हेतुत्वेन उक्तानि । अधुना तेषां स्वकार्यजनने शैघ्र्यं प्रतिपाद्यते । एषाम् अविद्याकामकर्मणा वियदादिभूतजातानि सृजतां रश्मिः रश्मिसदृशः यथा सूर्यरश्मिः उदयानन्तरं निमेषमात्रेण युगपत् सर्वं जगत् व्याप्नोति तथा शीघ्रं सर्वत्र व्याप्नुवन् यः कार्यवर्गः विततः विस्तृतः आसीत् । स्विदासीत् इति वक्ष्यमाणम् अत्रापि संबध्यते । स्वित् इति वितर्के । स कार्यवर्गः प्रथमतः किं तिरश्चीनः तिर्यगवस्थितो मध्ये स्थितः आसीत् किंवा अधः अधस्तात् आसीत् आहोस्वित् उपरि उपरिष्टात् किम् आसीत् । सर्गस्य शीघ्रव्यापनेन क्रमस्य दुर्लक्ष्यत्वात् एतेषु त्रिषु स्थानेषु प्राथम्यं कुत्र इति विचार्यते । एवं नाम

शीघ्रं सर्वतो दिक्षु सर्गो निष्पन्नः इत्यर्थः। एतदेव विभजते। सृष्टेषु कार्येषु मध्ये केचिद् भावाः रेतोधाः रेतसो बीजभूतस्य कर्मणो विधातारः कर्तारो भोक्तारश्च जीवाः आसन्। अन्ये भावाः महिमानः महान्तो वियदादयः भोग्याः आसन्। एवं मायासहितः परमेश्वरः सर्वं जगत् सृष्ट्वा स्वयं चानुप्रविश्य भोक्तृभोग्यादिरूपेण विभागं कृतवान् इत्यर्थः। तत्र च भोक्तृभोग्ययोर्मध्ये स्वधा। अन्ननाम एतत्। भोग्यप्रपञ्चः अवस्तात् अवरो निकृष्टः आसीत्। प्रयतिः प्रयतिता भोक्ता परस्तात् परः उत्कृष्टः आसीत्। भोग्यप्रपञ्चं भोक्तृप्रपञ्चस्य शेषभूतं कृतवान् इत्यर्थः॥ ५॥

एवं भोक्तृभोग्यरूपेण सृष्टिः संग्रहेण प्रतिपादिता। अथ इदानीं सा सृष्टिः दुर्विज्ञाना इति न विस्तरेण अभिहिता इत्याह। को अद्धा इति। कः पुरुषः अद्धा पारमार्थ्येन वेद जानाति। कः वा इह अस्मिन् लोके प्र वोचत् प्रब्रूयात्। इयं दृश्यमाना विसृष्टिः विविधा भूतभौतिकभोक्तृभोग्यादिरूपेण बहुप्रकारा सृष्टिः कुतः कस्माद् उपादानकारणात् कुतः कस्माच्च निमित्तकारणात् आजाता समन्तात् जाता प्रादुर्भूता। एतद् उभयं सम्यक् को वेद को वा विस्तरेण वक्तुं शक्नुयाद् इत्यर्थः। ननु देवाः सर्वज्ञाः सन्तः जानन्ति वक्तुं च शक्नुवन्ति इत्यत आह अर्वाग् इति। देवाश्च अस्य जगतो विसर्जनेन वियदादिभूतोत्पत्त्यनन्तरं विविधं यद् भौतिकं सर्जनं सृष्टिः तेन अर्वाक् अर्वाचीनाः कृताः। भूतसृष्टेः पश्चाज् जाताः इत्यर्थः। तथाविधाः ते कथं स्वोत्पत्तेः पूर्वकालीनां सृष्टिं

जानीयुः अजानन्तो वा कथं प्रब्रूयुः । उक्तं दुर्विज्ञानत्वं निगमयति । अथ एवं सति देवाः अपि न जानन्ति किल । तद्व्यतिरिक्तः को नाम मनुष्यादिः वेद तत् जगत्कारणं जानाति यतः कारणात् कृत्स्नं जगत् आबभूव अजायत ॥ ६ ॥

उक्तप्रकारेण यथा इदं जगत्सर्जनं दुर्विज्ञानं तथा सृष्टं तज् जगत् दुर्धरमपि इत्याह । इयमिति । यतः उपादानभूतात् परमात्मनः इयं विसृष्टिः विविधा गिरिनदी-समुद्रादिरूपेण विचित्रा सृष्टिः आबभूव आजाता सोऽपि किल यदि वा दधे धारयति यदि वा न धारयति । एवं च को नाम अन्यः धर्तुं शक्नुयात् । यदि धारयेत् ईश्वरः एव धारयेत् न अन्यः इत्यर्थः । एतेन कार्यस्य धारयितृत्व-प्रतिपादनेन ब्रह्मणः उपादानकारणत्वम् उक्तं भवति । यद्वा अनेन अर्धर्चेन पूर्वोक्तं सृष्टेः दुर्ज्ञानत्वम् एव द्रढयति । को वेद इत्यनुवर्तते । इयं विविधा सृष्टिः यतः आबभूव आ समन्तात् अजायत इति को वेद यस्मात् परमात्मनः उपादानभूताद् आबभूव तं परमात्मानं को वेद । न कोऽपि । तथा स एव उपदानभूतः परमात्मा स्वयमेव निमित्तभूतोऽपि सन् यदि वा दधे विदधे इदं जगत् ससर्ज । असंदिग्धे संदिग्धवचनम् एतत् । शास्त्राणि चेत् प्रमाणं स्युः इति यथा । स एव विदधे । तं को वेद । देवा अपि यत् न जानन्ति अर्वाचीनानां तत्परिज्ञाने कैव कथा इत्यर्थः । यद्येवं जगत्सृष्टिः अत्यन्तदुरवबोधा न तर्हि सा प्रमाणपद्धतिम् अध्यास्ते इत्याशङ्क्य तत्सद्भावे ईश्वरमेव

प्रमाणयति यो अस्येति । अस्य भूतभौतिकात्मकस्य जगतः यः अध्यक्षः ईश्वरः परमे उत्कृष्टे सत्यभूते व्योमन् व्योमनि आकाशे आकाशवन् निर्मले स्वप्रकाशे । यद्वा व्योमनि विशेषेण तृप्ते निरतिशयानन्दस्वरूपे इत्यर्थः । यद्वा व्योमनि विशेषेण गते प्राप्ते देशकालवस्तुभिः अपरिच्छिन्ने इत्यर्थः । अथवा व्योमनि विशेषेण ज्ञातरि विशिष्टज्ञानात्मनि । ईदृशे स्वात्मनि प्रतिष्ठितः । ईदृशो यः परमेश्वरः सो अङ्ग सोऽपि नाम वेद जानाति यदि वा न वेद न जानाति । को नाम अन्यः तर्हि जानीयात् इत्यर्थः । अतः सर्वज्ञ ईश्वर एव तां सृष्टिं जानीयात् ॥ ७ ॥

---

## ३३

### म. १०. सू. १४६

हे अरण्यानि । अरण्यस्य पालयित्री काचिद् अधिदेवता अरण्यानी इति नैरुक्ताः । हे अरण्याधिदेवते अरण्यानि कान्ताराणि प्रति या असौ त्वं प्रेव नश्यसि । इवः संप्रत्यर्थे । नशतिः प्राप्तिकर्मा । संप्रति रक्षणाय प्राप्नोषि । यद्वा निर्जने देशे वर्तमानत्वात् नष्टेव प्रतीयसे । सा त्वं कथा कथं ग्रामं न पृच्छसि । निर्जने अरण्ये कथं रमसे । नूनं त्वा त्वां भीः भयं न विन्दति न लभते किम् । वितर्के प्लुतः । इवः संप्रत्यर्थे परिभयार्थे वा । अत्र निरुक्तम् । अरण्यानी अरण्यस्य पत्नी । अरण्यम् अपार्णं भवति ।

ग्रामाद् अरमणं भवतीति वा । अरण्यानि इति एनाम् आमन्त्रयते । यासौ अरण्यानि वनानि पराचीव नश्यसि । कथं ग्रामं न पृच्छसि । न त्वा भीर्विन्दतीवेति इवः परिभयार्थे वा (नि. ९. २९-३०) इति ॥ १ ॥

वृषारवाय । वृषा सेचनसमर्थो रवः शब्दो यस्य सूक्ष्मजन्तुविशेषस्य झिल्ल्याख्यस्य स तथोक्तः । कटुकशब्दवान् इत्यर्थः । तस्मै वृषारवाख्याय वदते चीचीशब्दं कुर्वते चिच्चिकः चीचीशब्दं कुर्वन् अन्यो जन्तुः यत् यदा उपावति वृषारवोक्तस्य शब्दस्य प्रत्युत्तररूपेण चीचीशब्दकरणेन उपगच्छति उपेत्य पालयति वा । तत्र दृष्टान्तः आघाटिभिरिव । आघाटयो घाटलिकाः काण्डवीणाः । ताभिः धावयन् निषादादिसप्तस्वरान् शोधयन् गायक इव । तदा अरण्यानिः सा अरण्यानी महीयते पूज्यते ॥ २ ॥

उत अपि च गावइव गवयाद्याः मृगाः अस्याम् अरण्यान्याम् अदन्ति तृणादिकं भक्षयन्ति । उत अपि च लतागुल्मादिकं वेश्मेव गृहमिव दृश्यते । उतो अपि च अरण्यानिः इयम् अरण्यानी सायं सायंकाले । इवः संप्रत्यर्थे । संप्रति शकटीः शकटान् दार्वाद्याहरणाय आगतान् सर्जति विसर्जयति । यद्वा शकटीः सर्जतीव दृश्यते । अहनि महदरण्यं शकटीभिः प्राप्य सर्वे जनाः अपेक्षितं काष्ठादिकं शकटीषु अध्यारोप्य सायंकाले तस्मात् निर्गच्छन्ति । तदभिप्रायेण इदं वचनम् ॥ ३ ॥

अङ्ग हे अरण्यानि एषः त्वदधिष्ठिते महारण्ये संप्रति वर्तमानः गाम् आ ह्वयति । एषः च अन्यः दारु काष्ठम्

अपावधीत् अपहन्ति । तथा सायं सायंकाले रात्रौ अरण्यान्यां महारण्ये निवसन् मनुष्यो नानाविधं पक्षिमृगादिशब्दं शृण्वन् अक्रुक्षत् कश्चित् तस्करादिः आक्रोशति इति भीतः सन् मन्यते बुध्यते ॥ ४ ॥

न वै न खलु अरण्यानिः अरण्याह्वी हन्ति तत्र निवसन्तं हिनस्ति । यदि अन्यः व्याघ्रचौरादिः नाभिगच्छति । तर्हि स्वादोः रसवतः आम्रादेः फलस्य । द्वितीयार्थे षष्ठी । फलं जग्ध्वाय भक्षयित्वा तत्र निवसन् पुरुषः यथाकामं यथेच्छं नि पद्यते निगच्छति निवर्तते ॥ ५ ॥

आञ्जनगन्धिम् । अञ्जनस्येदम् आञ्जनम् कस्तूर्यादि । तस्य गन्ध इव गन्धो यस्याः तादृशी ताम् । अत एव सुरभिं सौरभ्योपेतां बह्वन्नां बहुभिः अन्नैः अदनीयैः फलमूलादिभिः उपेताम् । अकृषीवलाम् । कृषिः एषाम् अस्ति इति कृषीवलाः कर्षकाः । तैः वियुक्ताम् । तादृशीं मृगाणां मातरं जनयित्रीम् अरण्यानिम् अरण्यानीम् अहं प्र अशंसिषम् उक्तेन प्रकारेण स्तुतवान् अस्मि ॥ ६ ॥



ऋतमिति सत्यनाम । ऋतं मानसं यथार्थसंकल्पनं सत्यं वाचिकं यथार्थभाषणम् । चकाराद् अन्यदपि शास्त्रीयं धर्मजातं समुच्चीयते । तत् सर्वम् अभीद्धात् अभितप्तात् ब्रह्मणा पुरा सृष्ट्यर्थं कृतात् तपसः अधि । अधि उपर्यर्थे । उपरि अजायत उदपद्यत । यद्वा । अभीद्धात् अभितः प्रकाशमानात् (परमात्मनः ऋतं सत्यं च अजायत ) ततः तस्मादेव ईश्वरात् रात्री । उपलक्षणम् एतद् अह्नोऽपि । अहश्च रात्रिश्च अजायत । ततः तस्मादेव ईश्वराद् अर्णवः अर्णसा उदकेन युक्तः समुद्रश्च अजायत । समुद्रशब्दः अन्तरिक्षोदध्योः साधारणः इति अभिमतार्थस्य प्रकाशनाय अर्णवशब्देन विशेष्यते ॥ १ ॥

अर्णवात् समुद्रात् सृष्टात् अधि ऊर्ध्वं संवत्सरः संवत्सरोपलक्षितः सर्वः कालः अजायत । स च ईश्वरः अहोरात्राणि एतदुपलक्षितानि सर्वाणि भूतजातानि विदधत् कुर्वन् सृजन् मिषतः निमिषादियुक्तस्य विश्वस्य सर्वस्य प्राणिजातस्य वशी स्वामी भूत्वा वर्तते ॥ २ ॥

सूर्याचन्द्रमसौ कालस्य ध्वजभूतौ दिवं च पृथिवीं च अन्तरिक्षं च इत्थं त्रिभुवनं स्वः । स्वःशब्दः सुखवाची दिवो विशेषणम् । सुखरूपां दिवम् । तदेतत् । सर्वं धाता विधाता यथापूर्वं पूर्वस्मिन् कल्पे अकल्पयत् सृष्टवान् तथैव आगामिन्यपि कल्पे कल्पयिष्यति इत्यर्थः ॥ ३ ॥

# यजुर्वेदः

## ३५

*शु. य. वा. अ. १

इषे त्वा द्विपदो मन्त्रः श्रुत्या शाखाच्छेदे विनियुक्तः । न चाख्यातमुपलभ्यतेऽत्र । न चाख्यातं विना वाक्यं किंचिद् विधत्ते इत्यध्याहारेण अनुषङ्गेण वा वाक्यपरिपूर्तिः कर्तव्या । नन्वध्याहारानुषङ्गयोः को विशेषः । लौकिकोऽध्याहारः । अनुषङ्गस्तु मन्त्रावयव एव । अयं विशेषोऽध्याहारानुषङ्गयोः । इह त्वन्यशाखापरिपठितेनाख्यातेन सूत्रकारेण वाक्यपरिपूर्तिः कृता । अथ कोऽर्थः । शाखा उच्यते । हे शाखे इषे अन्नाय वृष्टचै वा त्वा त्वां छिनद्मि । ऊर्जे वृष्टिगतजलात्मकरसाय त्वा त्वां संनमयामि ऋजूकरोमि । वायव स्थ । वत्सं शाखयोपस्पृशति । यथा वायुर्वृष्टिद्वारेण गवामाप्यायकः एवं यूयमपि प्रस्नुतिद्वारेणाप्यायका भवथेत्यर्थः । [यद्वा] वान्ति गच्छन्ति इति वायवो गन्तारः । हे वत्साः यूयं वायवः स्थ मातृभ्यः सकाशादन्यत्र गन्तारो भवत । मातृभिः सह गमने सति सायं दोहो न लभ्यत इत्यभिप्रायः । एकस्यापि वत्सस्योपस्पर्शने सर्वेषां संस्कारो बहुवचनोपदेशात् । पूजार्थं वा बहुवचनम् । अथ वत्सानां मातरो या गावः

* अयं संक्षेपः वाजसनेयिमाध्यंदिनशुक्लयजुर्वेदसंहितायाः उवटविरचितम-त्रभाष्याद् महीधरविरचितवेददीपाख्यभाष्याच्च कृतः ।।

सन्ति तासां मध्ये एकां गां व्याकृत्य पृथक्कृत्य देवो व इति मन्त्रेण शाखयोपस्पृशति । देवो दानादिगुणयुक्तः सविता । सुवति स्वस्वव्यापारे प्रेरयतीति सविता । हे गावः वः युष्मान् प्रार्पयतु प्रभूततृणोपेतं वनं गमयतु । किमर्थम् । श्रेष्ठतमाय कर्मणे । चतुर्विधं कर्म । अप्रशस्तं प्रशस्तं श्रेष्ठं श्रेष्ठतमं चेति । लोकविरुद्धं वधबन्धचौर्यादिकमप्रशस्तम् । लोकैः श्लाघनीयं बन्धुवर्गपोषणादिकं प्रशस्तम् । स्मृत्युक्तं वापीकूपतडागादिकं श्रेष्ठम् । वेदोक्तं यज्ञरूपं श्रेष्ठतमम् । यज्ञो वै श्रेष्ठतमं कर्म इति श्रुतेः । तादर्थ्ये चतुर्थी । यज्ञार्थमित्यर्थः । हे अघ्न्याः अनुपहिंस्या गावः । गोवधस्य उपपातकत्वाद् हन्तुमयोग्या अघ्न्या उच्यन्ते । तथाविधा यूयम् इन्द्राय भागम् इन्द्रमुद्दिश्य संपादयिष्यमाणदधिहेतु-[भूतं] क्षीरम् आप्यायध्वं समन्ताद् वर्धयध्वम् । इन्द्रोऽत्र हविर्भाक् । कथंभूताः सत्यः । प्रजावतीः जीवद्वत्साः बहुपत्या वा । अनमीवाः । अमीवा व्याधिः व्याधिविशेषो [वा] । न विद्यते अमीवा यासां ताः । अयक्ष्माः । यक्ष्मा व्याधीनां राजा स यासां न विद्यते ता अयक्ष्माः । आदरार्थं पुनर्वचनम् । किंच मा वः युष्माकं स्तेनः चौरः ईशत ईशनं कार्षीत् ईश्वरः समर्थो मा भूत् । अघशंसः अघेन तीव्रपापेन भक्षणादिना शंसो घातको वृको वा चाण्डालो वा वो हिंसको मा भूत् । किंच यूयं गोपतौ गवा युष्माकं पत्यौ अस्मिन् यजमाने ध्रुवाः शाश्वतिकीः बह्वीर्बहुविधाः स्यात भवत । शाखामुपगूहति [उपस्थापयति] । हे शाखे त्वमुन्नतप्रदेशे स्थित्वा प्रतीक्षमाणा सती यजमानस्य

पशून् अरण्ये संचरतश्चोरव्याघ्रादिभयात् पाहि रक्ष । शाखया रक्षिता गावो निरुपद्रवाः सत्यः सायं पुनरागच्छन्तीत्याशयः । यद्यप्यचेतना शाखा तथापि तदभिमानिनीं देवतामुद्दिश्यैवमुक्तम् । यथा शास्त्रज्ञा अचेतनेऽपि शालग्रामे शास्त्रदृष्ट्या विष्णुसंनिधिमभिप्रेत्य विष्णुं संबोध्य षोडशोपचारान् विदधते इति ॥ १ ॥

वसोः पवित्रमिति पवित्रमस्यां पर्णशाखायां बध्नाति । द्वौ कुशौ कुशत्रयं वा पवित्रमुच्यते । वासयति वृष्ट्यादिद्वारा स्थापयति विश्वमिति वसुः यज्ञः । यज्ञो वै वसुः इति श्रुतेः । यज्ञशब्देन तदीयहविर्द्रव्यरूपं क्षीरं लक्ष्यते । हे दर्भमय पवित्र वसोः इन्द्रदेवताया निवासहेतोः पयसः शोधकं पवित्रं त्वमसि । द्यौरसीति स्थाल्यादानम् । यस्यां स्थाल्यां क्षीरं प्रक्षेप्तव्यं तद्ग्रहणार्थोऽयं मन्त्रः । हे स्थालि मृज्जलाभ्यां निष्पन्ना त्वं द्यौरसि जलहेतुवृष्टिप्रदद्युलोकरूपासि । द्युसंबन्धात् तद्रूपमस्यामुपचर्यते । तथा पृथिव्यसि पृथिव्याः सकाशादुद्धृतया मृदा निष्पन्नत्वात् पृथिवीरूपत्वम् । मातरिश्वन इत्यधिश्रयति । गार्हपत्यादुदीचोऽङ्गारान् निरुह्य तेषूखामधिश्रयति । [उखा = स्थाली] । हे उखे त्वं मातरिश्वनः वायोः घर्मः दीपकोऽन्तरिक्षलोकोऽसि । मातरि अन्तरिक्षे श्वसिति निश्वासवच् चेष्टां करोति इति मातरिश्वा वायुः । घर्मः दीपकः संचारस्थानप्रदानेन वायोर्दीपकोऽभिव्यञ्जकोऽन्तरिक्षलोकः । [अथवा] त्रयो घर्मा अग्निवायुसूर्यदेवत्याः । तत्र मध्यमो घर्मः वायुदेवत्यः स त्वमसीत्यर्थः । द्यौरसि पृथिव्यसीति पूर्वमन्त्रे लोकद्वयरूपत्वमुखाया उक्तम् । अत्र

मातरिश्वनो घर्मोऽसीत्यन्तरिक्षलोकरूपत्वमुच्यते । तस्माद् एषां त्रयाणां लोकानां धारणात् त्वं विश्वधा असि । विश्वं दधातीति विश्वधाः विश्वधारणसमर्थासि लोकत्रयरूपत्वात् । किञ्च परमेण धाम्ना उत्तमेन बहुक्षीरधारणसामर्थ्यरूपेण तेजसा हे उखे त्वं दृंहस्व दृढा भव त्वन्निष्ठस्य क्षीरस्य गलनं वारयितुम् । अन्यथा भग्नायास्तव छिद्रेण क्षीरं गलेत् । [अथवा] धामानि त्रीणि भवन्ति स्थानानि नामानि जन्मानीति च । उत्कृष्टेन नाम्नाभिहिता सती घर्मोऽसीत्यादिना आत्मानं दृंहस्व दृढीकुरुष्वेत्यर्थः । मा ह्वाः मा ह्वार्षीः मा कुटिलीभूः । दृढीभूतायामपि लुटितायां पयःस्कन्दनं भवति । तत् मा भूदित्येवमुच्यते । किंच ते यज्ञपतिः त्वत्संबन्धी यजमानः मा ह्वार्षीत् कुटिलो मा भूत् अधिष्ठानात् [प्रच्युतो मा भूत्] ॥ २ ॥

वसोः पवित्रमिति पवित्रमस्यामुखायां करोति । हे शाखापवित्र वसोः पयसः शोधकं त्वमसि । पवित्रेण व्यवधाने सति क्षीरेण सह स्थाल्यां पततां तृणपर्णादीनां प्रतिबध्यमानत्वात् पवित्रस्य क्षीरशोधकत्वम् । किंभूतं पवित्रम् । शतधारं शतसंख्या धारा यस्मिन् । तथा सहस्रधारं सूक्ष्मैः पवित्रच्छिद्रैः स्थाल्यां पतन्तीनां क्षीरधाराणां शतसहस्रसंख्याकानां सद्भावात् शोधकत्वमाहर्तुम् । वसोः पवित्रमिति द्विरुक्तिः अभ्यासे भूयांसमर्थं मन्यन्ते इति । देवस्त्वेत्यासिच्यमाने जपति । पय उच्यते । देवस्त्वा सविता पुनातु दोषात् पृथक् करोतु निर्दोषं करोतु । सुप्वेति पवित्रविशेषणम् । सुष्ठु पुनाति इति सुपूः तेन

सुप्वा । साधुपवनेन पवित्रेण । कामधुक्ष इति प्रश्नोऽयम् । गवां मध्ये त्वं कां गामधुक्षः ।। ३ ।।

पूर्वोक्तप्रश्नस्योत्तरे अमूं गामिति दोग्ध्रा प्रोक्ते सा विश्वायुरित्यध्वर्युराह । सा गौर्विश्वस्य जगतः आयुषो दात्री । [अथवा] विश्वमायुर्यस्याः सा विश्वायुः । यजमानस्य सम्पूर्णमायुः प्रयच्छतीत्यर्थः । यथा प्रथमा गौः पृष्टा एवमितरे द्वितीयतृतीये गावौ तद्दोहनादूर्ध्वं कामधुक्ष इति मन्त्रेण प्रष्टव्ये । दोग्ध्रा तूत्तरे अमूमिति प्रोक्ते सा विश्वकर्मा सा विश्वधाया इति मन्त्राभ्यां क्रमेण तयोराशिषं ब्रूयात् । या द्वितीया गौस्त्वया [दुग्धा] सा विश्वकर्मा विश्वस्य जगतः कर्त्री । या तृतीया सा विश्वधायाः विश्वस्य जगतः पाययित्री । धाया इति धयतेर्णिजन्तस्यासुनि रूपम् । [अथवा] विश्वान् सर्वान् देवान् दधाति क्षीरदध्यादिहविर्दानेन पुष्णातीति विश्वधायाः । यज्ञादेव सर्वाः प्रजा उत्पद्यन्ते आयुर्भोजनसहिताः स गवामुपचर्यते । क्वथितं क्षीरमग्नेरुद्वास्य मन्दोष्णे तत्र [क्षीरे] प्रातःकालीनहोमावशिष्टेन दध्ना दधिनिष्पत्तये आतञ्चनं कुर्यात् [इन्द्रस्य त्वेति मन्त्रभागेन] । हे क्षीर इन्द्रस्य भागं त्वां सोमेन आतनच्मि दध्यर्थं कठिनीकरोमि दधिभावमापादयामीत्यर्थः । यद्यप्यत्र आतञ्चनहेतुर्दधिशेषस्तथापि भावनया तस्यैव सोमत्वं संपाद्यते । [आतञ्चनानन्तरं तत् क्षीरपात्रम् अमृण्मयेन पात्रेण अपिदधाति विष्णो हव्यमिति मन्त्रशेषेण] । हे विष्णो इदं हव्यं क्षीरं रक्ष । सर्वत्र सृष्टौ पालने संहारे च

ब्रह्मविष्णुमहेश्वरा अभिमानिन्यो देवताः । अतो विष्णुं संबोध्य हविषो रक्षा प्रार्थ्यते ॥ ४ ॥

अपरेण आहवनीयं प्राङ् तिष्ठन् अग्निमीक्षमाणः अप उपस्पृश्य व्रतमुपैति अग्ने व्रतपत इत्यादिना । हे व्रतपते व्रतस्य अनुष्ठेयस्य कर्मणः पते पालक हे अग्ने त्वदनुज्ञया व्रतं चरिष्यामि कर्म अनुष्ठास्यामि । तच्छकेयं तत्कर्म अनुष्ठातुं शक्तो भूयासं त्वत्प्रसादात् । तन्मे राध्यतां मदीयं तत्कर्म निर्विघ्नं सत् फलपर्यन्तं सिध्यतु । अहं यजमानोऽस्माद् अनृतात् मनुष्यजन्मन उद्गत्य सत्यं देवताशरीरम् उपैमि प्राप्नोमि । अनृतं मनुष्यजन्म शीघ्रविनाशित्वात् । सत्यं देवजन्म बहुकालस्थायित्वात् । यद्वा लोकप्रसिद्धे एव सत्यानृते ग्राह्ये । नानृतं वदेदिति कर्मणि अनृतनिषेधात् ॥ ५ ॥

एवं व्रतमुपेत्य ब्रह्माणं वृत्वा अपां प्रणयनं कुर्यात् । तत्र मन्त्रं प्रयुञ्जानोऽध्वर्युर्यज्ञारम्भकर्मण्यात्मनः कर्तृत्वमपनीय प्रजापतेर्यज्ञकर्तृत्वं प्रश्नोत्तररूपाभ्यां मन्त्रवाक्याभ्यां प्रतिपादयति । प्रणीतानामपां धारक हे पात्र त्वां कः पुरुषो युनक्ति आहवनीयस्य उत्तरभागे स्थापयतीति प्रश्नः । सर्वेषु वेदेषु जगन्निर्वाहकत्वेन प्रसिद्धो यः प्रजापतिरस्ति स एव परमेश्वरः हे पात्र त्वां युनक्तीत्युत्तरम् । पुनरपि कस्मै प्रयोजनाय त्वां युनक्ति इति प्रश्नः । तस्मै प्रजापतये तत्प्रीत्यर्थं त्वा युनक्तीत्युत्तरम् । सर्वकर्माणि परमेश्वर-प्रीत्यर्थमनुष्ठेयानीति । कर्मणे वामिति शूर्पं चाग्निहोत्रहवणीं चादत्ते । कर्मणे यज्ञकर्मणे वां युवाम् अहम् आददे इति

वाक्यशेषः । वेषाय यज्ञव्याप्त्यर्थं वां युवाम् अहमाददे इति च ॥ ६ ॥

प्रत्युष्टमिति अग्निहोत्रहवणीशूर्पे प्रतपति । रक्षः राक्षसजातिः प्रत्युष्टं प्रत्येकं दग्धम् । अरातयोऽपि प्रत्युष्टाः प्रत्येकं दग्धाः । हविषो दक्षिणाया वा दानं रातिः । रातेः प्रतिबन्धका अरातयस्तेऽपि दग्धाः । शूर्पादौ निगूढं रक्षो निष्टप्तं निःशेषेण तप्तं संतप्तम् । अरातयश्च निष्टप्ताः । अनयोर्मन्त्रयोर्विकल्पः । गच्छति उर्वन्तरिक्षमिति । उरु विस्तीर्णम् अन्तरिक्षमवकाशम् अन्वेमि अनुसृत्य गच्छामि । गच्छतः पुरुषस्य पार्श्वयोरेव स्थितं रक्षोऽनेन मन्त्रेण निराक्रियत इत्याशयः ॥ ७ ॥

श्रपणस्य पुरोडाशपाकहेतोर्गार्हपत्यस्य पश्चाद् अनः शकटं व्रीहियुक्तं तिष्ठति तस्य धुरं धूरसीति मन्त्रेण स्पृशति । व्रीहिरूपहविर्धारकशकटसंबन्धिनो युगस्य बलीवर्दवहनप्रदेशे कश्चिद् हिंसकोऽग्निः शास्त्रदृष्टोऽस्ति तं प्रार्थयते । हे वह्ने त्वं धूरसि हिंसकोऽसि । यतो धूरसि अतो धूर्वन्तं हिंसन्तं पाप्मानं धूर्व विनाशय । किंच यः राक्षसादिर्यागविघ्नेन अस्मान् धूर्वति हिंसितुमुद्युक्तस्तमपि धूर्व विनाशय । यं च वयं धूर्वामः तमपि धूर्व । शकटस्य दीर्घं काष्ठमीषा तदग्रस्य भूमिस्पर्शो मा भूदिति तदाधारत्वेन स्थापितं काष्ठमुपस्तम्भनं तस्य पश्चाद्भागे शमीषां स्पृशेत् देवानामसीति । हे शकट त्वं देवानां संबन्धि असि । किंभूतम् । वह्नितमम् । वहतीति वह्नि । अतिशयेन वह्नि वह्नितमम् । व्रीहिरूपस्य हविषोऽतिशयेन प्रापकम् । तथा

सस्नितमम् अतिशयेन शुद्धम् । यद्वा दार्ढ्याय चर्मादिभिरतिशयेन वेष्टितम् । पप्रितमम् व्रीहिभिरतिशयेन पूरितम् । जुष्टतमम् देवानामतिशयेन प्रियम् । देवहूतमम् देवानामतिशयेन आह्वात् । व्रीहिपूर्णं शकटं दृष्ट्वा देवा आहूता इव शीघ्रमागच्छन्ति ॥ ८ ॥

अह्रुतमसि अकुटिलमसि । आरोहणेऽपि भङ्गभीतिर्नास्तीत्यर्थः । हविर्धानं हविषो व्रीहिरूपस्य धारकं पोषकं भवसि । अतः आत्मानं दृंहस्व दृढीकुरु ।* . . . विष्णुस्त्वा इत्यनेनारोहति । हे शकट विष्णुर्व्यापको यज्ञः त्वा त्वां क्रमतां पादेनाक्रम्य आरोहतु । नाहं समर्थ इति भावः । प्रेक्षते उरु वातायेति । हे शकट वाताय उरु भवेति शेषः । शकटस्य व्रीहीणां तृणाद्याच्छादितत्वात् संकोचे वायुप्रवेशाभावात् आच्छादनमपनीय यथा वायुः प्रविशति तथा संकोचं परित्यजेत्यर्थः । वायुरूपप्राणप्रवेशाद् हविः सप्राणं क्रियते मन्त्रेण । किंच वायुप्रवेशरहितं सर्वं वस्तु वरुणदेवत्यं भवति । वरुणश्च बन्धकारित्वाद् यज्ञनिरोधकः । तन्निवृत्त्यर्थममं मन्त्रः । अपद्रव्यं निरस्यति अपहतमिति । रक्षो यज्ञविघातकम् अपहतं निराकृतम् । तृणादिकमेव रक्ष उच्यते । यच्छन्तामित्यालभते । पञ्च पञ्चसंख्याका अङ्गुलयो व्रीहिरूपं हविः यच्छन्तां नियच्छन्तु । अनेन पञ्चाङ्गुलियुक्तेन मुष्टिना व्रीहीन् गृह्णीयादित्यर्थः ॥ ९ ॥

---

* अयं मन्त्रभागः द्वितीये मन्त्रे व्याख्यातः । तत्र मा ह्वारिति पाठः। अत्रापि स एव शुद्धः पाठः ॥

देवस्य त्वेति हविर्गृह्णाति । हे हविः सवितुर्देवस्य प्रसवे प्रेरणे सति तेन प्रेरितोऽहम् अग्नये जुष्टं प्रियं त्वा गृह्णामि । अग्नीषोमाभ्यां व्यासक्तदेवाभ्यां च जुष्टं त्वा गृह्णामि । काभ्याम् । अश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां च । अंसमणिबन्धयोर्मध्यभागो दीर्घदण्डाकारो बाहुः । पञ्चाङ्गुलियुक्ताग्रभागो हस्तः । अश्विनौ हि देवानामध्वर्यू । पूषा हि देवानां भागधुक् । अतो ग्रहणसाधनयोः स्वबाह्वोरश्विबाहुभावना कार्या हस्तयोस्तु पूषहस्तभावनेति भावः । सर्वात्मकस्याग्नेर्हविस्तादृशं मनुष्येण कथं ग्रहीतुं शक्यमिति सवित्रानुज्ञातः अश्विबाहुभ्यां पूष्णो हस्ताभ्यां गृह्णामीत्यर्थः । देवानां सत्यरूपत्वात् तदनुस्मृतिपूर्वकं हविर्ग्रहणं फलपर्यवसायित्वात् सत्यं भवति । देवतास्मृत्यभावे तु मनुष्याणामनृतरूपत्वात् तत्कृतमनुष्ठानं निष्फलत्वाद् अनृतं भवतीति देवतास्मरणमित्यभिप्रायः । हविर्गृह्णन्तमध्वर्युं देवताः सेवन्ते मम नाम ग्रहीष्यतीति । अनामग्रहं हविषि गृहीते तासां मिथः कलहो भवेद् इदं मदर्थमेव गृहीतमिति तत्कलहनिवृत्त्यर्थमग्नये जुष्टमग्नीषोमाभ्यां जुष्टमिति देवतानिर्देशपूर्वकं हविर्ग्रहणमित्यभिप्रायः ॥ १० ॥

भूताय त्वेति शेषाभिमर्शनम् । हे व्रीहिशेष शकटावस्थित भूताय भवनाय यागान्तराणां ब्राह्मणभोजनस्य च पुनरपि सद्भावाय त्वा त्वां संपरिशेषयामीति शेषः । न अरातये अदानाय शेषयामि । स्वरिति प्राङ् ईक्षते । अहं स्वः अभिविख्येषम् यज्ञं पश्येयम् । यज्ञदिवसदेवसूर्याः स्वःशब्देन उच्यन्ते । स्वर्गहेतुत्वादपि स्वःशब्देन यज्ञः । विपूर्वः ख्यातिर्दर्शनार्थः । अनेन मन्त्रेण प्राङ्मुखो यज्ञभूमिं वीक्षते ।

दृंहन्तामिति शकटादवरोहति । पृथिव्यां वर्तमानाः दुर्याः गृहाः दृंहन्तां दृढा भवन्तु । दुरो द्वाराणि अर्हन्तीति दुर्याः गृहाः । हविर्गृहीत्वा उत्तरतः [शकटादवतरतः] अध्वर्योर्भारेण गृहक्षोभः संभाव्यते सोऽनेन मन्त्रेण वार्यते ।* . . . श्रपणस्य पश्चात् सादयति पृथिव्यास्त्वेति । हे हविः पृथिव्या नाभौ मध्ये त्वां सादयामि स्थापयामि । तस्यैव व्याख्यानम् अदित्या उपस्थे इति । उपस्थे अङ्के । यथा सुप्तं बालं पुत्रं माता स्वाङ्के स्थापयति एवमिदं हविः अदित्या उपस्थे भूम्या अङ्के सादयामि । [अथवा] अदित्याः देवमातुः । हे अग्ने तव समीपे स्थापितमिदं हव्यं त्वं रक्ष ॥ ११ ॥

कुशौ समौ अप्रशीर्णाग्रौ अनन्तर्गर्भौ कुशैश्छिनत्ति पवित्रे स्थ इति । पवित्रे पवनक्रियाशीले युवां भवथः । वैष्णव्ये इति प्राप्ते वैष्णव्यौ इति लिङ्गव्यत्ययः । वैष्णव्यौ यज्ञसंबन्धिनी । हविर्ग्रहण्यामपः कृत्वा ताभ्यामुत्पुनाति सवितुर्व इति । सवितुः प्रेरकस्य प्रसवे प्रेरणे सति हे आपः वः युष्मान् उत्पुनामि उत्कर्षेण शोधयामि । केन । अच्छिद्रेण छिद्रहीनेन पवित्रेण शोधकेन वायुरूपेण । सूर्यस्य रश्मिभिः शुद्धिहेतुभिरुत्पुनामीति संबन्धः । सव्ये कृत्वा दक्षिणेनोदिङ्गयति [=उत्क्षिपति] देवीराप इति । उत्पूताभिरद्भिः पूरितामग्निहोत्रहवणीं सव्यहस्ते स्थापयित्वा मन्त्रमुच्चायरन् दक्षिणहस्तेन ऊर्ध्वं चालयेत् । हे देवीः आपः द्योतनात्मिका आपः द्योतनात्मिका आपः यूयमद्य अस्मिन् दिने इमम्

* अयं मन्त्रभागः सप्तमे मन्त्रे व्याख्यातः ॥

इदानीं प्रवर्तमानं यज्ञम् अग्रे नयत पुरतः प्रवर्तयत निर्विघ्नं समापयत । किंभूता आपः । अग्रेगुवः अग्रे गच्छन्तीति अग्रेगुवः पुरतो निम्नदेशं प्रति गमनशीलाः । तथा अग्रेपुवः अग्रे पुनन्तीति अग्रेपुवः । अग्रे यस्मिन् पूर्वभागे गच्छन्ति तस्मिन् अपहृतिनिवारणेन शोधनशीलाः । यद्वा अग्रे पिवन्तीत्यग्रेपुवः । प्रथमं सोमरसस्य पानकर्त्र्यः । किंच यज्ञपतिं यजमानमग्रे नयतेत्यनुवर्तते । फलभोगाय प्रेरयत । कथंभूतम् । सुधातुम् । सुष्ठु दक्षिणादिना दधाति यज्ञं पुष्णातीति सुधातुः तम् । यज्ञस्य पतिं पालयितारम् । एको यज्ञपतिशब्दो योगेन व्याख्येय एको रूढ्या । तथा देवयुवम् । देवान् कामयत इति देवयुः । इदंयुरिदं कामयमान इति यास्कः ॥ १२ ॥

हे आपः इन्द्रः देवः वृत्रतूर्ये वृत्रवधे निमित्तभूते सति युष्माः युष्मान् अवृणीत । यूयमपि तमिन्द्रं वृत्रतूर्ये निमित्ते अवृणीध्वं वृतवत्यः सहकारित्वेन । प्रोक्षिताः स्थेति तासां प्रोक्षणम् । प्रोक्षिता यूयं तावद् भवथ । असंस्कृता अन्यसंस्कारक्षमा न भवन्तीति । हविः प्रोक्षति अग्नये त्वेति । अग्नये त्वा त्वां जुष्टम् अभिरुचितं प्रोक्षामि । अन्यदपि हविस्तद्देवतोच्चारेण प्रोक्षणीयम् । पात्राणि प्रोक्षति दैव्यायेति । पात्राणि कृष्णाजिनोलूखलादीनि । हे यज्ञपात्राणि यूयं शुन्धध्वं शुद्धानि भवत । किमर्थम् । दैव्याय अग्न्यादि-देवतासंबन्धिने कर्मणे देवयज्यायै देवसंबन्धिन्यै यागक्रियायै दर्शादिकायै च । किञ्च अशुद्धाः नीचजातयस्तक्षादयः वः युस्माकं संबन्धि यदङ्गं पराजघ्नुः पराहतं कृतवन्तः छेदन-

तक्षणादिकाले स्वकीयहस्तस्पर्शरूपमशुचित्वं चक्रुः तदिदं वः युस्माकम् अङ्गं शुन्धामि प्रोक्षणेन शुद्धं करोमि ॥ १३ ॥

शर्मासीति कृष्णाजिनादानम् । अजिनस्य चर्मेति मानुषं नाम शर्मेति दैवं नाम । हे कृष्णाजिन त्वम् उलूखलस्य धारणार्थं शर्म सुखहेतुरसि । तद् अवधूनोति अवधूतमिति । रक्षः कृष्णाजिने गूढम् अवधूतम् । कृष्णाजिनकम्पनेन भूमौ पातितम् । एवम् अरातयः अदानशीलाः पुरुषाः अपि पातिताः । कृष्णाजिनमास्तृणाति अदित्या इति । हे कृष्णाजिन अदित्याः भूमिदेवतायाः त्वग्रूपमसि । ततोऽदितिः भूमिस्त्वा त्वां प्रतिवेत्तु प्रतिगृह्य मदीयेयं त्वगिति जानातु । अद्रिरसीति तस्मिन् उलूखलं निदधाति । हे उलूखल त्वं यद्यपि वानस्पत्यः तथापि दृढत्वात् अद्रिरसि पाषाणोऽसि । पुनः किंभूतः । पृथुबुध्नः स्थूलमूलः ग्रावासि दार्ढ्येन पाषाणसदृशोऽसि । अदित्यास्त्वक् अधस्ताद् आस्तीर्णा कृष्णाजिनरूपा त्वां प्रतिवेत्तु स्वकीयत्वेन जानातु ॥ १४ ॥

हविरावपति अग्नेस्तनूरसीति । आहवनीयोऽत्र अग्निरुच्यते । तत्र हि हविः प्रक्षिप्तमग्निर्भवति । अत एवमुच्यते अग्नेस्तनूः शरीरमसीति । अथवा अग्निशब्देन यस्यै देवतायै हविर्गृह्यते सा लक्ष्यते । तस्या अपि हविस्तनूर्भवतीति । किंभूतं हविः । वाचो विसर्जनम् । अपां प्रणयनकाले नियमिताया यजमानवाचः हविरावपनकाले विसर्गो भवति । तस्मादिदं हविः वाचो विसर्जनम् । देववीतये देवतर्पणाय त्वा गृह्णामि आवपामीत्यर्थः । बृहद्ग्रावेति मुसलमादत्ते । हे मुसल त्वं यद्यपि वानस्पत्यः

दारुमयः तथापि ग्रावासि दाढर्येन पाषाणसदृशोऽसि । तथा दीर्घत्वेन वृहन् महानसि । स इदमित्यवदधाति । हे मुसल त्वं देवेभ्यः अग्न्यादिदेवोपकारार्थम् इदं हविः व्रीहिरूपं शमीष्व शमय । भक्षणविरोधितुषापनयनेन शान्तं कुरु । तस्यैव पदस्य व्याख्यानं सुशमि शमीष्वेति । सुशमि सुष्ठु शान्तं यथा भवति तथा शमीष्व शमय । शान्ति-द्विविधा । बाह्यतुषापनयनादाद्या । अन्तःस्थितमालिन्यस्याप-नयनादन्या । तं द्विविधं तण्डुलसंस्कारं कुर्वित्यर्थः । हविष्कृदेहीति त्रिराह्वयति । यजमानः तत्पत्नी अन्यो वा यो व्रीहीन् अवहन्ति स संबोध्याहूयते । हे हविष्कृत् एहि अत्रागच्छ । हविः करोतीति हविष्कृत् । त्रिवारमुक्तमर्थं देवा मन्यन्त इति त्रिराह्वानम् ॥ १५ ॥

आहन्त्यन्यो दृषदुपले कुक्कुटोऽसीति । हे शम्यारूप यज्ञायुधविशेष त्वं कुक्कुटोऽसि असुराणां मधुजिह्वश्चासि देवानाम् । असुराः क्व क्वेति तान् हन्तुमिच्छन् यः अटति सर्वत्र संचरति स कुक्कुटः । यद्वा कुकं कुत्सितशब्दं कुटति तनोतीति कुक्कुटः । यद्वा कुक्कुटाख्यपक्षिवद् ध्वनिविशेषमसुर-भीत्यर्थं तनोतीति कुक्कुट इत्युपचर्यते । मधुजिह्वकनामा कश्चिद् देवानां भृत्यः । मधुर्मधुरभाषिणी जिह्वा यस्य । तद्रूप हे यज्ञायुध त्वम् असुरान् पराभवन् यजमानस्य इषमूर्जं चावद । अन्नं रसश्च यथा समागच्छति तथा शब्दं कुरु । तव शब्देन असुरेषु पराभूतेषु तदीयमन्नं रसं च यजमानः प्राप्नोति । ततः त्वया कृत्वा वयं संघातं संघातं जेष्म असुरैः सह क्रियमाणं तं तं संग्रामं जेष्म जयेम ।

सम्यग् हन्यन्ते असुरा यत्रेति युद्धम् । मनोः राज्ञः एको वृषभ आसीत् । तस्मिन् असुरघ्नी वाक् स्थिता । तस्मिन् शब्दं कुर्वति तं श्रुत्वैव असुरा म्रियन्ते । ततः किलाताकुली नाम असुरयाजको मनुं गत्वा तेनैव ऋषभेण अयाजयताम् । ऋषभे हते सा वाङ् मनोर्जायां प्रविष्टा । तौ पुनः तयापि मनुमयाजयताम् । ततः सा वाग् यज्ञपात्राणि प्रविष्टा । अतः असुरपराभवाय तद्वाक्प्रकटनार्थं शम्यया दृषदुपलहननम् । वर्षवृद्धमसीति शूर्पमादत्ते । हे शूर्प त्वं वर्षवृद्धमसि । वर्षेण वृष्ट्या तद्भूतजलेन वृद्धं वर्षवृद्धम् । वर्षवृद्धवेणुशलाकानिर्मितत्वात् शूर्पस्य वर्षवृद्धत्वम् । प्रति त्वेति हविरुद्वपति । हे हविः वर्षवृद्धं शूर्पं त्वा त्वां प्रतिवेत्तु स्वकीयत्वेन जानातु । व्रीहिशूर्पयोर्वर्षवृद्धत्वाद् भ्रातृत्वम् । परापूतमिति निष्पुनाति । रक्षः परापूतं निराकृतम् । शूर्पेण तुषेषु परापूतेषु तद्गतं रक्षोऽपि तैः सह भूमौ पातितम् । अरातयः हविःप्रतिकूलाः आलस्यादिशत्रवश्च परापूता निराकृताः । अपहतमिति तुषान् निरस्यति । रक्षः अपहतम् दूरे अपनीय मारितम् । भूमौ पतितान् तुषान् दूरे निःसारयेत् । वायुर्व इति विविनक्ति । हे तण्डुलाः वायुः शूर्पचलनोत्थः वः युष्मान् विविनक्तु सूक्ष्मकणेभ्यः पृथक्करोतु । देवो व इति पात्र्यामोप्य अभिमन्त्रयते । हे तण्डुलाः सविता देवः वः युष्मान् अच्छिद्रेण पाणिना अङ्गुलिविश्लेषहीनेन स्वहस्तेन प्रतिगृभ्णातु स्वीकरोतु । पात्रीप्रक्षेपसमये भूमौ पतनं मा भूदिति सवितुर्ग्रहणं प्रार्थ्यते । किंभूतः सविता । हिरण्यपाणिः

हिरण्ययुक्तौ अङ्गुलीयाद्याभरणयुक्तौ पाणी यस्य स हिरण्यपाणिः । यद्वा दैत्यैः प्राशित्रप्रहारेण छिन्नौ सवितुः देवैः हिरण्यमयौ कृतौ इति सवितुर्हिरण्यपाणित्वम् ॥ १६ ॥

पलाशशाखाया मूलदेशे छिन्नः काष्ठभाग उपवेषस्तमादत्ते धृष्टिरसीति । उपवेष उच्यते । हे उपवेष त्वं धृष्टिरसि प्रगल्भोऽसि । तीव्राङ्गाराणामितस्ततश्चालने प्रभुत्वादस्य प्रागल्भ्यम् । अपाग्न इति अङ्गारान् प्राचः करोति । तत्र त्रयोऽग्नयः सन्ति । एकः आमात् । आमम् अपक्वम् अत्तीति आमात् । लौकिकोऽग्निः । द्वितीयः क्रव्यात् । शवदाहे क्रव्यं मांसमत्तीति क्रव्यात् । चिताग्निः । तृतीयो यागयोग्यः । तथाविधांस्त्रीनङ्गारान् गार्हपत्यात् प्राग्भागे पृथक्कृत्य तेषां मध्ये यागयोग्यताहीनौ द्वावग्नी आमात्क्रव्यात्संज्ञौ तौ वारयितुं गार्हपत्यं प्रत्युच्यते । हे अग्ने हे गार्हपत्य आमादमग्निम् अपजहि तथा क्रव्यादमग्निं निःषेध निःशेषं दूरे गमय परित्यजेत्यर्थः । आ देवयजमित्यङ्गारमाहरति । हे गार्हपत्य देवयजं देवानां यागयोग्यं तृतीयमङ्गारम् आवह समीपमानय । देवा इज्यन्ते यस्मिन् असौ देवयाट् तं देवयजम् । तं कपालेनाच्छादयति ध्रुवमसीति । हे कपाल त्वं ध्रुवमसि स्थिरं भवसि । अङ्गारोपरि वर्तमानमपि इतस्ततो न पतसि । पृथिवीं भूमिं दृंह दृढीकुरु । पुरोडाशपाकसमये त्वत्कृतव्यवधानेन भूमेर्दाहकृतं शैथिल्यं न भविष्यतीत्यर्थः । किञ्च त्वाम् उपदधामि अङ्गारे स्थापयामि । किमर्थम् । भ्रातृव्यस्य शत्रोरसुरस्य पाप्मनो वा वधाय हिंसार्थम् । किंभूतं त्वाम् । ब्रह्मवनि ब्रह्मणा ब्राह्मणेन वन्यते पुरोडाशनिष्पत्त्यर्थं स्वीक्रियते इति

ब्रह्मवनि । तथा क्षत्रवनि । सजातवनीति समाने कुले जाताः सजाताः यजमानस्य ज्ञातयः तैर्वन्यत इति ॥ १७ ॥

सव्याङ्गुल्यां शून्ये अङ्गारं निदधाति अग्ने ब्रह्मेति । हे अग्ने निर्धीयमानाङ्गाररूप ब्रह्म प्रौढं कर्म अस्माभिः क्रियमाणं गृभ्णीष्व गृह्णीष्व । नाशकरक्षोवधेन अनुगृह्णीष्व । यद्वा ब्रह्म ब्राह्मणं मामनुगृह्णीष्व । अङ्गुलिदानासक्तं मा दहेत्यर्थः । धरुणमिति पूर्वस्थापितकपालस्य पश्चाद्भागे द्वितीयं निदधाति । हे द्वितीय कपाल त्वं धरुणं पुरोडाशस्य धारकमसि । अतो अन्तरिक्षं दृंह दृढीकुरु । ब्रह्मवनीत्यादि पूर्ववत् [ मन्त्र १७ ] । पुरस्ताद् धर्त्रमसीति प्रथमस्य पूर्वभागे तृतीयं कपालं स्थापयेत् । हे कपाल त्वं धर्त्र धारकम् असि । दिवं दृंह द्युलोकं दृढीकुरु । अन्यत् पूर्ववत् [ मन्त्र १७ ] । विश्वाभ्य इति दक्षिणतः चतुर्थं कपालं निदधाति । हे चतुर्थकपाल विश्वाभ्य आशाभ्यः सर्वदिग्भ्यः सर्वदिग्दार्ढ्याय त्वा उपदधामि । आग्नेयपुरोडाशस्य अष्टाकपालत्वात् चतुर्णां स्थापितत्वात् अवशिष्टानां चतुर्णां मध्ये द्वे द्वे दक्षिणोत्तरयोर्निदध्यात् चितः स्थेति । हे कपालविशेषा यूयं चितः स्थ प्रथमकपालोपचयकारिणः स्थ भवथ । तथा ऊर्ध्वचितः स्थ ऊर्ध्वमुपहितानां द्वितीयादिकपालानामुपकारिणो भवथ । भृगूणामित्यङ्गारैरभ्यूहति । अङ्गारैः कपालानि छादयति । हे कपालानि यूयं भृगूणामङ्गिरसां भृगुनामकानामङ्गिरोनामकानां देवर्षीणां तपसा तपोरूपेणाग्निना अनेन तप्यध्वं तप्तानि भवत ॥ १८ ॥

शर्मासीत्यादीनि त्रीणि यजूंषि व्याख्यातानि [ मन्त्र १४ ]। कृष्णाजिने दृषदं निदधाति धिषणासीति । हे शिले पेषणाधारभूते त्वं पर्वती पर्वतात्मिका तदुत्पन्ना । त्वं धिषणासि । धियं बुद्धिं कर्म वा सनोति व्याप्नोति ददाति वा इति धिषणा । अदित्याः भूमेस्त्वक् कृष्णाजिनरूपा तादृशीं त्वा त्वां प्रति वेत्तु त्वदवस्थानमनुजानातु । दृषदः पश्चात् अधस्तात् कृष्णाजिने शम्यामेतन्नामकयज्ञपात्रमुपदधाति दिव इति । हे शम्ये दिवः द्युलोकस्य स्कम्भनीः स्तम्भनकारिणी त्वमसि । दृषदि उपलामुपदधाति धिषणासीति । हे उपले उपरितनशिले त्वं धिषणासि पेषणव्यापारधारिकासि । किंभूता । पार्वतेयी पर्वत्या अधस्तनदृषदः पुत्री पार्वतेयी बालस्वरूपा । अतः पर्वती मातृसमा त्वां प्रतिवेत्तु पुत्रीं जानातु ॥ १९ ॥

दृषदि तण्डुलानावपति धान्यमसीति । हे हविः त्वं धान्यमसि । धिनोति प्रीणातीति धान्यम् । अतो देवान् अग्न्यादीन् धिनुहि प्रीणय । पिनष्टि प्राणाय त्वेति । प्रकर्षेण अनिति सर्वदा मुखे चेष्टते इति प्राणः श्वासवायुः । उद् अनिति ऊर्ध्वं चेष्टते इति उदानः उत्क्रान्तिवायुः । व्यनिति व्याप्य चेष्टते इति व्यानो व्यापको बलहेतुर्वायुः । हे तण्डुल त्वा त्वां प्राणाय प्राणदानार्थं पिनष्मीति शेषः । एवमुत्तरत्र योजनीयम् । दीर्घामिति कृष्णाजिने प्रक्षिपति । आयुषे दीर्घामविच्छिन्नां प्रसितिमनु कर्मसन्ततिमनुलक्ष्य आयुषे यजमानस्य आयुरभिवृद्ध्यर्थं हे हविः त्वां धां कृष्णाजिने दधामि । यजमानस्य आयुर्वृद्धौ सत्यां कर्मसन्ततिः प्रवर्तते इति भावः । देवो वः सवितेति मन्त्रशेषो व्याख्यातः [ मन्त्र १६ ]।

चक्षुषे त्वेतीक्षते । हे हविः चक्षुषे यजमानस्य चक्षुरिन्द्रियपाटवाय त्वा त्वां पश्यामीति शेषः । आज्यं निर्वपति महीनां पयोऽसीति । हे आज्य त्वं महीनां गवां पयोऽसि क्षीरमसि । क्षीरोत्पन्नत्वाद् घृतं पयःशब्देनोच्यते । महीति गोनाम ॥ २० ॥

पात्र्यां पिष्टान्यावपति देवस्य त्वेति । तदेतद् हस्ताभ्यामित्यन्तं व्याख्यातम् [ मन्त्र १० ] । एतानि पिष्टानि संवपामि पात्र्यां सम्यक् क्षिपामि । उपसर्जनीः प्रतिगृह्णाति समाप इति । पिष्टसंवपनीया आपः उपसर्जन्यः । आप उपसर्जनीरूपाः ओषधीभिः पिष्टरूपाभिः संपृच्यन्तां संगच्छन्तां सम्यगेकीभवन्तु । तथा ओषधयः पिष्टाख्याः रसेन उपसर्जनीरूपेण उदकेन संपृच्यन्ताम् । तथा रेवतीः रेवत्यः आपः जगतीभिः पिष्टाख्याभिः संपृच्यन्ताम् । रेवत्य आपो जगत ओषधय इति श्रुतेः । मधुमतीः माधुर्योपेता आपः मधुमतीभिः माधुर्योपेताभिः पिष्टरूपौषधीभिः संपृच्यन्ताम् ॥ २१ ॥

संयौति जनयत्यै त्वेति । अपां पिष्टानां च मिश्रीकरणं संयवनम् । हे जलपिष्टरूपपदार्थद्वय त्वां संयौमि सम्यङ् मिश्रीकरोमि । किमर्थम् । जनयत्यै यजमानस्य प्रजोत्पादनार्थम् । जलपिष्टयोर्यथा मिश्रणं तथा शुक्रशोणितमिश्रणेन यजमानस्य प्रजोत्पत्तिर्भवति । तदर्थं त्वां संयौमि । इदमग्नेरिति मिश्रीकृतस्य पिष्टस्य अवदानाङ्कितं पिण्डद्वयं कृत्वा पुनरमेलयिष्यन् इदमग्नेः अग्निसंबन्धि भवतु इति प्रथमं पिण्डं स्पृशेत् । इदमग्नीषोमयोर्भवतु इति द्वितीयं स्पृशेत् । इये

त्वेत्याज्यमधिश्रयति । हे आज्य इषे इष्यमाणवृष्ट्यर्थं त्वा त्वामधिश्रयामीति शेषः । आज्यप्रविलापनार्थं तत्पात्रस्याग्नौ स्थापनमधिश्रयणम् । पुरोडाशमधिश्रयति घर्मोऽसीति । हे पुरोडाश त्वं घर्मोऽसि । घर्मशब्देन दीप्यमानः प्रवर्ग्य उच्यते । श्रप्यमाणतया दीप्यमानत्वात् प्रवर्ग्योऽसि । प्रवर्ग्यः सोमयागारम्भे विधिविशेषः । तथा विश्वायुः विश्वं कृत्स्नम् आयुर्यस्मात् स विश्वायुः । यस्माद् यजमानः सर्वमायुराप्नोतीति भावः । उरुप्रथा इति पुरोडाशं प्रथयति । सर्वकपालेषु संश्लेषयितुं तं प्रसारयति । हे पुरोडाश त्वं स्वभावतः उरुप्रथाः उरु विस्तीर्णं यथा तथा प्रथते प्रसरतीत्युरुप्रथाः । अत इदानीमपि उरु प्रथस्व प्रख्यातो भव । किञ्च ते यज्ञपतिः तव यजमानः उरु विस्तीर्णं पुत्रपश्वादिभिः प्रथतां प्रख्यातो भवतु । अग्निष्ट इति अद्भिरभिमृशति । हे पुरोडाश अग्निः श्रपणाय प्रवृत्तः ते तव त्वचं त्वक्सदृशमुपरितनभागं मा हिंसीत् मा विनाशयतु । अतिदाहेन मषीभावो विनाशः सोऽत्र मास्त्वित्यर्थः । अवघातपेषणोत्थः श्रपणाज्जायमानश्च हविष उपद्रवो जलस्पर्शेन शाम्यतीति भावः । देवस्त्वेति श्रपयति । हे पुरोडाश सविता देवः वर्षिष्ठे अत्यन्तवृद्धे नाके द्युलोकवर्तिनि नाकनाम्नि अग्नौ त्वा त्वाम् अधि अधिश्रित्य श्रपयतु पक्वं करोतु । दिवि नाको नाम अग्निः रक्षोहा इति तित्तिरिवचनात् नाको नाम स्वर्गस्थोऽग्निः । यद्वा नाके स्वर्गे स्थितं पुरोडाशं नाके स्वर्गे स्थितो वा सविता देवः ॥ २२ ॥

मा भेरिति पुरोडाशमभिमृशति । हे पुरोडाश त्वं मा मेः भयं मा कार्षीः । मा संविक्थाः चलनं मा कार्षीः । अतमेरुरिति पुरोडाशं भस्मना अभिवासयति । यज्ञः यागहेतुः पुरोडाशः अतमेरुः भूयात् । भस्माच्छादनेन ग्लानिरहितो भवतु । तमु ग्लानौ । ताम्यतीति तमेरुः । न तमेरुरतमेरुः । यजमानस्य प्रजा पुत्रपौत्रप्रपौत्रादिः अतमेरुः ग्लानिरहिता भूयात् । पात्र्यङ्गुलिप्रक्षालनमाप्त्येभ्यो निनयति त्रितायेति । हे पात्र्यङ्गुलिप्रक्षालनोदक त्रिताय त्रितनाम्ने देवाय त्वां निनयामीति शेषः । तथा द्विताय त्वा निनयामि । तथा एकताय त्वा निनयामि । पूर्वं कुतश्चिद् हेतोः भीतोऽग्निरपः प्राविशत् । ततो देवास्तं ज्ञात्वा जगृहुः । तदा अग्निना वीर्यमप्सु मुक्तम् । तत आप्त्या उत्पन्नाः त्रितद्वितैकतसंज्ञाः । ते देवैः सह चरन्तो यज्ञे पात्रीप्रक्षालनजललक्षणं भागं लेभिरे । इत्येवं श्रुतिकथा अत्रानुसंधेया ।। २३ ।।

देवस्य त्वेति स्फ्यमादत्ते । स्फ्यो यज्ञसाधनविशेषः । देवस्य त्वेति व्याख्यातम् [ मन्त्र १० ] । देवेभ्यः देवोपकारार्थम् अध्वरकृतम् । अध्वरं करोतीति अध्वरकृत् वेदिखननादिद्वारेण । तम् । आददे स्फ्यमहं गृह्णामि । तं सतृणं सव्ये कृत्वा दक्षिणेन आलभ्य जपति इन्द्रस्य बाहुरिति । हे स्फ्य त्वमिन्द्रस्य दक्षिणो बाहुरसि । किंभूतः स्फ्यः । सहस्रभृष्टिः । भृष्टिः मर्जनं पाकः मारणमिति यावत् । सहस्रसंख्याकानां शत्रूणां भृष्टिर्यस्य स सहस्रभृष्टिः । तथा शततेजाः । शतं तेजांसि यस्य सः । बहुधा दीप्यमानः ।

किञ्च वायुरसि । वायुसदृशोऽसि । अत एव तिग्मतेजाः तीक्ष्णतेजाः । यथा वायुर्वह्निं प्रदीप्य तीव्रां ज्वालामुत्पादयन् तीव्रतेजा भवति एवं स्फ्योऽपि स्तम्बच्छेदरूपं कर्म कुर्वंस्तीव्रतेजा उच्यते । तथा द्विषतो वधः । हन्तीति वधः । कर्मद्वेषिणामसुरादीनां हन्तेत्यर्थः ॥ २४ ॥

पृथिवि देवयजनीति पृथिवीं प्रहरति । हे पृथिवि हे देवयजनि । देवा यस्याम् इज्यन्ते सा देवयजनी तस्याः संबोधने हे देवयजनि । ते तव ओषध्यास्तृणरूपाया मूलमहं मा हिंसिषं मा विनाशयामि । व्रजं गच्छेति पुरीषमादत्ते । स्फ्यप्रहारोत्पन्ना मृत् पुरीषमुच्यते । हे पुरीष त्वं व्रजं गच्छ । व्रजन्ति गच्छन्ति स्थातुं गावो यत्र स देशो व्रजः तं गच्छ । किंभूतम् । गोष्ठानम् । गवां स्थानम् । वर्षतु त इति वेदिं प्रेक्षते । हे वेदे ते तुभ्यं त्वदर्थं द्यौः द्युलोकाभिमानी देवो वर्षतु जलसेकं करोतु । वर्षणेन खननजनितदुःखशान्तिरस्तु इत्यर्थः । बधानेति स्फ्योत्खातां मृदमुत्करे करोति । हे देव सवितः योऽस्मान् द्वेष्टि वयं च यं शत्रुं द्विष्मः तमुभयविधं शत्रुं परमस्यां पृथिव्यां बधान । परमा अन्तिमा यत्र अन्धतामिस्रो नरकः तत्र । कैर्बन्धनं कर्तव्यं तदाह । शतेन पाशैः शतसंख्याकाभिः बन्धनरज्जुभिः । किंच अस्माद् अन्धतामिस्रात् नरकात् तं मा मौक् कदाचिदपि मा मुञ्च ॥ २५ ॥

अपाररुमिति द्वितीयवारं प्रहरति । पृथिव्यै देवयजनात् पृथिव्याः संबन्धिनो देवयजनात्स्याद् वेदिस्थानात् अररुम् अररुनामानम् असुरम् अप वध्यासम् अपनीय यथा हतो

भवति. तथा करवाणि । व्रजं गच्छेति पूर्ववत् [मन्त्र २५] । अभिन्यस्यति अग्नीद्[१] उत्करम्[२] अररो दिवमिति । हे अररो त्वं दिवं द्युलोकं मा पप्तः मा गमः । तृतीयवारं प्रहरति द्रप्सस्ते द्यामिति । हे वेदिदेवते ते तव पृथिवीरूपाया यो द्रप्सः उपजीव्यो रसः द्यां द्युलोकं मा स्कन् मा स्कन्दतु मा गच्छतु । व्रजं गच्छेति पूर्ववत् [मन्त्र २५] ॥ २६ ॥

पूर्वं प्रतिगृह्णाति गायत्रेण त्वेति । यस्मात् प्रदेशात् अररुर्निष्कासितस्तत्र वेदेः इयत्तां निश्चेतुं दक्षिणादिदिक्त्रये स्फ्येन रेखात्रयकरणं पूर्वः परिग्रहः । विष्णुर्देवता मन्त्रत्रयस्य । हे विष्णो त्वा त्वां गायत्रेण छन्दसा गायत्र्यादिच्छन्दस्त्रयरूपतया भावितेन स्फ्येन दिक्त्रये प्रतिगृह्णामि । ततः छन्दोदेवताः दिक्त्रये असुरेभ्यस्त्वां पालयिष्यन्ति । उत्तरं परिगृह्णाति सुक्ष्मा चासीति । वेदिखननात् पूर्वं क्रियमाणः पूर्वः परिग्रहः पश्चात् क्रियमाणः उत्तरः परिग्रहः । तत्रापि पूर्ववत् दिक्त्रये स्फ्येन रेखात्रयं कार्यम् । हे वेदे त्वं सुक्ष्मा शोभना भूमिः शिवा शान्ता चासि । खननेन अश्मादिदोषनिवर्तनं भूमेः शोभनत्वम् । उग्रस्य असुरस्य निष्कासनेन शान्तत्वम् । एकोऽयं मन्त्रः । स्योना सुखरूपा चासि । सुषदा । सुष्ठु सीदन्ति देवा यस्यां सा सुषदा । सम्यगुपवेशनयोग्या चासि । द्वितीयोऽयं मन्त्रः । ऊर्जस्वती पयस्वती चासि । ऊर्जःशब्दोऽन्नवाची पयःशब्दस्तद्विकारदध्यादिवाची तदुभयवती । तृतीयोऽयं मन्त्रः ॥ २७ ॥

---

१. अग्नीद् एतन्नामक ऋत्विग्विशेष. ।
२. उत्करम् उत्खातं मृत्समूहम् ॥

वेदिमनुमार्ष्टि पुरा क्रूरस्येति । अत्र इयमाख्यायिका मन्त्रेऽभिप्रेता । कदाचिद् देवानामसुरैः सह संग्राम उपस्थितः । तदा देवैः मिथो मन्त्रितम् । यद् अस्या भूमेरुत्कृष्टं देवयजनस्थलं तच्चन्द्रे संस्थाप्य युद्धं कुर्मः । तत्र यद्यप्यस्माकं पराजयः स्यात् तदा देवयजने यागं विधाय पुनर्दैत्यपराजयं करिष्याम इति । एवं संमन्त्र्य भूमेः सारभागं देवयजनं चन्द्रे स्थापयामासुः । तत् कृष्णवर्णमिदानीमपि दृश्यते । विरप्शीति महन्नाम । विविधं रपति वेदत्रयरूपेण शब्दं करोतीति विरप्शी । यज्ञो वेदित्वं प्राप्तो विष्णुः संबोध्यते । हे विरप्शिन् विष्णो परमेश्वर त्वं शृणु । अनुगृहाणेति शेषः । क्रूरशब्दोऽत्र संग्रामवाची । विविधं सर्पन्ति योधा यस्मिन् इति विसृप् । पञ्चम्यर्थौ षष्ठ्यौ । विसृपो नानायोधयुतात् क्रूरात् युद्धात् पुरा देवाः जीवदानुं जीवं ददातीति जीवदानुः तां जीवस्य धात्रीं सारभूतां यां पृथिवीम् उदादाय ऊर्ध्वं गृहीत्वा स्वधाभिः वेदैः सह चन्द्रमसि इन्दौ ऐरयन् प्राक्षिपन् स्थापयामासुः ताम् तामेव चन्द्रस्थां पृथिवीम् अनुदिश्य दर्शनेन संपाद्य सैव भूमिः अस्यां वेद्यां विद्यते इति भावयित्वा धीरासः धीराः मेधाविनः यजन्ते यागं कुर्वन्ति । स्वधाशब्दो यद्यप्यन्नवाची तथाप्यत्र अन्नहेतुभूता वेदत्रयी कथ्यते । अनेन मन्त्रेण खातायां वेद्यां लोष्टकृतवैषम्यनिवृत्तये समीकरणरूपं मार्जनं कुर्यात् । प्रोक्षणीरासादयेति अग्नीध्रं प्रति प्रैषः । प्रोक्ष्यन्ते आभिरिति प्रोक्षण्यः आपः ता आसादय वेद्यां स्थापय । द्विषतो वध इति स्फ्यमुदञ्चं प्रहरति । हे स्फ्य त्वं द्विषतः शत्रोर्वधोऽसि हिंसकोऽसि ॥ २८ ॥

अथ स्रुवमादत्ते । तं प्रतपति प्रत्युष्टमिति । तदेतद् व्याख्यातम् [मन्त्र ७] । तं संमार्ष्टि अनिशितोऽसीति । हे स्रुव त्वम् अनिशितोऽसि अतीक्ष्णीकृतोऽसि । अस्मद्विषये तीक्ष्ण उपद्रवकारी न भवसीत्यर्थः । सपत्नक्षित् । सपत्नान् अस्मच्छत्रून् क्षिणोति हिनस्तीति सपत्नक्षित् । अत एव त्वां संमार्ज्मि सम्यक् शोधयामि । किंभूतं त्वाम् । वाजिनम् । वाजः अन्नमस्यास्तीति वाजिनं यज्ञद्वारा अन्नहेतुत्वाद् अन्नवन्तम् । यद्वा वाजो यज्ञस्तद्वन्तम् । किमर्थं समार्ज्मि । वाजेध्यायै । वाजस्य इध्यायै यज्ञस्य दीप्त्यै प्रकाशनार्थम् । शोधितेन स्रुवेण आज्ये गृहीते हुते च सति अग्निर्दीप्यते । तद्दीप्त्या आहुतिफलभूतमन्नं प्रकाशितं भवतीत्यर्थः । स्रुचं संमार्ष्टि प्रत्युष्टमिति । स्त्रीत्वं विहाय सर्वं पूर्ववत् । जुहू-उपभृद्-ध्रुवसंज्ञास्तिस्रः स्रुचः । ताः सर्वाः अनेन मन्त्रेण प्रतप्य वेद्यां स्थापनार्थम् अध्वर्यवे दीयन्ते ॥ २९ ॥

योक्त्रेण पत्नीं संनह्यति । अदित्यै रास्नासीति । हे योक्त्र अदित्याः संबन्धिनी या रास्ना सा त्वमसि । रास्ना रशना । दक्षिण पाशमुत्तरे प्रतिमुच्य ऊर्ध्वमुद्गूहति विष्णोर्वेष्य इति । हे दक्षिणपाश त्वं विष्णोः यज्ञस्य वेष्योऽसि व्यापकोऽसि । आज्यमुद्वासयति ऊर्जे त्वेति । हे आज्य त्वामुद्वासयामि । किमर्थम् । ऊर्जे उत्तमरसलाभाय । विलापितं घृतं सुस्वादु भवतीति । पत्नी आज्यमवेक्षते अदब्धेनेति । हे आज्य अदब्धेन अनुपहिंसितेन चक्षुषा त्वामवपश्यामि । अवाचीनं यथा तथा अधोमुखी सती

पश्यामि । किञ्च हे आज्य त्वमग्नेः जिह्वासि । यदाज्यमग्नौ हूयते तदा जिह्वेव ज्वालोत्पद्यते अतस्त्वम् अग्नेर्जिह्वा । किंभूता । देवेभ्यः सुहूः । सुष्ठु हूयन्ते आहूयन्ते अनया सा सुहूः । ज्वालां दृष्ट्वा देवाः आयान्तीति । उपकृत्य प्रत्युपकारं प्रार्थयते धाम्ने धाम्ने इति । अतो मे मम धाम्ने धाम्ने भव । तथा यजुषे यजुषे च भव । धाम स्थानम् । मम यज्ञस्य यावन्ति स्थानानि भवन्ति यावन्ति यजूंषि तावन्ति व्याप्नुहीत्यर्थः ॥ ३० ॥

आज्यमुत्पुनाति सवितुस्त्वेति । व्याख्यातमेतत् [ मन्त्र १२ ] । प्रोक्षणीरुत्पुनाति । सवितुर्व इति पूर्ववत् । आज्यमवेक्षते तेजोऽसीति । यो ह्येतद् भक्षयति ददाति जुहोति वा तस्य तेजःप्रभृतीनि भवन्तीति वाक्यार्थः । यद्वा एतद्गुणयुक्तमाज्यमस्तीति वाक्यार्थः । आज्यं गृह्णाति धामेति । हे आज्य त्वं धाम स्थानमसि । धीयते स्थाप्यते चित्तवृत्तिर्देवैरत्रेति धाम । तथा नाम । नामयति आत्मानं प्रति सर्वाणि भूतानीति नाम । आज्यं दृष्ट्वा सर्वेऽप्यत्तुं नमन्ति । तथा देवानां प्रियम् इष्टम् । अनाधृष्टम् अनभिभूतम् । देवयजनम् । देवा अनेन इज्यन्ते इति देवयजनम् । ईदृशं त्वमसि इत्यतः त्वां गृह्णामीति शेषः ॥ ३१ ॥

---

३६

शु. य. वा. अ. ३४.

यत् मनः जाग्रतः पुरुषस्य दूरम् उदैति उद्गच्छति । चक्षुराद्यपेक्षया मनो दूरगामीत्यर्थः । यच्च दैवं देवो विज्ञानात्मा सोऽनेन गृह्यते इति दैवम् । तदु । यदः स्थाने तच्छब्दः उकारश्चार्थः । यच्च मनः सुप्तस्य पुंसः तथैव एति यथा गतं तथैव पुनरागच्छति स्वापकाले सुषुप्तावस्थायां पुनरागच्छति । यच्च दूरंगमं दूरं गच्छतीति दूरंगमम् अतीतानागतवर्तमानव्यवहितविप्रकृष्टग्रहीतृ । यच्च ज्योतिषां प्रकाशकानां श्रोत्रादीन्द्रियाणामेकमेव ज्योतिः प्रकाशकं प्रवर्तकम् । मनःप्रवर्तितान्येव श्रोत्रादीन्द्रियाणि स्वविषये प्रवर्तन्ते इत्यर्थः । तत् मे मनः शिवसंकल्पमस्तु । शिवः कल्याणकारी धर्मविषयः संकल्पो यस्य तत् तादृशमस्तु ॥ १ ॥

येन मनसा मनीषिणः मेधाविनः यज्ञे कर्माणि कुर्वन्ति । किंभूताः मनीषिणः । अपसः अपस्विनः कर्मवन्तः कर्मनिष्ठा इत्यर्थः । पुनः किंभूताः । विदथेषु यज्ञविधि-विधानेषु धीराः धीमन्तः । किञ्च यत् मनः अपूर्वम् । न विद्यते पूर्वम् इन्द्रियं यस्मात् तत् अपूर्वम् । इन्द्रियेभ्यः पूर्वं मनसः सृष्टेः । यच्च मनः यक्षं यष्टुं शक्तं पूज्यं वा । यच्च मनः प्रजानां प्राणिमात्राणाम् अन्तः । तन्मे मनः इति पूर्ववत् [मन्त्र १] ॥ २ ॥

यत् मनः प्रज्ञानं प्रकर्षेण ज्ञानजनकम् । उत अपि च यत् मनः चेतः चेतयितृ ज्ञापयितृ । यद्वा विशेषप्रतिपत्तिः प्रज्ञा सामान्यप्रतिपत्तिः चेतः इति यत् मनः सामान्यविशेषज्ञानजनकम् । यच्च मनः धृतिः धैर्यरूपम् । यच्च मनः प्रजासु अमृतम् अन्तर्ज्योतिः । येन च विना किंचिदपि कर्म न क्रियते । तन्मे मनः इति पूर्ववत् [ मन्त्र १ ] ॥ ३ ॥

अमृतेन नित्येन शाश्वतेन येन मनसा भूतं भूतकालीनं भुवनं वर्तमानकालीनं भविष्यत् भविष्यत्कालीनम् इदं सर्वं वस्तुजातं ज्ञातम् । येन च होतृमैत्रावरुणादिसप्तहोतृमान् अग्निष्टोमः यज्ञः तायते तन्यते क्रियते । तन्मे मनः इति पूर्ववत् [ मन्त्र १ ] ॥ ४ ॥

यस्मिन् मनसि ऋचः प्रतिष्ठिताः । यस्मिन् सामानि यजूंषि च प्रतिष्ठितानि । मनसः स्वास्थ्ये एव वेदत्रयीस्फूर्तेः । कथमिव । रथचक्रनाभौ आराः इव । किंच यस्मिन् मनसि प्रजानां सर्वं चित्तं ज्ञानम् ओतम् पटे तन्तुसन्तानमिव स्थितम् । तन्मे मनः इति पूर्ववत् [ मन्त्र १ ] ॥ ५ ॥

यत् मनः यथा सुपारथिः अश्वान् अत्यर्थं नयति तथा मनुष्यान् अत्यर्थम् इतस्ततः सर्वतश्च नयति । यच्च मनः सुसारथिः यथा वाजिनः वेगवतः अश्वान् अभीशुभिः प्रग्रहैः नियमयति तथा मनुष्यान् नियमयति । उपमाद्वयं नयननियमनरूपकार्यद्वयज्ञापनार्थम् । यच्च मनः हृदि प्रतिष्ठितम् अजिरं जरारहितं जविष्ठं वेगवच्च । तन्मे मनः इति पूर्ववत् [ मन्त्र १ ] ॥ ६ ॥

---

## ३७

*कृ. य. तै. का. ३. प्रपा. ५. अनु. ६

हे पत्नि त्वां पयसा घृतेन च निमित्तभूतेन संनह्यामि तदुभयसिद्ध्यर्थं सम्यग् योक्त्रेण बध्नामि । तथोषधीभिः सहितां अप उद्दिश्य तदुभयसिद्ध्यर्थं त्वां संनह्यामि । प्रजया निमित्तभूतया अहमध्वर्युरद्यास्मिन् कर्मणि त्वां संनह्यामि । अस्मे, अस्मासु वाजमन्नं सनवः सनितुं दातुं सा पत्नी दीक्षिता भवतु ॥

ब्रह्मणो ब्राह्मणस्य यजमानस्य पत्नी प्रैतु पत्नीशालाया निर्गत्य प्रकर्षेण गच्छतु । [ वर्णेन यथा शोभना दृश्यते तथा वेदिं सीदतु यज्ञवेदिमुपगच्छतु । ] ॥

अथाहम् इह स्वे लोके स्थाने विशा उपविशामि । कीदृशी । अनुकामिनी यजमानस्य आनुकूल्यं कामयमाना ॥

हे अग्ने सुप्रजसः शोभनापत्याः सुपत्नीर्धर्मपत्न्यो वयमदब्धासः केनाप्यतिरस्कृताः सत्यः त्वामुपसेदिम तव समीपे उपविष्टाः स्मः । कीदृशं त्वाम् । सपत्नदम्भनं वैरिनाशकम् । अदाभ्यं केनाप्यतिरस्कार्यम् ॥

सुकेतः शोभनज्ञानयुक्तः सविता प्रेरकोऽन्तर्यामी यं योक्त्ररूपं वरुणस्य पाशं पूर्वमबध्नीत तमिमं विष्यामि

* अयं संक्षेपः कृष्णयजुर्वेदीयतैत्तिरीयसंहितायाः श्रीसायणाचार्यविरचितवेदार्थप्रकाशाख्यभाष्यात् कृतः ॥

विमुञ्चामि । ततः सुकृतस्य फलभूते उत्तमे लोके धातुश्च परमेश्वरस्य योनौ स्थाने पत्या सह मे स्योनं सुखं करोमि ॥

हे पत्नि प्रेहि शालामुखीयस्थानात् निर्गत्य पन्नेजनीरपः [= पादप्रक्षालनार्थं जलम्] आनेतुं प्रकर्षेण गच्छ । उदेहि विलम्बमकृत्वा उत्थाय गच्छ । ऋतस्य वामीः यज्ञस्य प्रेरकोऽयमग्निस्ते गमनमनुमन्यमानोऽग्रं नयतु पुरतः प्रेरयतु । अदितिर्भूमिश्च मध्यं ददताम् उभयोः पार्श्वयोर्मध्येऽवस्थितं मार्गं प्रयच्छतु । त्वं च रुद्रावसृष्टासि क्रूरेणोपद्रवकारिणा देवेन विमुक्तासि । अतो युवा नामासि युवतिर्वा बाधकेभ्यः पृथग्भूता वासि । इत्यमाकारयन्तं मां त्वष्टारं मा हिंसीर्मा बाधस्व ॥

हे आपो वो युष्मान् पन्नेजनीर्गृह्णामि । किमर्थम् । वस्वादिदेवप्रीत्यर्थम् । किंच यज्ञार्थमपि पन्नेजनीर्वो गृह्णामि ॥

अत्र सादयामीत्येतावानाम्नातो मन्त्रः । तस्य च शेषत्वेन वसुभ्य इत्यादिकं गृह्णामीतिपदव्यतिरिक्तं सर्वमनुपज्य पूर्ववद् व्याख्येयम् ॥

हिंकारमुच्चार्य अनन्तरमुद्गाता यथा पत्नीं पश्यति तथा अध्वर्युरिमं मन्त्रमुच्चारयन् प्रदर्शयेत् । हे अग्ने विश्वस्य ते संदृशि विश्वात्मकस्य तव कटाक्षवीक्षणे सति । तथा विश्वमस्य अस्तीति विश्वावान् । वृष्णियं बलमस्य अस्तीति वृष्णियावान् । तादृशस्य तव वीक्षणे सति वामीर्वननीयस्य अनुष्ठानस्य प्रवर्तकोऽहं विश्वा रेतांसि

वहुपुत्रकारणानि सर्वाण्यपि वीर्याणि धिपीय अनुक्रमेण पत्न्यां स्थापयेय '॥

अयं यज्ञो देवान् अगन् प्राप्नोत् । देवीर्द्योतमाना आपो देवेभ्योऽस्मदीयं यज्ञं नितरामशिषन् विस्पष्टमुक्तवत्यः । अस्मिन् यजमाने सुन्वति सोमाभिषवं कुर्वति स्वाहाकृताः स्वाहाकारेण संपादिताः समुद्रसमाने स्वर्गेऽवस्थिता आशिषः फलविशेषा ये संपद्यन्ते ते सर्वेऽप्यनुक्रमेण गन्धर्वं पत्न्या मम गन्धर्ववत् प्रियं यजमानमातिष्ठत प्राप्नुवन्तु । वातस्य यज्ञप्रवर्तकस्य वायोः पत्मन् पतने प्रेरणे सति इडः फलसाधनभूताः स्तोत्रविशेषा [अनु] ईडिताः ऋत्विग्भिः प्रयुक्ताः । तस्मात् तत् फलं सर्वं यजमानः प्राप्नोत्विति तात्पर्यार्थः ॥

अत्र विनियोगसंग्रह :—

सं त्वा पत्न्यां योक्त्रबन्धः प्रैतु शालामुखे नयेत् ।
अथाहमुपविश्यैषा सुप्रजेति जपेदथ ॥
इमं काले योक्त्रमोकः प्रेहि पत्नीमुदानयेत् ।
वसु पन्नेजनीः पत्नी गृहीत्वा तेन सादयेत् ॥
विश्वस्य पत्नीमुद्गात्रा संख्यापयति सा त्वगन् ।
अपः प्रवर्तयत्यूरावत्र मन्त्रा दश स्मृताः ॥



युगशब्दः कालवाची । त्रियुगं वर्षाः शरद् वसन्त इति कालत्रयमुद्दिश्य पुरा सृष्ट्यादौ देवेभ्यः सकाशाद् या ओषधय उत्पन्नाः बभ्रूणां प्राणिभरणसमर्थानां परिपाकेन पिङ्गलवर्णानां वा तासामोषधीनां शतं धामानि शतसंख्याकान् जातिभेदान् सप्त च विशेषाकारेण ग्राम्यान् आरण्यांश्च सप्त धान्यभेदान् अवेक्ष्य मन्दामि हृष्यामि ॥ १ ॥

हे अम्ब मातृस्थानीया ओषधयो वो युष्माकं धामानि जातिभेदाः क्षेत्राणि वा शतं सन्ति । उत अपि च वो युष्माकं रुहः प्ररोहा अङ्कुराश्च सहस्रं सन्ति । शतं सहस्रमित्याभ्यामपरिमितत्वमुपलक्ष्यते । अथैवं बहुभेदोपेतत्वे सति शतसंख्याकाः क्रतवो याभिर्युष्माभिर्निष्पाद्यन्ते तादृश्यः शतक्रत्वो यूयं मे मदीयमिमं यजमानमगदं कृत क्षुत्पिपासादिरोगरहितं कुरुत ॥ २ ॥

अत्र ओषधयो नानाविधैर्विशेषणैः प्रशस्यन्ते । पुष्पावतीः काश्चिदोषधयः पुष्पमात्रपर्यवसायिन्यो न तु फलन्ति । प्रसूवतीरन्या ओषधयः पुष्पपूर्वकफलोत्पत्ति [ पर्यन्त ]—स्थायिन्यः । फलिनीरपराः काश्चिदोषधयः पुष्पं विना केवलेन फलेन युक्ताः । उत अपि च अफलाः अन्याः काश्चिदोषधयः फलेन तद्धेतुपुष्पेण च विरहिताः । वीरुधः काश्चिदोषधयो लतारूपाः । पारयिष्णवः फलपाकान्तत्वं परित्यज्य पारं

बहुसंवत्सरावसानं प्राप्तुं शीलं यासां तास्तथाविधाः । तद् यथा नागवल्लीप्रभृतयः । एताः सर्वा ओषधयोऽश्वा इव सजित्वरीः । यथाऽश्वा युद्धे बहवः सह शीघ्रं गत्वा जयशीला भवन्ति एवमोषधयोऽपि बह्व्यः सहोत्पन्नाः फलपर्यन्तलक्षणजयशीला भवन्ति ॥ ३ ॥

हे मातरो मातृसमाना देवीर्देव्यः । इतिशब्दोऽत्र हेत्वर्थे वर्तते । यस्मादोषधीर्यूयमोषधयस्तत् तस्माद् वो युष्मानुपब्रुवे प्रार्थये । ओषो दाहः फलपाको धीयते स्थाप्यते यासु ता ओषधयः । अतो युष्मान् प्रति प्रार्थनमुचित-मित्यर्थः । कथं प्रार्थनमिति तदुच्यते । रपांसि विघ्नतीः पापानि विनाशयन्त्यो रपश्चातयमानाः पापफलं दुःखमपि विनाशयन्त्य इत प्राप्नुत ॥ ४ ॥

हे ओषधिदेवताः वो युष्माकमश्वत्थे निषदनं पर्णे पलाशवृक्षे वो युष्माकं वसतिः कृता निवासकारणं गृहं कृतम् । देवताधिष्ठितत्वादेव लोके अश्वत्थवृक्षः प्रदक्षिणा-नमस्कारादिभिः पूज्यते पलाशवृक्षश्चेध्मादिरूपेण कर्मसाधनं संपन्नः । ईदृश्योपि यूयं गोभाज इत् भवदीयस्थावररूपेण भूमिभाज एव भूत्वा असथ किल स्थिता इत्येतल्लोके प्रसिद्धम् । तत् किमर्थमिति तदुच्यते । यद् यस्मात् कारणात् पूरुषं मनुष्यं सनवथ अन्नदानेन पोषयथ तस्मादेवं स्थावररूपावस्थानम् इत्यर्थः ॥ ५ ॥

यद् यदा अहं वाजयन् अन्नमिच्छन् इमा ओषधीर्हस्ते आदधामि तदानीमेव यक्ष्मस्य क्षुधादिरोगस्य आत्मा स्वरूपं पुरा नश्यति भोजनात् प्रागेव नष्टसदृशो भवति । तत्र

दृष्टान्तः । यथा लोके जीवगृभो धीवरैर्जीवस्य शशादेर्ग्रहणात् पुरा भीतः शशः कर्णाभ्यां नेत्रे पिधाय भूमिसंश्लिष्टो मृत इव तिष्ठति तद्वत् ॥ ६ ॥

यद् यदा ओषधयः सर्वाः संगच्छन्ते फलदानाय क्षेत्रसंगता भवन्ति । तत्र दृष्टान्तः । राजानः समिताविव । यथा युद्धे प्रतिपक्षिणः सेनां जेतुं परस्परमनुकूला राजानः संगच्छन्ते तद्वत् । तदानीं संगतास्वोषधिषु विप्रो मेधावी रसवीर्यभावनाभिज्ञो यः पुरुषः स भिषगुच्यते क्षुधादिरोगचिकित्सक इत्यभिधीयते । कथं भिषक्त्वमिति तदुच्यते । रक्षोहा पक्वाभिरेताभिः पुरोडाशं राक्षोघ्नं कृत्वा रक्षसां हन्ता तदुपद्रवरूपं रोगं विनाशयति । अमीवचातनः ओषधिजन्यपथ्यादिभिरमीवान् रोगांश्चातयति विनाशयतीत्यमीवचातनः ॥ ७ ॥

हे ओषधयो वो युष्माकं निष्कृतिर्नाम क्षुधादिविनाशनमेव माता मातृवदुत्पत्तिनिमित्तम् । क्षुदादिकं निवारयितुमेव हि भवतीनामुत्पत्तिः । अथैवं सति यूयं संकृतीः स्थ सम्यक् स्वकार्ये क्षमा भवत । सराः क्षुदादीनामपवारयित्र्यः पतत्रिणीः पतत्रं पत्रं तस्मात् प्रत्यागमनं तेनागमनेन उपेताः स्थन भवत । यत् क्षुदादिकमामयति रोगवद्बाधते तत् निष्कृत विनाशयत ॥ ८ ॥

हे ओषधयो वो युष्माकं मध्ये अन्या काचिदोषधिव्यक्तिः अन्यामितरामोषधिव्यक्तिमवतु रक्षतु । तथा रक्षिता सा अन्यापि अन्यस्या रक्षिकाया उपावत समीपमागत्य तामप्यवतु ।

संभूयकारित्वात् परस्परक्षकत्वमुचितम् । तथाविधाः सर्वा हे ओषधयः संविदानाः परस्परमैकमत्यं गता इदं मे मदीयं वचो वाक्यं प्रार्थनारूपं प्रावत प्रकर्षेण रक्षत ॥ ९ ॥

ओषधीनां शुष्माः तदुपभोगजन्या बलविशेषा उदीरते उद्गच्छन्ति । तत्र दृष्टान्तः । गावो गोष्ठादिव । यथा गावो निवासस्थानाद् गृहादरण्यदेशं प्रत्युद्गच्छन्ति तद्वत् । कीदृशीनामोषधीनाम् । पूरुष तवात्मानं धनं सनिष्यन्तीनां हे यजमान त्वदीयं शरीरं धनमिव दातुमिच्छन्तीनाम् । यथा धनं दास्यन्ति एवमोषधयोऽपि त्वदीयशरीराकारेण परिणताः शरीरं दास्यन्तीत्यर्थः ॥ १० ॥

परिष्ठाः शरीरस्य उपरि स्थिता उदरमध्ये प्रविष्टा विश्वाः सर्वा ओषधयो अति अजीर्णादिदोषम् अतिलङ्घ्य अक्रमुः क्रान्ता देहे व्याप्ता इत्यर्थः । तत्र दृष्टान्तः । स्तेन इव व्रजम् । यथा रात्रौ गुप्तचोरो गोष्ठं प्रविश्य गामपहर्तुं सावधानो गोशालां सर्वतो व्याप्नोति तद्वत् । तनुवां शरीराणां संबन्धि यत् किंच रपो ज्वरशिरोव्याधि-गुल्मातिसारादिरूपं पापफलं यत् किंचिदस्ति तत् सर्वमोषधयः प्राचुच्यवुः विनाशितवत्यः ॥ ११ ॥

हे यजमान ते तवात्मानं शरीरं या ओषधय आतस्थुः आक्रम्य तिष्ठन्ति या ओषधयः परुःपरुराविविशुः रसरूपेण तत्तत् पर्व प्रविष्टवत्यस्ताः सर्वास्ते तव यक्ष्मं रोगं विबाधन्तां विशेषेण नाशयन्तु । तत्र दृष्टान्तः । मध्यमशीरिव । मध्यमेन स्वकीयपरकीयपक्षपातरहितेन

शास्त्रीयमार्गेण येते वर्तंते इति मध्यमशीः । तादृशो राजा दुष्टान् प्रत्युग्रो भूत्वा यथा तान् विनाशयति तद्वत् ॥ १२ ॥

श्लेष्मावरुद्धकण्ठजन्यध्वनेरनुकरणार्थोऽयं किकिशब्दः । तेन किकिना ध्वनिविशेषेण दीव्यति व्यवहरतीति रोगविशेषः किकिदीविः । स च श्लेष्मजन्यः । श्येनवत् तीव्रतरत्वात् पित्तजन्यो रोगः श्येनः । हे यक्ष्म राजयक्ष्मादिरोग त्वं पित्तजन्येन श्लेष्मजन्येन च रोगेण साकं प्रपत प्रकर्षेण नष्टो भव । तथा वातस्य ध्राज्या वातरोगस्य गत्या व्याप्त्या साकं नश्य नष्टो भव । तथा यया पीडया निहतोऽस्मि हा कष्टमिति शब्दं करोमि सा निहाका तया सह नष्टो भव ॥ १३ ॥

काचिदोषधिजातिरश्वावती । अश्वा अस्यां सन्तीति अश्वावती । ओषधिसमृद्धौ सत्यां धनद्वारेण अश्वा लभ्यन्त इत्यर्थः । अन्या काचिदोषधिजातिः सोमवती । सोमयागोऽस्यामस्तीति सोमवती । धान्यसमृद्धौ सत्यां सोमयागः कर्तुं शक्यत इत्यर्थः । अपरा ऊर्जयन्ती ऊर्जं बलं प्राणचेष्टां वा करोतीत्यर्थः । अन्या जातिरुदोजाः । उत्कृष्टमोजः अष्टमधातुरूपं यस्या सा उदोजाः । अन्नद्वारेण शरीरधातून् पोषयतीत्यर्थः । ताः सर्वा ओषधीरहमावित्सि लब्धवान् अस्मि । किमर्थम् । अस्मा अरिष्टतातये । अरिष्टस्य तातिः अरिष्टतातिः । अस्य यजमानस्य हिंसाराहित्यायेत्यर्थः ॥ १४ ॥

तदेवमोषधिवापार्था ऋचश्चतुर्दशाम्नाताः । अथात्रैव विकल्पिताः षड् ऋच आम्नायन्ते ॥

या ओषधयः फलयुक्ता याः फलरहिता याश्च पुष्परहिता याश्च पुष्पयुक्तास्ताः सर्वा बृहस्पतिप्रसूता सत्यो नः अस्मान् अंहसः पापात् मोचयन्तु ॥ १५ ॥

सोमो राजा यासां ताः सोमराज्ञ्यः । तादृश्यो या ओषधयः पृथिवीमनु प्रविष्टाः तासां मध्य इदानीमुच्यमाने हे ओषधे त्वमुत्तमासि । अतो नः अस्मान् जीवातवे जीवनौषधाय प्र सुव प्रकर्षेण प्रेरय ॥ १६ ॥

द्युलोकात् पतन्तो वृष्टिबिन्दव ओषधिरूपेणोत्पद्यन्ते । दिवः परि स्वर्गस्योपरितनप्रदेशात् अवपतन्तीः अधस्ताद् भूमौ पतन्त्य ओषधयः अवदन् एतद् वचनमुक्तवत्यः । कीदृशं वचनमिति तदुच्यते । यं जीवमश्नवामहै व्याप्नुमः स पुरुषो न रिष्याति नैव विनश्यति ॥ १७ ॥

याश्चौषधिदेवता इदं मदीयं प्रार्थनमुप शृण्वन्ति याश्चान्या ओषधिदेवता दूरं यथा भवति तथा परागताः सत्य ईषच्छृण्वन्ति ताः सर्वा ओषधिदेवता इह कर्मणि संगता भूत्वा अस्मै यजमानाय भेषजं संदत्त क्षुदादिरोगचिकित्सां सम्यक् कुरुत ॥ १८ ॥

हे ओषधयो वो युष्माकं खनिता चिकित्सार्थं युष्मदीयं मूलं ग्रहीतुं खननस्य कर्ता मा रिषन् मा विनश्यतु । अहं च यस्मै रुग्णाय चिकित्सार्थं खनामि युष्मन्मूलं ग्रहीतुं खननं करोमि सोऽपि मा विनश्यतु । किं बहुना । अस्माकं संबन्धि यद् द्विपद् चतुष्पद् वा प्राणिजातं युष्मदुपजीवति तत्सर्वं रोगरहितमस्तु ॥ १९ ॥

ओषधय ओषधिदेवताः स्वकीयेन स्वामिना सोमेन राज्ञा सह संवादं कुर्वन्ति । कथं संवाद इति तदुच्यते । यस्मै रुग्णाय चिकित्सामस्मदीयमूलादिना ब्राह्मणः करोति हे राजन् तमातुरं वयं पारयामसि व्याधेरुत्तारयामः ॥ २० ॥

तिलमाषव्रीहियवाः प्रियङ्ग्वणवो गोधूमाश्चेति सप्त ग्राम्या ओषधयः । वेणुश्यामाकनीवारजर्तिला गवीधुका मर्कटका गार्मुताश्चेति सप्त आरण्या ओषधयः । नानाविधस्यान्नस्य बीजवापेन नानाविधमन्नमाप्नोति । अत्र विनियोगसंग्रहः—

या जा ग्राम्यास्तथारण्याः कृष्टाकृष्टभुवोर्वपेत् ।
चतुर्दशभिरन्यास्तु षडत्रैव विकल्पिताः ॥



यद् यदा वर्मी कवचयुक्तो राजा समदां शत्रूणामुपस्थे समीपे याति तदा जीमूतस्य मेघस्य प्रतीकं मुखमिव भवति । सैन्यद्वयं युद्धार्थं यदा मिलति तदानीं वर्षितुं यतस्तत आगताः प्रौढा मेघा यथान्तरिक्षं सर्वमावृण्वन्ति एवं भूमिं सर्वां व्याप्तं भवतीत्यर्थः । तस्मिन् काले हे राजन् अनाविद्धया परकीयप्रहाररहितया तनुवा स्वशरीरेण युक्तो भूत्वा विजयं प्राप्नुहि । वर्मणः कवचस्य तादृशो महिमा त्वां पिपर्तु पालयतु ॥ १ ॥

वयं धन्वना धनुषा गा जयेम परकीयान् गवादीनाहराम । तथा धन्वना आजिं युद्धं जयेम । तथा धनुषा तीव्राः शूरभटोपेताः समदो मदसहिताः परकीयसेनाः जयेम । इदं धनुः शत्रोरस्मदीयवैरिणः अपकामं कृणोति कामेभ्योऽपनयोऽपकामः तं कृणोतु करोतु । किं बहुना सर्वा अपि प्रदिशः उत्कृष्टान् सर्वदिग्वर्तिशत्रून् जयेम ॥ २ ॥

इयं ज्या धनुषि आरोपिता मौर्वी वक्ष्यन्ती इव किंचिद् रहस्यं वाक्यं वदिष्यन्ती इव कर्णम् [इत् आ] गनीगन्ति कर्णसमीपमागच्छति । तत्र दृष्टान्तः । प्रियं सखायं परिषस्वजाना प्रीतियुक्तं सखिसमानं विश्रम्भव्यवहारयोग्यं भर्तारमालिङ्गन्ती योषेव शिङ्क्ते अव्यक्तं शब्दं करोति ।

सा यथा स्वकीयं योगक्षेमं शनैः कथयति तद्वदियमपि ज्या शब्दयतीत्यर्थः। कीदृशी ज्या। अधि धन्वन् धनुष उपरि वितता विशेषेण प्रसारिता समने युद्धे पारयन्ती युद्धसमाप्तिं गमयन्ती ॥ ३ ॥

[इमे आर्त्नी] ते धनुषः कोटयौ विस्फुरन्ती विस्फुरन्त्यौ पुनः पुनः प्रवर्तमाने सत्यौ संविदाने परस्परमैकमत्यं गते अमित्रान् अत्यन्तविरोधिनः शत्रूनपविध्येताम् । कीदृशे कोटयौ । समने युद्धे योषेव आचरन्ती तद्वत् मधुरशब्देन हितं बोधयन्त्यौ । पुनः कीदृशे । माता पुत्रमिव तद्वद्धितकारिण्यावित्यर्थः । उपस्थे विभृताम् ॥ [अत्र समनेव इत्यस्य पदपाठीयः पदच्छेदः समना इव इत्यतः समने युद्धे इति भाष्यकारीयविवरणं न समीचीनं प्रतिभाति । अथवा समना इत्यस्यार्थः समने भाष्यकारैः कृतः स्यात् इति] ॥ ४ ॥

अयमिषुधिर्बाणाधारः समनाऽवगत्य समने युद्धे प्राप्य चिश्चा कृणोति बाणाकर्षणवेलायामव्यक्तं ध्वनिं करोति । तस्य ध्वनेरनुकरणं चिश्चेति । कीदृश इषुधिः । बह्वीनामिषूणां पालकः । अत एवास्य पितृस्थानीयस्य पुत्रस्थानीय इषुसंघो बहुविधः । सोऽयमिषुधिः पृष्ठे निनद्धः पृष्ठभागे नितरां बद्धः प्रसूतो धानुष्केण प्रेरितो बाणाकर्षणे सङ्काः सम्यक् प्राप्ताः सर्वा अपि पृतना जयति ॥ ५ ॥

सुषारथिः सुशिक्षितोऽयं सारथिः स्वयं रथे तिष्ठन् यत्र यत्र कामयते गन्तुं तत्र तत्र पुरः पुरस्ताद् वाजिनोऽश्वान् नयति प्रेरयति । हे ऋत्विग्यजमाना अश्वधारणहेतूनां रश्मीनां

महिमानं पनायत महिम्नः वाचा स्तुतिं कुरुत । स्तुतिप्रकार उच्यते । रश्मय एते प्रग्रहाः सारथेर्मनोऽनुसृत्य पश्चाद् यच्छन्ति नियता भवन्ति । सारथेर्मनोवृत्तिः पुरस्तात् प्रवर्तते तेनैव प्रकारेण पश्चाद् अश्वानां नियमं कुर्वन्तीत्यर्थः ॥ ६ ॥

एतेऽश्वाः तीव्रानरयुच्चान् घोषान् हेषाशब्दान् कृण्वते कुर्वते । कीदृशा अश्वाः । वृषपाणयः । सेचनवाचिना वृषशब्देन शक्तिरुपलक्ष्यते । पाणिशब्दः पादलक्षकः । गन्तुं शक्ताः पादा येषां ते वृषपाणयः । रथेभिः सह वाजयन्तो रथैः सह शीघ्रं गच्छन्तः । प्रपदैः पादाग्रैः खुरैरमित्रान् वैरिणोऽवक्रामन्तः । तादृशा अश्वा अनपव्ययन्तः प्रत्यापत्तिमकुर्वन्तो भीतिरहिता इत्यर्थः । शत्रून् क्षिणन्ति हिंसन्ति ॥ ७ ॥

यत्र यस्मिन्नल्पे शकटे अस्य यजमानस्यायुधं धनुरादिकं वर्म कवचं च इत्येवमादिकं निहितं स्थापितं तस्य शकटस्य रथवाहनमिति नामधेयम् । प्रत्यागत्य रथोऽस्मिन् शकटे स्थाप्यत इति तच्छकटं रथवाहनम् । तस्य हविर्वदुपकारकत्वाद् हविष्ट्वम् । तत्र तस्मिन् रथवाहने शकटे विश्वाहा सर्वेष्वपि दिनेषु सुमनस्यमानाः सौमनस्यं प्राप्ताः वयं शर्म सुखगमनहेतुं रथमुपसदेम उपेत्य स्थापयाम ॥ ८ ॥

ये पितरोऽस्मदीयाः सन्ति त एतैर्विशेषणैर्विशिष्टाः । कानि विशेषणानीति तान्युच्यन्ते । स्वादुषंसदः अस्माभिः समर्पिते स्वादुन्यन्ने सम्यक् सीदन्ति तेन तृप्ता इत्यर्थः । वयोधाः अस्मदीयस्य वयस आयुषः स्थापयितारः । कृच्छ्रे

व्यसने प्राप्ते सति रक्षार्थं श्रीयन्ते प्राणिभिः सेव्यन्ते इति कृच्छ्रेश्रितः । शक्तीवन्तः शक्तियुक्ताः । गभीरा अगाधबुद्धयः । चित्रा विविधा हस्त्यश्वादिरूपा सेना येषां ते चित्रसेनाः । इषुभिर्योद्धुमतिबला इषुबलाः । अमृध्राः परैर्योद्धुमशक्याः । सन् विद्यमानो लोके प्रसिद्धो यः शूरः तस्मादप्यतिशूराः सतोवीराः । उरवो विस्तीर्णा धनसेनादिसमृद्धाः । व्रातं परकीयभटानां संघातं सहन्ते अभिभवन्तीति व्रातसाहाः ॥ ९ ॥

येऽस्मदीयाः पितरः ते ब्राह्मणासो ब्रह्म वेदः तदर्थपरा ब्राह्मणाः । अत एव अस्मासु सोम्यासः सोम्याः अनुग्रहपरा इत्यर्थः । यथैते पितरस्तथा द्यावापृथिवी उभे अपि अनेहसा अनेहसि सर्वस्मिन्नपि काले नः अस्मान् प्रति शिवे शान्ते अनुग्रहपरे भवतामिति शेषः । तथा ऋतावृधो यज्ञस्य वर्धयिता पूषा पोषको देवो नोऽस्मान् दुरितात् पातु । हे पितृसमूह रक्ष अस्मान् पालय । नोऽस्माकमघशंसः पापशंसनपरा निन्दका माकिरीशत निन्दितुं समर्था मा भूवन् ॥ १० ॥

पितृसंबन्धिनी येयमिषुः प्रशस्यते अस्याः इषोः सुपर्णं पृष्ठेऽवस्थितं शोभनं पतत्रं भागं वस्ते आच्छादयति । अथास्या इषोर्दन्तः शल्यं मृगदन्तवत् तीक्ष्णम् । सेयमिषुर्गोभिर्गोसंबन्धिभिः संनद्धा दृढं बद्धा । तादृशेयमिषुः प्रसूता पितृभिः प्रेरिता सती पतति सहसा गच्छति । कुत्रेति तदुच्यते । नरः पुरुषा योद्धारो यत्र यस्मिन् परसैन्ये सं च वि च द्रवन्ति प्रथमम् उत्सुकाः सन्तः प्राप्नुवन्ति पश्चाद् भीताः सन्तः पलायन्ते च । तत्रेयमिषुः

पततीति पूर्वत्रान्वयः । तादृश्यः पितृणामिषवोऽस्मभ्यं शर्म यंसन् सुखं यच्छन्तु ॥ ११ ॥

ऋजीतिशब्द इषुवाची । हे ऋजीते अस्मान् परि वृङ्ग्धि परितो वर्जितान् कुरु । नः अस्माकं तनूः अश्मा भवतु पाषाणवद् दृढा भवतु । सोमो नः अस्मान् अधि ब्रवीतु अधिका एते मान्या इति कथयतु । अदितिः शर्म यच्छतु सुखं यच्छतु ॥ १२ ॥

कशाधारिणः सारथय एषामश्वानां सानु पर्वतसानुसदृशं पार्श्वमा जङ्घन्ति सर्वतस्ताडयन्ति । तथा पृष्ठभागानुप जिघ्नते उपेत्य ताडयन्ति । तथाविधताडनहेतुभूते हे अश्वाजनि अश्वप्रेरके कशे प्रचेतसः ताडनेन प्रकृष्टगमने चित्तयुक्तान् समत्सु युद्धेषु चोदय प्रेरय ॥ १३ ॥

धानुष्कवामहस्तः केनचित् चर्मविशेषेण वेष्टयते । तत्रायं दृष्टान्तः । अहिरिव भोगैः । यथा सर्पः स्वकीयशरीरवेष्टनैः पुरुषस्य हस्तं पादं वा वेष्टयति तथायं चर्मविशेषः पुरुषस्य बाहुं पर्येति परितो व्याप्नोति । किं कुर्वन् । ज्याया आकर्णमाकृष्य सहसा मुक्ता या हेतिस्तां परिबाधमानः परितो निवारयन् । ज्यायाः प्रहारश्चर्मण्येव लगति न [redacted] बाहौ । हस्ते स्थित्वा ज्याघातेन हन्यमानश्चर्मविशेषो हस्तघ्नः । सोऽस्मान् सर्वस्मादुपद्रवात् पातु । तत्र दृष्टान्तः । विश्वा वयुनानि विद्वान् सर्वान् मार्गानभिजानानः पुमान् पुमांसमन्यं पुरुषं यथा पालयति तद्वदिति शेषः ॥ १४ ॥

हे वनस्पते वनस्पतिनिष्पन्न रथ वीड्वङ्गो हि दृढाङ्ग एव भूयाः । कीदृशस्त्वम् । अस्मत्सखा अस्मासु

सखिवत् स्निग्धः । प्रतरणः प्रकृष्टगमनसाधनभूतः । सुवीरः शोभनैर्वीरैर्भटैरुपेतः । गोभिः संनद्धोऽसि गवादिचर्मरज्जुभिः सम्यग् बद्धोऽसि । वीडयस्व अत्यन्तं दृढो भव । ते तव आस्थाता जेत्वानि जेतव्यानि परसैन्यानि जयतु ॥ १५ ॥

हे यजमान त्वं रथमिमं हविषा बलिकर्मणा यज पूजय । कीदृशं रथम् । दिवः पृथिव्याः परि ओज उद्भृतं द्युलोकाद् भूलोकाच्च सर्वतो बलमानीय संपादितम् । तथा वनस्पतिभ्योऽपि परितः सहो बलमानीय आभृतं संपादितम् । तथा अपामोज्मानम् अप्संबद्धमोज आनीय निष्पादितम् । गोभिर्गवादिविकारैः स्नावभिश्चर्ममयरज्जुभिश्च परित आवृतम् इन्द्रस्य वज्रमिव दृढीभूतम् ॥ १६ ॥

यथा इन्द्रस्य वज्रोऽत्यन्तं दृढः यथा च मरुतामनीकं सैन्यं बहुभिर्भटैरुपेतं यथा मित्रस्य गर्भः अत्यन्तं सुरक्षितः यथा वरुणस्य नाभिः केनापि तिरस्कर्तुमशक्यः तथाविधैर्गुणैरुपेत हे देव रथ नः अस्मदीयामिमां हव्यदातिं हविर्दानं जुषाणो हव्या अस्मद्दत्तानि हव्यानि प्रति गृभाय प्रत्येकं गृहाण ॥ १७ ॥

रथसमीपवर्तिदुन्दुभिरपि एवंमहिमा किंभूतः पुनर् रथ इति विवक्षया दुन्दुभिः प्रशस्यते । हे दुन्दुभे पृथिवीमुपश्वासय त्वदीयेन शब्देन पूरय । उत अपि च द्यां द्युलोकमप्युपश्वासय । पुरुत्रा पुरुषु द्युलोकभूलोकादिस्थानेषु विष्ठितं विशेषेण स्थितं सर्वं जगत् ते तव शब्दं मनुतां जानातु । स त्वमिन्द्रेण अन्यैर्देवैश्च सजूः समानप्रीतिः सन् शत्रूनस्मदीयान् दूराद् दवीयो दूरादप्यत्यन्तं दूरदेशं प्रत्यपरोध अपसारय ॥ १८ ॥

हे दुन्दुभे बलं परकीयसैन्यं प्रति आक्रन्दय आक्रोशं कुरु अमुं जहि अमुं प्रहरेत्यत्यन्तभीतिहेतुं शब्दं कुरु । नः

अस्माकम् ओजो बलम् आ धाः आधेहि सम्यक् संपादय। दुरिता बाधमानोऽस्मदीयानि दुरितानि विनाशयन् निष्टनिहि गर्जनसमानम् अस्मदुत्साहहेतुं शब्दं कुरु। दुच्छुनान् दुष्टचित्तान् पुरुषान् इतः अस्मात् अपप्रोथ अपसारय। त्वमिन्द्रस्य मुष्टिरसि वज्रधारकमुष्टिसमानोऽसि अतो वीडयस्व दृढीभव। ईदृशैर्दुन्दुभिध्वनिभिः सहितोऽयं रथः प्रवर्तते इति तात्पर्यार्थः॥ १९॥

हे इन्द्र अमूः परकीयसेनाः समन्ताद् अज प्रेरय पलायिताः कुरु। इमाः अस्मदीयाः सेनाः प्रत्यावर्तय अक्षताः सत्यो यथा प्रत्यावृत्ता भवन्ति तथा कुरु। अयं दुन्दुभिः केतुमत् ज्ञानवद् अस्मदीयो जयो यथा सर्वैर्ज्ञायते तथा वावदीति भृशं ध्वनिं करोति। अश्वपर्णा अश्वपत्रा अश्ववाहनयुक्ता इत्यर्थः। तादृशा नो नरः अस्मदीयाः पुरुषाः संचरन्ति सम्यग् विश्रम्भेण चरन्तु। अस्माकं संबन्धिनो ये रथिनः मुख्यपुरुषाः ते जयन्तु॥ २०॥

अत्र विनियोगसंग्रहः—

अथाश्वमेधे जीमूत कवचं प्रतिमुञ्चति।
धन्वना धनुरादत्ते वक्ष्यन्ती ज्याममिस्पृशेत्॥ १॥
ते संमृशेद् धनुष्कोट्यौ वह्वीतीषुधिबन्धनम्।
रथेति सारथिं तीव्रानश्वानप्यभिमन्त्रयेत्॥ २॥
रथ. काले रथः स्थाप्यो भजेत् स्वादुश्रयात् पितॄन्।
अज्यातमानमभिस्पृश्य ह्या जङ्घेत्याहरेत् कशाम्॥ ३॥
हस्तं मन्त्रयतेऽहीति रथं तु वनपञ्चभिः।
दुन्दुभिं वादयेदामूरत्र मन्त्रास्तु विंशतिः॥ ४॥

# *अथर्ववेदः

## ४०

### का. १ सू. १

यच्छब्दोत्र प्रसिद्धार्थवाची। ये लोकवेदप्रसिद्धाः त्रिसप्ताः त्रयो वा सप्त वा भावाः। तदयमर्थः। पृथिव्यादयस्त्रयो लोकाः। तेषामधिष्ठातारः अग्निवाय्वादित्याः। सत्त्वरजस्तमोगुणाः। ब्रह्मविष्णुमहेश्वराः। इत्येवमाद्याः त्रिसंख्याक्रान्ताः ये सन्ति ते सर्वे अत्र त्रिशब्देन विवक्षिताः। तथा सप्त ऋषयः। सप्त ग्रहाः। सप्त मरुद्गणाः। सप्त लोकाः। सप्त च्छन्दांसि। इत्याद्या ये सप्तसंख्याक्रान्ताः सन्ति ते सर्वे अत्र सप्तशब्देन अभिमताः। त्रिसंख्याक्रान्ताः सप्तसंख्याक्रान्ता वा इति यावत्। यद्वा। त्रिः सप्त त्रिसप्ताः। त्रिरावृत्तसप्तसंख्यायुक्ता इत्यर्थः। ते चैवं द्रष्टव्याः। प्रसिद्धसूर्याधिष्ठितप्राचीदिग्व्यतिरिक्ताः सप्तभिः सूर्यैरधिष्ठिताः सप्त दिशः। होतृप्रभृतयो वषट्कर्तारः। विवस्वद्व्यतिरिक्ताः सप्त आदित्या इति। यद्वा। सप्त सिन्धवः सप्त लोकाः सप्त दिशः इत्येवं त्रिसप्ताः। सप्त ग्रहाः सप्त ऋषयः सप्त मरुद्गणा इति वा त्रिसप्ताः। अथ वा। त्रिगुणिता

---

* अयं मन्त्रो र. श्रीसायणाचार्यविरचितात् अथर्ववेदार्थप्रकाशाख्यात् अथर्वसंहिताभाष्यात् धृतः ॥

सप्त संख्या येष्विति बहुव्रीहिः । एकविंशतिसंख्याका इत्यर्थः । ते च द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः (तै. सं. ७. ३. १०. ५) इति प्रसिद्धाः परिगृह्यन्ते । यद्वा । शरीरारम्भकाणि पञ्च महाभूतानि पञ्च प्राणाः पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि अन्तःकरणं चेति । एवम् उक्तलक्षणाः त्रिसप्तसंख्या ये देवाः परियन्ति । प्रतिदिनं प्रतिवत्सरं प्रतिकल्पं प्रतिशरीरं यथोचितं पर्यावर्तन्ते । किं कुर्वाणाः । विश्वा विश्वानि सर्वाणि रूपाणि प्रतिनियताकारान् जगदनुग्रहार्थं बिभ्रतः धारयन्तः । यद्वा । रूप्यन्ते इति रूपाणि चेतनाचेतनात्मकानि वस्तूनि बिभ्रतः अभिमतफलप्रदानेन पोषयन्तः । वाचस्पतिः वाचः वेदात्मिकायाः पतिः पालकः स्वामी । निसर्गसिद्धत्वेन नित्यानामपि वेदानां प्रथमतः तन्मुखादभिव्यक्तेस्तस्य स्वामित्वव्यपदेशः । पदद्वयमपि परस्परसापेक्षतया एकार्थतावृत्तित्वात् निरूढत्वाच्च ब्रह्मणः संज्ञा । तेषां प्रागुदीरितानां त्रिसप्तानां देवानां बला बलानि तत्तदसाधारणसामर्थ्यानि श्रुतधारणादीनि मे मम मेधादिफलार्थिनः तन्वः तन्वाः शरीरस्य अद्य इदानीं मेधाजननादिकर्मकाले दधातु विदधातु करोतु ॥ अस्य सूक्तस्य मेधाजनने विनियोगाभिधानात् तस्य च अधीतवेदशास्त्रादिधारणसामर्थ्याधानरूपत्वात् वेदानाम् अधिपतिर्ब्रह्मैव तत् कर्तुम् शक्नोतीति ब्रह्मप्रार्थनमत्र कृतम् । अनेनैवाभिप्रायेण श्रुतिरपि तद्वाचकशब्दान्तरं परिहृत्य वाचस्पतिशब्देन ब्रह्माणं निरदिक्षत् ॥ १ ॥

हे वाचस्पते वाचः वेदरूपायाः पालयितर्देव । ईदृश हे ब्रह्मन् देवेन द्योतनात्मकेन मनसा अन्तःकरणेन । अनुग्रहबुद्धचा इत्यर्थः । सकलेन्द्रियानुग्राहकत्वात् सत्त्वगुणपरिणामरूपत्वेन स्वच्छत्वाच्च मनसो द्योतनात्मकत्वम् । तादृशेन मनसा सह संगतः सन् पुनरेहि । क्रियाभ्यावृत्त्युपलक्षणार्थोयं पुनःशब्दः । अभिमतफलप्रदानार्थं पुनःपुनः मत्समीपम् आगच्छेत्यर्थः । यद्वा । वसोः वासकस्य प्राणस्य पते स्वामिन् प्रजापते नि रमय अभिमतग्रामादिलक्षणफलप्रदानेन नितराम् अस्मान् क्रीडय । यतस्त्वं वसुपतिः अतस्तव ग्रामादिविविधफलप्रदानशक्तिरस्ति । तस्मादस्मदपेक्षितानां विविधफलानां साकल्येन प्रदानात् निरन्तरं सुखयेत्यर्थः । इदानीं ग्रामादिविविधसंपत्त्या सर्वोत्कृष्टताम् आत्मनः प्रार्थयते । मय्येवास्तु त्वया दत्तं ग्रामादिकम् अनन्यसाधारण्येन मय्येव वर्तताम् । अन्ययोगव्यवच्छेदार्थोयम् एवकारः । मेधाजननस्य प्राधान्यं दर्शयितुं विप्रपरिव्राजकन्यायेन पार्थक्येन निर्दिशति मयि श्रुतमिति । श्रुतम् उपाध्यायाद् विधितोधीतं वेदशास्त्रादिकमपि मय्येव अस्तु इत्यनुषङ्गः । सम्यगधीतस्यापि वेदादेः प्रायेण विस्मरणसंभवाद् अधीतस्य धारणार्थं मह्यं मेधां प्रयच्छेत्यर्थः ॥ २ ॥

हे वाचस्पते इहैव अस्मिन्नेव साधके जने उभे श्रुतधारणलक्षणां मेधां विविधभोगहेतुभूतां ग्रामादिसंपदं च । अनयोः ऐहिकामुष्मिकफलसाधनेन व्यवस्थितत्वात् कोटिद्वयेन निर्देशः । ते उभे अपि फले अभि वि तनु अभितो विस्तीर्णे कुरु । सर्वजनेभ्योपि मय्येव प्रभूते कुर्वित्यर्थः । तत्र

दृष्टान्तः । ज्यया मौर्व्या धनुषि आरोपितया आर्त्नी इव अटन्याविव । ते यथा अभिवितन्येते तथेत्यर्थः । अनेन स्वरसतः अप्राप्तयोरपि बलात् प्रापणम् उक्तम् इति द्रष्टव्यम् । यद्वा । इहैव अभि वि तनु । अभिमतं फलम् इति शेषः । उभे आर्त्नी इवेति उभशब्दस्य उत्तरत्र संबन्धः । इदानीं प्राप्तस्य फलस्य स्थैर्यं प्रार्थयते । वाचस्पतिः विधाता नि यच्छतु स्वात्मने दत्तं निखिलम् फलं नियमयतु । यथा मां न जहाति तथा स्थिरीकरोतु इत्यर्थः । अभिमतफलस्य अयोगव्यवच्छेदम् उक्त्वा अन्ययोगव्यवच्छेदमाह । मय्येवास्तु मयि श्रुतमिति ॥ ३ ॥

वाचस्पतिः वाचः पालयिता देवः उपहूतः समीपम् आहूतः । सत्स्वपि अन्येषु देवेषु असावेव मम अभिलषित-फलप्रदातेति अस्माभिः प्रार्थित इत्यर्थः । यतो मयोप-हूतः ततो हेतोर्वाचस्पतिः स देवः अस्मान् मेधाजननादि-फलकामान् उप ह्वयताम् तत्तत् फलं प्रदातुं स्वसमीपम् आह्वयतु । यद्वा । तत्तत्फलप्राप्तिम् अभ्यनुजानातु । उपपूर्वो ह्वयतिः अभ्यनुज्ञानेऽपि वर्तते । तेन उपहूताः सन्तो वयं श्रुतेन विधितोधीतेन वेदशास्त्रादिना सं गमेमहि संगच्छेमहि । वाचस्पतिप्रसादप्राप्तया मेधया कृत्स्नं वेदशास्त्रं प्राप्नवामेति भावः । अधीतस्य वेदशास्त्रस्य स्वस्मिन् सर्वदावस्थानं प्रार्थयते मा श्रुतेनेति । श्रुतेन उक्तलक्षणेन मा वि राधिषि विराद्धो विमुक्तो मा भूवम् । सर्वदा वेदशास्त्रादिसहितो भूयासम् इत्यर्थः ॥ ४ ॥

---

जनासः हे जनाः ज्ञातुकामा यूयम् इदं वक्ष्यमाणं वस्तु विदथ जानीथ । किं तद् इत्यत आह । मन्त्रद्रष्टा ऋषिः महत् महत्त्वगुणयुक्तं व्यापकं ब्रह्म ब्रह्मणः प्रथमकार्यम् [ उदकम् ] तादृशं ब्रह्म वदिष्यति कथयिष्यति । तस्य उदकस्य प्रतिनियतं निवासस्थानं वक्तु लोकप्रतीतिसिद्धं स्थानम् अपवदति । तत् उदकात्मकं ब्रह्म पृथिव्यां भूमौ न । तिष्ठतीति शेषः । ननु लोकप्रतीतिसिद्धद्युलोक एवेत्यत आह । नो नैव दिवि द्युलोके । तिष्ठतीति शेषः । तर्हि संभाविता लोकद्वये अविद्यमानस्य तस्य खपुष्पकल्पनेत्यत आह । येन उक्तेन उदकेन वीरुधः विरोहणशीलाश्च ओषधयः प्राणन्ति जीवन्ति । उदकम् अन्तरेण अनुपपद्यमानं वीरुधां जीवनं तत्सत्तायाः कल्पकम् इति तस्य नासत्त्वम् इत्यर्थः ॥ १ ॥

आसां वीरुधां स्थाम स्थानं स्थितिहेतुभूतम् उदकम् अन्तरिक्षे द्यावापृथिव्योर्मध्यवर्तिनि लोके वर्तत इति शेषः । यद्वा । आसां वीरुज्जीवनहेतुभूतानाम् अपां स्थाम स्थानम् अन्तरिक्षे अन्तरिक्षलोके । आह च भगवान् पतञ्जलिः महाभाष्ये । अन्तरिक्षे महत् समुद्रं विततम् अस्ति इति । श्रूयते च । अस्मिन् महत्यर्णवेन्तरिक्षे (तै. सं. ४.५.११.१) इति । तत्र दृष्टान्तः । श्रान्त-

सदामिव । तपसा कृच्छ्चान्द्रायणादिना श्रान्ताः सन्तः सीदन्ति निवसन्ति सुखोपभोगार्थम् इति श्रान्तसदः यक्ष-गन्धर्वादयः । तेषां यथा अन्तरिक्षे स्थानम् । यक्षगन्धर्वाप्सरोगणसेवितम् अन्तरिक्षम् (नृ. पू. ता. १) इति श्रुतेः । तथेति पूर्वसंबन्धः । इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम् इति समासः । लोकान्तरगतत्वेन तद् उदकं भूलोकनिवासिनाम् अनुपकारकम् इत्याशङ्क्याह आस्थानम् इति । अस्य अस्मिन् लोके परिदृश्यमानस्य भूतस्य लब्धसत्ताकस्य स्थावरजङ्गमात्मकस्य जगत आस्थानम् । आ समन्तात् तिष्ठन्ति जीवन्ति अनेनेति आस्थानम् । वृष्टिद्वारा जगज्जीवनकारणम् इत्यर्थः । तस्य दुर्ज्ञानत्वमाह । तत् कारणभूतम् उदकं वेधसः विधातारो मन्वादयो जानन्ति न वा विदुः न वा जानन्ति । सर्वस्रष्टॄणां तेषामपि संदिग्धं किल तत् किमु वक्तव्यम् अर्वाचीनानां मनुष्याणां दुर्ज्ञेयम् इत्यर्थः ॥ २ ॥

तस्य उदकस्य उत्पत्तिप्रकारमाह । रोदसी हे द्यावापृथिव्यौ रेजमाने कम्पमाने जलम् उत्पादयितुं व्याप्रियमाणे । रेजृ कम्पने इति धातुः । भ्यसते रेजत इति भयवेपनयोः इति यास्कः (नि. ३. २१) । भूमिः चकाराद् द्यौश्च युवां यत् प्रागुदीरितम् उदकं निरतक्षतम् उदपादयतम् । तत् उदकम् अद्य इदानीं वर्तमानकाले सर्वदा सर्वस्मिन् काले आर्द्रम् आर्द्रगुणयुक्तं शोषरहितम् । वर्तते इति शेषः । वृष्टिद्वारा उदके निर्गतेऽपि पुनरपि अन्तरिक्षगतम् उदकम् अनुपक्षीणं

वर्तत इत्यर्थः। तत्र दृष्टान्तः। समुद्रस्येव स्रोत्याः। यथा समुद्रगामिन्यो नद्यः अक्षीणोदका वर्तन्ते तद्वद् इत्यर्थः ॥ ३ ॥

विशिष्टकारणजन्यत्वेन आप्यं श्रैष्ठ्यं सूचयितुं कारणत्वेन उक्ते द्यावापृथिव्यौ प्रशंसति। विश्वम्। कर्मणि षष्ठ्यभावश्छान्दसः। विश्वस्य अन्याम् अन्या द्यौः अभीवारः अभितो वरणं छादनम्। भवतीति शेषः। अथ वा विश्वं कृत्स्नं जगत् अन्याम् अन्यया दिवा। व्यत्ययेन द्वितीया। अभीवारः अभिवृतम्। आच्छन्नमित्यर्थः। लिङ्गव्यत्ययः। अथ वा विश्वं कर्तृभूतं जगत् अन्यां दिवमुद्दिश्य अभीवारः अभितः संभजनयुक्तं वृष्टिविषयप्रार्थनायुक्तमभूत्। तदुक्तं विश्वम् अन्यस्यां पृथिव्याम् अधिश्रितम् आश्रितं वर्तते। दिवे उक्तलक्षणाय द्युलोकाय विश्ववेदसे। वेद इति धननाम। विश्वस्य जगतो धनभूताय। वृष्टिप्रदानेन सर्वधनहेतुत्वाद् धनात्मकत्वम्। यद्वा वेद इति ज्ञाननाम। विश्वं विश्वविषयं ज्ञानं यस्याः सा तथोक्ता तस्यै। तथा पृथिव्यै विश्वाधारभूतायै। परस्परसमुच्चयार्थौ नकारौ। नमः अन्ननामैतत्। हविर्लक्षणम् अन्नं नमस्कारं वा अकरवम् करोमि ॥ ४ ॥

---

का. २ सू. १

वेनतेः कान्तिकर्मसु पाठाद् दीप्यमान आदित्यो वेन इत्युच्यते । वेनो वेनतेः कान्तिकर्मण इति हि यास्कः । गुहा गुहायाम् । गुहारूपे सर्वप्राणिहृदये यत् श्रुत्यन्तर-प्रसिद्धं सत्यज्ञानादिलक्षणं परमं ब्रह्म । यत्र यस्मिन् अधिष्ठानरूपे ब्रह्माणि विश्वम् आरोपितं कृत्स्नं जगत् एकरूपम् एकाकारं भवति । तत् उक्तलक्षणं ब्रह्म वेनः पश्यत् अपश्यत् । स्वानन्यत्वेन साक्षात्कृतवानित्यर्थः । पृश्निः । दिवश्च आदित्यस्य च साधारणनामैतत् । प्राप्तोज्जलवर्ण आदित्यः । इदं भूतभौतिकप्रपञ्चजातम् अदुहत् । अनुद्भूतनामरूपात्मकं जगत् ब्रह्मानन्यत्वेन सर्वशक्तित्वाद् उद्भूतनामरूपत्वेन व्यक्तम् अकार्षीद् इत्यर्थः । जायमानाः उत्पद्यमानाः [व्राः] । व्रियन्ते इति व्राः । आवृतात्मानः प्रजाः स्वर्विदः । स्वःशब्दाभिधेयम् आदित्यं स्वोत्पादकं विदन्ति जानन्तीति स्वर्विदः । अभ्यनूषत । आभिमुख्येन तम् आदित्यं स्तुवन्ति ॥ यद्वा । वेनः पर्जन्यात्मा मध्यमस्थानो देवः । तत् आदित्यमण्डलस्थम् उदकं पश्यति । तदेव विशिनष्टि । परमम् उत्कृष्टं गुहारूपे आदित्यमण्डले यद् उदकम् अस्ति । यत्र च उदके विश्वम् जगत् एकरूपं नैमित्तिकप्रलये उदकात्मकं भवति । अथवा यत्र यस्मिन्नुदके

विषये विश्वम् एकरूपम् उपजीव्यत्वेन एकाकारबुद्धिमद् भवति । तत् पश्यतीति संबन्धः । इदम् । उदकनामैतत् । उदकम् उक्तम् उदकं पृश्निः आदित्यः तद्रश्मिसमूहो वा अदुहत् वर्षति । जायमानाः पृश्नेरुत्पद्यमानाः स्वर्विदः सुखस्य लम्भयित्रीः व्राः व्रियमाणाः संभज्यमानाः स्वीक्रियमाणा अपः सर्वे जना अभ्यनूषत अभिष्टुवन्ति । एवम् उक्तलक्षणः सर्वज्ञ आदित्यः शुभाशुभविज्ञानं करोतु इति विज्ञानकर्मणा संबन्धः ॥ १ ॥

अमृतस्य अविनाशिनो ब्रह्मणः स्वरूपं विद्वान् जानन् गन्धर्वः । गावो रश्मयः तान् धारयतीति गन्धर्व आदित्यः । गां वेदलक्षणां वाचं वा धारयतीति गन्धर्वः । तत् उक्तलक्षणं ब्रह्म प्रवोचेत् प्रब्रवीतु । उपासकेभ्य इति शेषः । किं तद् इति तदाह । परमं क्रियाफलभूतविनश्वरस्वर्गाद्यपेक्षया उत्कृष्टं धाम पुनरावृत्तिरहितं स्थानम् । उक्तं हि भगवता । न तद् भासयते सूर्यो न शशाङ्को न पावकः । यद् गत्वा न निवर्तन्ते तद् धाम परमं मम ॥ (भ. गी. १५. ६) इति । गुहा गुहायां हृद्रूपायां स्थितं यत् तत्त्वं तद् वोचेत् इति संबन्धः । हृदयस्थस्य नित्यापरोक्षस्य परतत्त्वस्य उपदेश्यत्वम् अनुपपन्नम् इत्यत आह त्रीणि पदानीति । अस्य परमात्मनः त्रीणि पदानि गुहा गुहायां निहितानि । यद्यपि अत्र निरुपाधिकस्य ब्रह्मणो निरवयवत्वात् पादकल्पना नोपपद्यते तथापि भूतभौतिकप्रपञ्चजातात् तदुपादानस्य आत्मनो निरतिशयमहत्त्वं प्रतिपादयितुं त्रिपदत्वम् उक्तमिति अविरोधः । गुहानिहितपदार्थवत् अज्ञातम् अपरिच्छिन्नं ब्रह्म

उपदेशैकसमधिगम्यम् अस्तीति तात्पर्यार्थः । यद्वा अस्य पूर्वोक्तस्य परब्रह्मणः त्रीणि पदानि पद्यन्ते गम्यन्ते मुमुक्षुभिः प्राप्यन्त इति पदशब्देन अंशीभूता विराड्हिरण्यगर्भेश्वरा उच्यन्ते । गुहा । गूहयति संवृणोति परिच्छिनत्ति परमात्मानम् इति गुहा माया । तत्र निहितानि समष्टिरूपेण उपहितानि । गुरूपदेशजनितब्रह्मावबोधस्य प्रयोजनम् आह । यः शमदमादिसंपन्नोऽधिकारी तानि तत् पादत्रयोपलक्षितं निष्कलं ब्रह्म वेद जीवेश्वरोपाधिपरित्यागेन साक्षात्करोति स विद्वान् पितुः स्वजनकस्यापि पिता कारणभूतः असत् भवति । सर्वजगदधिष्ठानभूतब्रह्मीभावेन स्वस्यापि सर्वजगत्कारणत्वोपपत्तेः । तदुक्तं सामब्राह्मणे । शिशुर्वा आङ्गिरसो मन्त्रकृतां मन्त्रकृदासीत् । स पितॄन् पुत्रका इत्यामन्त्रयत् । इत्यादि । स्मर्यते च । अध्यापयामास पितॄन् शिशुराङ्गिरसः कविः । पुत्रका इति होवाच ज्ञानेन परिगृह्य तान् ॥ ते तमर्थमपृच्छन्त देवानागतमन्यवः । देवाश्चैतान् समेत्योचुर्न्याय्यं वः शिशुरुक्तवान् ॥ (मनु. २. १५१–१५२) इति । अथ वा तानि विराड्हिरण्यगर्भेश्वरतत्त्वानि वेद प्रणवावयवैः अकारादिभिः व्यष्टिरूपाणां विश्वतैजसप्राज्ञानां समष्टिरूपविराडादितादात्म्यज्ञानपुरःसरं तुरीयं वस्तु यो वेद स पितुः पिता असद् इति पूर्ववत् ॥ २ ॥

स मूर्तात्मकः परमात्मा नः अस्माकं पिता पालयिता । न केवलं पालकः किन्तु जनिता जनयिता उत्पादकः । उत अपि च सः उक्त एव बन्धुः भ्रात्रादिरूपो बन्धुवर्गः । इदानीं तस्य सर्वज्ञताम् आह । धामानि कर्मफलभूतस्वर्गादि-

स्थानानि । तत्र स्थितानि विश्वा विश्वानि सर्वाणि । भवन्ति सत्तां लभन्ते उत्पद्यन्ते इति भुवनानि भूतजातानि च वेद। स्वाध्यस्तं कृत्स्नप्रपञ्चं स्वाभिन्नं जानातीत्यर्थः । तथा य उक्तः परमात्मा एक एव देवानाम् इन्द्रादीनां स्वसृष्टानां *नामधाः । इन्द्रमित्रादीनि नामानि दधाति विदधाति करोतीति नामधाः । यद्वा इन्द्राग्न्यादिदेवतात्मकः सन् तत्तन्नामानि स्वयमेव धत्ते इति नामधाः । तथा चाम्नायते । तदेवाग्निस्तद् वायुस्तत् सूर्यस्तदु चन्द्रमाः । तदेव शुक्रं तद् ब्रह्म तदापस्तत् प्रजापतिः ॥ ( तै. आ. १०. १. २. ) इति । इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् । एकं सद् विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥ (ऋ. १. १६४. ४३) इति उक्तलक्षणम् आत्मानं विषयीकृत्य सर्वाणि [भुवना] भुवनानि भूतजातानि । संप्रश्नम् । किंविधोयमात्मा इति संभूय क्रियमाणः प्रश्नः संप्रश्नः । तं यन्ति प्राप्नुवन्ति । यतो वाचो निवर्तन्ते (तै. आ. ८. ९) इत्यादिश्रुत्या परतत्त्वस्य अवाङ्मनसगोचरत्वात् तत्स्वरूपं निश्चेतुम् असमर्थाः सन्तो जिज्ञासवः किमयमात्मा ज्ञानादिगुणकः उत निर्गुणः परिच्छिन्नः अपरिच्छिन्नो वा जगतः किं निमित्तकारणमेव उत उपादानकारणमपि इत्येवमादिसंशयम् आपद्यन्ते इत्यर्थः । अथ वा संप्रश्नम् । क्रियाविशेषणमेतत् । संगतः प्रश्नः संप्रश्नः । तत्पूर्वकं गुरुशास्त्रोपदेशतस्तमेव परमात्मानं यन्ति । तदैक्यं लभन्त इत्यर्थः ॥ ३ ॥

* श्रीसायणाचार्याभिमतः पाठः नामधा इति प्रतिभाति ॥

ज्ञानोत्तरकालं तत्त्वविद् ब्रूते । द्यावापृथिवी द्यौश्च पृथिवी च द्यावापृथिव्यौ । तदुपलक्षितं कृत्स्नं जगत् सद्यः तदानीं तत्त्वज्ञानसमकालमेव पर्यायम् परितः प्राप्तवानस्मि । स्वाभेदेनावगतस्य ब्रह्मणः सर्वात्मकत्वाद् इति भावः । ऋतस्य सत्यस्य सत्याद् ब्रह्मणः प्रथमजाः भूतभौतिकप्रपञ्चजातात् पूर्वम् उत्पन्नः सूत्रात्मा । उपातिष्ठे । स यथा समष्टिरूपेण कृत्स्नं जगत् व्याप्य अवतिष्ठते तद्वद् अहमस्मीत्यर्थः । सद्यः प्राप्ति दृष्टान्तेन उपपादयति वाचमिवेति । वक्तरि प्रयोक्तरि स्थितां वाचं निकटस्थिता बोद्धारो यथा प्रयोगसमकाल एव अवगच्छन्ति तथेत्यर्थः । यद्वा ज्ञानिना प्राप्यस्य तत्त्वस्य सर्वात्मकताम् आह वाचमिवेति । प्रथमार्थे द्वितीया । वाक् स्वात्मकं विततं शब्दब्रह्म वक्तरि पुरुषे परिच्छिन्नं सत् यथा आविर्भवति । यथाहुराचार्याः । स स्वः श्रुतिसंपन्नैः शब्दब्रह्मेति कथ्यते । स तु सर्वत्र संस्यूतो जाते भूताकरे पुनः । आविर्भवति देहेषु प्राणिनाम् अर्थविस्तृतः ।। इति । एवं परमात्मा भुवनेष्ठाः । मायातत्कार्यात्मके भुवने भूतजाते तिष्ठति उपहितः सन् वर्तत इति भुवनेष्ठाः । एष परमात्मा धास्युः पोषणेच्छावान् । हेतुगर्भविशेषणमेतत् । पोषणाद्धेतोः तत्रतत्र भूतेषु वर्तत इत्यर्थः । यद्वा धासिरित्यन्ननाम । तदुपलक्षितं भोग्यजातम् आत्मन इच्छतीति धास्युः । निष्क्रियस्य सतः कथं पोषकत्वं चेति तत्राह नन्वेषो अग्निरिति । एष परमात्मा अग्निः ननु वैश्वानरात्मना पोषको भोक्ता खलु । श्रूयते हि वाजसनेयके । एतावद् वा इदमन्नं चैवान्नादश्च

सोम एवान्नमग्निरन्नादः । इति । भगवताप्युक्तम् । अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ।। (भ. गी. १५-१४) इति ।। ४ ।।

विश्वा विश्वानि भुवनानि पृथिव्यादीन् कर्मफलभूतान् लोकान् पर्यायम् ज्ञानोत्पत्तेः प्राक् खलु परितः प्राप्नवम् । परितो गमनस्य प्रयोजनम् आह । ऋतस्य सत्यस्य ब्रह्मणः तन्तुम् पटस्य तन्तुवत् जगतः कारणभूतम् विततं व्याप्तं स्वरूपं दृशे द्रष्टुं पर्यायम् इति संबन्धः । कम् इति पादपूरणः । तथा च यास्कः । पादपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति ।। ( नि. १. ९ ) इति ।। यद्वा ऋतस्य पुण्यापुण्यलक्षणकर्मणः कारणभूतं तन्तुं तन्तुवद् बन्धनहेतुं मूलाज्ञानं विततम् अनादित्वेन विस्तीर्णम् । छित्त्वेत्यध्याहारः । कम् सुखात्मकं ब्रह्म दृशे द्रष्टुं पर्यायमिति योजना । द्रष्टव्यं ब्रह्मैव विशिनष्टि यत्र देवा इत्यर्धर्चेन । यत्र यस्मिन् ब्रह्मणि देवा इन्द्राद्या अमृतम् अविनश्वरं परमानन्दम् आनशानाः अश्नुवानाः प्राप्नुवन्तः समाने योनौ एकस्मिन्नेव कारणभूते ब्रह्मणि ऐरयन्त स्वात्मानम् अगमयन् । तदेकीभूता इत्यर्थः । अथ वा तत्त्ववित् स्वानुभवमाविष्करोति । यत्र ब्रह्मणि मनोवृत्तिभिः साक्षात्कृते अमृतम् अनश्वरनिरतिशयानन्दम् आनशानाः प्राप्नुवन्तो देवा इन्द्रियाणि समाने योनौ साधारणे कारणभूते ब्रह्मणि अध्यैरयन्त प्राप्नुवन्ति । लीना भवन्तीत्यर्थः । अर्थद्वयेपि तद् ब्रह्म द्रष्टुम् इति संबन्धः ।। ५ ।।

---

द्यौश्च पृथिवी च द्यावापृथिव्यौ । उरु विस्तीर्णम् अन्तरिक्षम् । तयोर्मध्ये वर्तमानोऽन्तरिक्षलोकः । क्षेत्रस्य । क्षियन्ति निवसन्ति अस्मिन्निति क्षेत्रम् उक्तं लोकत्रयम् । तस्य पत्नी अधिपतिः देवता क्रमेण अग्निवायुसूर्यात्मिका । अद्भुतः त्रिविक्रमरूपत्वेन सर्वलोकव्यापनाद् आश्चर्यभूतः उरुगायः उरुभिर्महानुभावैर्बहुभिर्वा गीयमानः स्तूयमानः लोकानां पालको विष्णुः । उत अपि च वातगोपम् । वातो वायुः सूत्रात्मा गोपाः गोपायिता यस्य । यद्वा वातेन गोप्यमानं धार्यमाणं वातगोपम् । उरु विस्तीर्णं ब्रह्माण्डान्तर्व्यापि अन्तरिक्षं महाकाशम् । एवं ये लोकास्तदधिपतयश्च सन्ति ते सर्वे इह अस्मिन् अभिचारकर्मणि मयि अभिचारके तप्यमाने दीक्षानियमेन उपवासादिना क्लिश्यमाने सति तप्यन्तां संतप्ता भवन्तु । अहं यथा द्वेष्यं नाशयितुम् उद्युक्तोऽस्मि एवं भवन्तोपि शत्रोः स्थानाद्यप्रदानेन हिंसका भवन्तु इत्यर्थः ।। १ ।।

हे देवा इदं वक्ष्यमाणं मद्वाक्यं शृणुत । ये यूयं यज्ञियाः यज्ञार्हाः स्थ भवथ । किं तद् इति तद् आह । भरत् देवानां पोषकं वाजो हविर्लक्षणम् अन्नं यस्य सोऽयं भरद्वाजः वषट्कारेण देवानां हविषः प्रदाता एतन्नामको महर्षिः मह्यम् मदर्थं मदभिलषितसिद्धये उक्थानि शस्त्राणि शंसति पठति । यद्वा उक्थशब्दः स्तावकमन्त्रमात्रोपलक्षणपरः ।

अभिचारकर्मोचितदेवतास्तुतिपरान् मन्त्रान् प्रयुङ्क्त इत्यर्थः। यः शत्रुः अस्माकम् इदं पूर्वं सन्मार्गप्रवृत्तं मनः मानसं हिनस्ति बाधते। अनभिमतकार्यकरणेन इष्टविघातेन च यो विक्षिप्तं करोति स शत्रुः पाशे पाशेन मत्कृताभिचारकर्मरूपेण बद्धः निरुद्धगतिः सन् दुरिते दुर्गते मरणरूपे नियुज्यतां नियुक्तो भवतु। अनेन कर्मणा मृतिं प्राप्नोतु। इत्येतत् शृणुतेति पूर्वेण संबन्धः ॥ २ ॥

[पूर्वं] देवाः सामान्येन प्रार्थिताः। इदानीं तत्प्रधानभूतः इन्द्रः प्रार्थ्यते। हे सोमप। सोमं पिबतीति सोमपः। सोमपानेन सर्वदा संतुष्टमानस हे इन्द्र इदं वक्ष्यमाणं मदीयं वाक्यं शृणुहि शृणु। तदेव दर्शयति यद् इति। शोचता द्वेष्यकृतापकारैः शोकार्तेन हृदा मनसा त्वा त्वां जोहवीमि पुनः पुनराह्वयामि। आर्तस्य अनन्यगतिकस्य मम वचनं मा उपेक्षिष्ठा इति क्रियासमभिहारेण सूचितम्। जोहवीमीति यत् तद् इदमिति संबन्धः। तं शत्रुं वृश्चामि छिनद्मि। किमिव। कुलिशेन वज्रसदृशेन परशुना वृक्षम् इव। यो अस्माकमित्यादि व्याख्यातं [द्वितीयायामृचि] ॥ ३ ॥

तिसृभिः त्रिसंख्याकाभिः अशीतिभिः तृचाशीतिभिः तत्संख्याक्रान्तैस्तृचैः तत्प्रतिपाद्येन्द्रदेवतया वा सामगेभिः सामगैरुद्गात्रादिभिः तत्प्रयुक्तैः स्तोत्रैर्वा आदित्येभिः आदित्यैः द्वादशभिः वसुभिः अष्टभिः अङ्गिरोभिः प्रसिद्धैः दीर्घसत्रानुष्ठातृभिर्महर्षिभिः। वस्वादित्यसमभिव्याहाराद् अङ्गनाद् व्यापनाद् रुद्रा वा अङ्गिरःशब्देन प्रत्येतव्याः। तैः सह।

पितॄणाम् अस्मत्पूर्वपुरुषाणाम् इष्टापूर्तम् । इष्टं श्रुतिविहितं यागादि । पूर्तं स्मृत्युक्तं कूपारामतटाकादि । तदुभयजनितं सुकृतं नः अस्मान् अवतु शत्रोः सकाशाद् रक्षतु । यद्वा स्तुतशस्त्रैर्वसुरुद्रादित्यरूपाभिः सवनदेवताभिश्च निष्पादितं पितॄणाम् इष्टापूर्तम् अस्मान् अवतु इति । रक्षाप्रार्थनायाः प्रयोजनम् आह । अमुम् अपकर्तारम् अमुकनामानं शत्रुं दैव्येन देवसंबन्धिना । मत्कृताभिचारजनितकृत्यारूपदेवताकृतेनेत्यर्थः । हरसा क्रोधेन आ ददे स्वीकारोमि । निगृह्णामीत्यर्थः ॥ ४ ॥

द्यावापृथिवी हे द्यावापृथिव्यौ मा शत्रुनिरसनार्थं दीप्तं माम् अनु युवामपि आ दीप्ते भवतम् । शत्रुजयार्थम् आनुकूल्यं कुरुतम् इत्यर्थः । विश्वे देवासः हे विश्वे देवाः एतन्नामानो गणदेवा मा शत्रुजयार्थम् उद्युक्तं माम् अनु [ आ रभध्वम् शत्रुं निग्रहीतुम् उद्युक्तं माम् अनुगता भवत । तथा हे सोम्यासः सोमार्हा अङ्गिरसः हे तथाविधाः पितरः एतन्नामानो देवाः । ] यूयमपि आ रभध्वम् इति पूर्वेण संबन्धः । प्रार्थनायाः प्रयोजनं दर्शयति । अपकामस्य अनभिमतस्य कार्यस्य द्रोहस्य कर्ता शत्रुः पापं मृतिलक्षणम् आर्च्छतु प्राप्नोतु ॥ ५ ॥

हे मरुतः एकोनपञ्चाशत्संख्याका गणदेवाः यः शत्रुः नः अस्मान् अतीव अतिक्रान्त इव मन्यते आत्मानं जानाति । यश्च शत्रुः । वाशब्दः चार्थे । क्रियमाणम् अस्माभिरनुष्ठीयमानं ब्रह्म मन्त्रसाध्यं कर्म निन्दिषत् निन्देत् । तस्मै उभयविधाय शत्रवे तपूंषि तापकानि तेजांसि आयुधानि वा वृजिनानि वर्जकानि बाधकानि सन्तु । द्यौः आदित्यः

द्युस्थानत्वात् । ब्रह्मद्विषं मदीयं कर्म द्विषन्तं शत्रुम् अभिसंतपाति अभितः संतपतु ॥ ६ ॥

सप्त सप्तसंख्याकान् प्राणान् शीर्षण्यान् चक्षुरादीन्द्रियाणि । छिद्रापेक्षया सप्तसंख्या । अष्टौ मन्यः धमन्यः कण्ठगता नाडीविशेषाः । तान् अष्टौ अष्टसंख्याकान् प्रधानभूतांश्च वृश्चामीत्यन्वयः । ते तव संबन्धिनः तान् प्रसिद्धान् अवशिष्टावयवान् ब्रह्मणा मन्त्रेण तत्साध्याभिचारकर्मणा वा वृश्चामि छिनद्मि । एवं मन्त्रप्रभावेण छिन्नसर्वाङ्गः त्वं यमस्य अन्तकस्य सदनं गृहम् अयाः याहि गच्छ । गमनप्रकारमाह । अग्निदूतः अग्निर्दूतः अनुचरो यस्य स तथोक्तः दाहार्थं तस्यैव आनीयमानत्वात् । अरंकृतः अलंकृतः शवालंकारेण विभूषितः ॥ ७ ॥

समिद्धे सम्यग्दीप्ते ज्वलिते जातवेदसि अग्नौ । जातानि जनिमन्ति भूतानि वेत्ति तैर्विद्यते ज्ञायते इति वा जातेषु सर्वेषु भूतेषु वैश्वानररूपेण विद्यते सत्तां लभत इति वा जातवेदाः । यदुक्तं यास्केन । जातवेदाः कस्मात् । जातानि वेद जातानि वैनं विदुः जातेजाते विद्यत इति वा । ( नि. ७. १९ ) इत्यादि । तस्मिन्नग्नौ हे शत्रो ते तव पदं छिन्नपर्णसहितं पदपांसुम् आ दधामि प्रक्षिपामि । भ्राष्ट्रेऽग्निसंतप्ते भर्जयामीत्यर्थः । अग्निः शरीरं त्वदीयं वेवेष्टु पदपांसुद्वारा पादं प्रविश्य कृत्स्नम् अङ्गं व्याप्नोतु । दहतु इत्यर्थः । वागपि वागिन्द्रियं च असुं प्राणं गच्छतु प्राप्नोतु । उपलक्षणमेतत् । सर्वेन्द्रियव्यवहारशून्यो भवतु इत्यर्थः ॥ ८ ॥

हे अग्ने संभलः संभाषकः समादाता वा कन्यार्थी पुरुषः नः अस्माकं कन्यावतां सुमतिं शोभनां बुद्धिम् आगमेत् आगच्छतु अस्मद्बुद्ध्यनुसारेण सर्वलक्षणसंपूर्णः अभिलषितो वरः प्राप्नोतु । यद्वा संभलो हिंसकः पूर्वम् अभिलाषविघाती कन्याम् अनिच्छन् पुरुषः सुमतिम् एतत्कामनायुक्तां कल्याणीं बुद्धिं प्राप्य नः अस्मान् आ गमेत् । कन्यां वरयितुम् इति शेषः । आगत्य च भगेन भाग्येन सह नः अस्मदीयाम् इमां कुमारीम् । आ गमेत् इत्यनुषङ्गः । ततः समनेषु समानमनस्केषु । सलोपश्छान्दसः । यद्वा समानं मन्यमानेषु सहृदयेषु । वरेषु वरयितृषु कन्यावरणार्थम् आगतेषु वरपक्षीयेषु । तेषु जुष्टा प्रीता वरयितृपुरुषसंमता सती वल्गुः रुचिरा प्रीतिजननी स्यात् । [ओपम्] ऊपम् ऊपति रुजति अपनुदति दुःखजातम् इति ऊपम् सुखकरम् पत्या सह निवाससाधनं सौभगं सौभाग्यम् अस्यै अस्याः [कुमार्याः] अस्तु भवतु । षष्ठ्यर्थे चतुर्थी ॥ १ ॥

सोमजुष्टम् सोमदेवेन सेवितं ब्रह्मणा परिवृढेन गन्धर्वेण च जुष्टम् । अर्यम्णा । अत्र अर्यमशब्देन विवाहाग्निरुच्यते । तेन च संभृतं स्वीकृतं भगं कन्यारूपं भागधेयं धातुः । धाता गर्भं दधातु ते (ऋ. १०. १८४. १) इति प्रसिद्धस्य देवस्य सत्येन अनुज्ञारूपेण यथार्थवचनेन पतिवेदनं देवताव्यति-

रिक्तस्य मनुष्यरूपस्य पत्युर्लम्भकं कृणोमि करोमि। सोमादिदेवतात्रयोपभोगानन्तरं कन्याया मानुषपतिसम्बन्धः श्रुत्यन्तरे समाम्नायते। सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः। तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः॥ (ऋ. १०. ८५. ४०) इति ॥ २ ॥

हे अग्ने इयम् अस्मदीया नारी कुमारी पतिं विदेष्ट विन्दतां लभताम्। हि यस्मात् सोमो राजा सुभगां सौभाग्ययुक्तां कृणोति करोति। पतिलाभानन्तरं पुत्रान् सुवाना जनयन्ती महिषी महनीया श्रेष्ठा भार्या भवाति भवतु। इयं पतिं गत्वा लब्ध्वा सुभगा सौभाग्ययुक्ता सती विराजतु विशेषेण तेजस्विनी भवतु ॥ ३ ॥

*मघवान् मंहनीयभोग्यपदार्थयुक्तः चारुः शोभनः मृगाणाम् आखरः निजावासप्रदेशः। स प्रदेशः प्रियः सन् यथा येन प्रकारेण सुपदाः सुखेन स्थातुं योग्यो बभूव भवति। एव एवम् इयं नारी भगस्य भाग्येन जुष्टास्तु। किं कुर्वती। पत्या भर्त्रा सह संप्रिया संप्रियाणि सम्यक् प्रीतिकराणि भोग्यानि वस्तूनि *अभिराधयन्ती अभिवर्धयन्ती। यद्वा पत्या सह संप्रिया संप्रीयमाणा अभिराधयन्ती पुत्रपश्वादिभिः समृद्धा भवन्ती ॥ ४ ॥

भगस्य भाग्यस्य प्राप्तिसाधनभूतां पूर्णाम् अभिमतफलैः परिपूरिताम् अनुपदस्वतीं क्षयरहितां नावं हे कन्ये त्वम् आ रोह। तया उक्तलक्षणया नावा उप अभिलष्यमाण-

* श्रीसायणाचार्याभिमतौ पाठौ मघवांश्चारुर् इति अभिराधयन्ती इति च प्रतिभातः ॥

पतिसमीपं प्रतारय आत्मानं प्रापय । प्रतिकाम्यः अयमेव मे भर्ता स्याद् इति प्रतिनियतं काम्यमानो यो वरः पतिः तस्य समीपम् इति पूर्वत्र संबन्धः ॥ ५ ॥

हे धनपते वैश्रवण वरं वरयितारं पतिम् आ क्रन्दय एषा कन्या मे जाया भूयाद् इति संततम् उद्घोषय अभिधापयेत्यर्थः । यद्वा वरम् आक्रन्दय एतत्कन्याभिमुखम् आह्वय । तथा आमनसम् अभिमुखमनस्कं कृणु कुरु । किंच सर्वं प्राणिजातं प्रदक्षिणं प्रदक्षिणाचारं विवाहानुकूलव्यापारं कृणु कुरु । यो वरः प्रतिकाम्यः तस्मै सर्वं प्रदक्षिणं कुरु इति संबन्धः ॥ ६ ॥

इदं हिरण्यं हिरण्मयालंकारः गुग्गुलु धूपनद्रव्यविशेषः प्रसिद्धः । अयम् औक्षः प्रलेपनद्रव्यम् । तत्स्वरूपं च कौशिकसूत्रभाष्यकारैर्दर्शितम् । आवपेत् सुरभीन् गन्धान् क्षीरं सर्पिस्तथोदके । एतदायनमित्याहुरौक्षं तु मधुना सह ॥ इति । अथो अपि च तेषाम् अलंकारादीनाम् अधिष्ठाता भगः एतन्नामा देवः । एते सर्वे धारणधूपनलेपनैः हे कुमारि त्वां पतिभ्यः सौभगन्धर्वाग्निभ्यः प्रतिकामाय प्रतिनियतम् एनां कन्यां कामयमानं मानुषं पतिं वेत्तवे वेत्तुं लब्धुम् अदुः दत्तवन्तः ॥ ७ ॥

हे कन्ये ते त्वाम् अभिलक्ष्य सविता सर्वस्य प्रेरको देवः आ नयतु वरम् आगमयतु । यः प्रतिकाम्यः पतिः सोऽपि नयतु उपयम्य त्वां स्वगृहं प्रापयतु । तथा हे ओषधे व्रीह्यात्मके त्वम् अस्यै कुमार्यै धेहि पतिं विधेहि प्रयच्छेत्यर्थः ॥ ८ ॥

हे अग्ने असौ स्वराष्ट्रात् प्रच्युतो राजा अचिक्रदत् पुनः स्वराष्ट्रप्रवेशाय त्वाम् आह्वयति प्रार्थयते इत्यर्थः। स त्वदनुग्रहात् इह स्वराष्ट्रे स्वपाः स्वकीयानां प्रजानां पालकः *सुकर्मा वा भुवत् भवतु। तद्रक्षणार्थं त्वं च उरूची उरूच्यौ उर्वञ्चने व्यापनशीले इत्यर्थः। ईदृशौ रोदसी रोदस्यौ द्यावापृथिव्यौ व्यचस्व व्याप्नुहि। अपि च विश्ववेदसः सर्वविषयज्ञानयुक्ता मरुतः एतन्नामान एकोनपञ्चाशत्संख्याका देवाः हे अग्ने त्वा त्वां युञ्जन्तु प्राप्नुवन्तु। त्वत्सहाया भवन्तु इत्यर्थः। [नमसा] नमस्कारेण युक्तं रातहव्यं दत्तहविष्कम् अमुम् उक्तलक्षणं राजानम् आ नय पुनः स्वराष्ट्रं प्रापय ॥ १ ॥

अरुपासः आरोचमानाः दीप्यमानाः। अरुप आरोचनाद् इति यास्कः (नि. १२. ७)। ऋत्विजः दूरे चित् सन्तम्। चित्-शब्दः अप्यर्थे। स्वर्गे वसन्तं विद्यमानमपि विप्रं मेधाविनम् इन्द्रं सख्याय अस्य राज्ञः सख्किर्मणे साहाय्याचरणाय आ च्यावयन्तु आगमयन्तु। आनेतव्यस्य इन्द्रस्य आधिक्यं दर्शयति। यत् यस्मात् कारणाद् देवाः प्रसिद्धाः

---

* नायमर्थः प्रसिद्धपदपाठानुसारी। अथर्ववेदीयस्य पदपाठस्य वा न तथादरो यथा ऋग्वेदीयस्य ॥

अस्मा इन्द्राय गायत्रीं सोमाहरणादिना प्रख्यातवीर्यं गायत्र्याख्यं छन्दः बृहतीम् अस्मात् न्यूनाधिकाक्षराणाम् अन्येषां छन्दसां प्रधानभूताम् अर्कम् अर्चनसाधनभूतं मन्त्रात्मकं बृहदुक्थात्मकं शस्त्रं सौत्रामण्या । सुष्ठु त्रायते इति सुत्रामा इन्द्रः । तद्देवत्यया क्रियया दधृपन्त अधारयन् गायत्र्यादिभिरिन्द्रम् अतिशयितवीर्यम् अकुर्वन्नित्यर्थः । यद्वा गायत्र्यादिकम् अस्मा इन्द्राय प्रायच्छन् इति शेषः । तथा सौत्रामण्या एतन्नामकेन हविर्यज्ञेन देवा दधृपन्त पूर्वं विस्रस्तावयवम् इन्द्रं पुनः सर्वावयवोपेतम् अकुर्वन्नित्यर्थः । श्रूयते हि । इन्द्रस्य सुपुवाणस्य दशधेन्द्रियं वीर्यं परापतत् । तद् देवाः सौत्रामण्या समभरन् ( तै. सं. ५. ६. ३. ४ ) इति । तस्माद् अतिशयितवीर्ययोगात् तमेव आ च्यावयन्तु इति संबन्धः ॥ २ ॥

हे परैरवरुद्धराष्ट्र राजन् त्वा त्वां वरुणो राजा अद्भ्यः स्वसंबन्धिनीभ्यः सकाशाद् ह्वयतु आकारयतु । तथा सोमः लतारूपेण अवस्थितः पर्वतेभ्यः स्वनिवासस्थानेभ्यः त्वा त्वां ह्वयतु । इन्द्रश्च विट्पतिः । आभ्यः यासु प्रजासु त्वम् इदानीं निवससि आभ्यः विड्भ्यः प्रजाभ्यः सकाशात् त्वा त्वां ह्वयतु । राज्यभ्रष्टस्य राज्ञः त्रीणि निवासस्थानानि संभावितानि । समुद्रमध्यं पर्वता देशान्तरं वा । तेभ्यः सर्वेभ्यः स्वकीयेभ्यो वरुणादयः त्वाम् आह्वयन्तु । पुनः स्वराज्यप्रवेशायेत्यर्थः । एवं तैर्देवैः आहूतस्त्वम् इमाः स्वकीयाः पूर्वं पालिता विशः प्रजाः श्येनो भूत्वा । श्येनः पक्षिविशेषः । स इव शीघ्रगतिः परैरनाधर्षितश्च भूत्वा आ पत आगच्छ ॥ ३ ॥

श्येनः शंसनीयगतिः पुरुस्थानो देवः अन्यक्षेत्रे परराष्ट्रे अवरुद्धं शत्रुभिर्निरुद्धं चरन्तं वर्तमानम् अत एव हव्यं ह्वातव्यम् । ईदृशं तं राजानं परस्मात् परराष्ट्राद् आ नयतु स्वदेशं प्रति प्रापयतु । तथा हे राजन् ते तव अश्विना अश्विनौ देवौ पन्थां पन्थानम् आगमनमार्गं सुगं सुखेन गन्तुं योग्यं निरोधकशत्रुशून्यं कृणुतां कुरुताम् । हे सजाताः समानजन्मानो बन्धवः यूयम् इमं पुनः स्वराष्ट्रं प्रविष्टं राजानम् अभिसंविशध्वम् अभितः सर्वतः प्रविश्य संविशध्वम् उपविश्य सेवध्वम् ॥ ४ ॥

प्रतिजनाः हे राजन् त्वा त्वां *वयन्तु सांतत्येन सेवन्ताम् । तथा प्रतिमित्राः प्रतिकूलानि मित्राणि अवृषत विरोधं परित्यज्य संभजन्ताम् । इन्द्राग्नी विश्वे देवाश्च विदिः । जातावेकवचनम् । विक्षु प्रजासु *ते तव क्षेमं रक्षणम् अदीधरन् धारयन्तु कुर्वन्तु ॥ ५ ॥

हे राजन् ते तव हवं स्वराष्ट्रप्रवेशविषयं पुनराह्वानं यः सजातः समानजन्मा समबल इत्यर्थः । यश्च निष्टयः नीचः निकृष्टबल इत्यर्थः । अनयोः अन्यतरः कश्चिद् विवदत् विवदेत् नानुमन्येत । हे इन्द्र तम् उभयविधं शत्रुम् अपाञ्चम् अपगतं बहिष्कृतं कृत्वा अथ अनन्तरम् इमं प्रकृतं राजानम् इह अस्मिन् राष्ट्रे अव गमय बोधय अस्य राष्ट्रस्य अयमेव राजेति प्रख्यापयेत्यर्थः ॥ ६ ॥

---

* श्रीसायणाचार्यपाठौ तु वयन्तु इति देवास्ते इति च ॥

हे राजन् त्वा त्वां राष्ट्रं शत्रुभिराक्रान्तं स्वकीयं राज्यम् आ गन् पुनरागमत् । ततः त्वं वर्चसा बलेन सह उदिहि उदितः प्रख्यातो भव । अनन्तरं प्राक् पूर्वं विशाम् प्रजानां सर्वासां पतिः पालकः सन् एकराट् निःसपत्नो मुख्यो राजा भूत्वा त्वं वि राज विशेषेण दीप्यस्व । हे राजन् त्वा त्वां सर्वाः प्रदिशः प्रकृष्टा दिशः प्राच्याद्याः तदभिमानिन्यो देवताः तत्रस्था जना वा ह्वयन्तु स्वामित्वेन अनुजानन्तु । इह अस्मिन् स्वकीये राष्ट्रे उपसद्यः सर्वैरुपसदनीयः सेव्यः नमस्यः नमस्कार्यश्च भव । नमस्यः नमस्कारार्हः ॥ १ ॥

हे राजन् त्वां विशः प्रजा राज्याय । राज्ञो भावः कर्म वा राज्यम् । राजभावाय राजकर्मणे वा वृणतां संभजन्ताम् । तथा इमाः परिदृश्यमानाः प्रदिशः प्राच्याद्याः पञ्च मध्यदिशा सह पञ्चसंख्याका देवीः देव्यो द्योतमानाः । वृणताम् इति संबन्धः । ततः राष्ट्रस्य वर्ष्मन् वर्ष्मणि शरीरे स्वपालनीयभूशरीरे इत्यर्थः । तत्रापि ककुदि ककुदीवोन्नते स्थाने प्रशस्ते वा सिंहासने श्रयस्व आस्स्व । ततः उपवेशानन्तरम् उग्रः उद्गूर्णबलः शत्रुभिरनभिभाव्यः सन् वसूनि धनानि नः अस्माकं सेवकानां वि भज यथायोग्यं प्रयच्छ ॥ २ ॥

हे राजन् त्वा त्वां सजाताः समानजन्मानः अन्ये राजानो हविनः। हवम् आह्वानम् आज्ञारूपम् एषाम् अस्तीति हविनः। तादृशाः सन्तः। अच्छ इत्याभिमुख्ये। [यन्तु] अभिगच्छन्तु। सर्वे राजानः त्वदाज्ञावशवर्तिनो भवन्तु इत्यर्थः। [तथा] अजिरः त्वया प्रेरितो गमनशीलो वा दूतः त्वदीयो भटः अग्निः। लुप्तोपमम् एतत्। अग्निरिव अप्रधृष्यः सं चरातै संचरतु। अपि च जायाः भार्याः पुत्राश्च तदुपलक्षिताः सर्वे बान्धवाः सुमनसः पुनः स्वराष्ट्र-प्राप्त्या सौमनस्ययुक्ता भवन्तु। उग्रः उद्गूर्णबलस्त्वं बहुम् अधिकं बहुविधं वा बलिम् उपायनं करं वा प्रति पश्यासै प्रतिमुखम् आगतं पश्य ॥ ३ ॥

हे राजन् त्वा त्वाम् अग्रे प्रथमम् अश्विना अश्विनौ देवौ उभा उभौ मित्रावरुणा मित्रावरुणौ च ह्वयन्तु इति संबन्धः। तथा त्वा त्वां विश्वे देवा मरुतश्च ह्वयन्तु राज्यप्रवेशं कारयन्तु। अध अथ राज्यप्रवेशानन्तरं हे राजन् मनः त्वदीयं वसुदेयाय अर्थिभ्यो धनप्रदानाय कृणुष्व कुरु। ततो न इत्यादि व्याख्यातं [द्वितीयायामृचि] ॥ ४ ॥

हे दूरदेशस्थित राजन् परावतः। दूरनामैतत्। परमस्याः परावतः अत्यन्तदूरदेशात् आ प्र द्रव स्वराष्ट्राभिमुखं शीघ्रम् आगच्छ। स्वराष्ट्रं प्रविशतः ते तव उभे द्यावापृथिव्यौ शिवे मङ्गलकारिण्यौ स्तां भवताम्। तत् तस्मिन् त्वदा-गमनविषये अयं वरुणो राजा तथा यथा प्रागुक्तं तथा तेनैव प्रकारेण आह ब्रूते। सोऽयम् उक्तो वरुणः त्वा त्वाम् आह्वत् आह्वयति। स वरुणेन आहूतः त्वम् इदं स्वराष्ट्रम् उपेहि उपागच्छ ॥ ५ ॥

इन्द्रेन्द्र । आदरार्थं पुनर्वचनम् । हे इन्द्र परमैश्वर्ययुक्त मनुष्याः मनुष्यान् अस्मान् । यद्वा मनोरपत्यभूताः प्रजाः प्रति परेहि आगच्छ । हि यस्मात् कारणात् हे इन्द्र त्वं वरुणैः वरुणेन संविदानः ऐकमत्यं प्राप्तः । पूजायां बहुवचनम् । सम् अज्ञास्थाः एतदाह्वानविषये समानज्ञानवान् असि । तस्माद् आगच्छेति संबन्धः । सोऽयं वरुणेन ऐकमत्यं प्राप्तः इन्द्रः हे राजन् त्वा त्वाम् अह्वत् आह्वयति । ततः स्वराष्ट्रं प्रविशेति शेषः । प्रविश्य च स्वे स्वकीये सधस्थे सहस्थाने स्वराष्ट्रे वर्तमानः स राजा देवान् इन्द्रादीन् यक्षत् यजतु । स उ स एव राजा विशः प्रजाः कल्पयात् स्वस्वव्यापारेषु कल्पयतु नियुङ्क्ताम् ॥ ६ ॥

रेवतीः रैमत्यः धनवत्यः । पथ्याः पथोऽनपेताः मार्गहितकारिण्यः एतत्संज्ञा देवताः । यद्वा पथ्याः पथि साधवः । रेवतीः आपः । तदभिमानिन्यो देवताः । आपो वै रेवतीः ( तै. ब्रा. ३. २. ८. २. ) इति श्रुतेः । ता विशेष्यन्ते । बहुधा बहुप्रकारं वर्तमाना विरूपाः विविधाकाराः एवंविधा याः सन्ति ताः सर्वाः संगत्य संभूय हे राजन् ते तव वरीयः उरुतरं श्रेयः अक्रन् कुर्वन्तु । हे राजन् ताः सर्वा देवताः संविदाना ऐकमत्यं प्राप्ताः सत्यः [ त्वा ] ह्वयन्तु त्वां राष्ट्रप्रवेशार्थम् आह्वयन्तु । ताभिराहूतः इह अस्मिन् राष्ट्रे उग्रः उद्गूर्णबलस्त्वं सुमनाः संतुष्टमनाः सन् दशमीं नवतिसंवत्सरोर्ध्वभाविनीं वर्षदशकात्मिकां चरमावस्थाम् । अत्यन्तसंयोगे द्वितीया । तावत्पर्यन्तं वस निवस । जरापर्यन्तं स्वकीयं राज्यं निष्कण्टकं भुङ्क्ष्वेत्यर्थः ॥ ७ ॥

अहं व्यवहर्ता इन्द्रम् परमैश्वर्योपेतं देवं वणिजं वाणिज्यकर्तारं चोदयामि प्रेरयामि प्रवर्तयामि । सः वणिक्त्वेन प्रेरित इन्द्रो नः अस्मान् ऐतु आगच्छतु । आगत्य च नः अस्माकं पुरएता पुरतो गन्ता अस्तु भवतु । किं कुर्वन् । अरातिं वाणिज्यविघातकं शत्रुं परिपन्थिनं पर्यवस्थातारं मार्गनिरोधकं चोरं मृगं व्याघ्रादिकं च नुदन् हिंसन् ईशानः ईश्वरो नियन्ता स इन्द्रः मह्यं वणिजे धनदाः वाणिज्यलाभरूपधनप्रदाता अस्तु भवतु ।। १ ।।

ते प्रसिद्धा देवयानाः। देवा यान्ति येष्विति देवयानाः। देवानुकूल्ययुक्ता इत्यर्थः । यद्वा दीव्यन्ति व्यवहरन्तीति देवा वणिजः। ते यत्र यान्ति ते देवयानाः। प्रहताः [प्रसिद्धाः] इत्यर्थः । ईदृशा बहवः बहुदेशसंबन्धिनो ये पन्थानः मार्गाः द्यावापृथिवी अन्तरा द्यावापृथिव्योर्मध्ये संचरन्ति वर्तन्ते । ते मार्गाः पयसा घृतेन च मा मां जुषन्तां सेवन्ताम् । मार्गश्रमनिवर्तकक्षीरघृतोपलक्षितान्नपानोपेता भवन्तु इत्यर्थः । यथा येन प्रकारेण अहं क्रीत्वा पण्यं विक्रीय धनं लाभसहितं मूल्यधनम् आहराणि स्वगृहं प्रापयाणि तथा जुषन्तामिति संबन्धः ।। २ ।।

हे अग्ने इच्छमानः वाणिज्यलाभं कामयमानः सोऽहम् इध्मेन इन्धनसाधनेन समित्समूहेन घृतेन आज्येन च सह

हव्यं हविः जुहोमि । किमर्थम् । तरसे वेगाय शीघ्रगमनाय बलाय शरीरसामर्थ्याय च । ब्रह्मणा मन्त्रेण स्तोत्ररूपेण वन्दमानः स्तुवन् त्वां देवीं द्योतमानां व्यवहारकुशलाम् इमां मदीयां धियं बुद्धिं शतसेयाय । शतमिति अपरिमितनाम । असंख्यातधनलाभाय यावद् अहम् ईशे शक्नोमि लब्धुं तावज्जुहोमीति संबन्धः । यद्वा यावद् अहम् ईशे ईश्वरो धनाढ्यो भवामि तावत् [ब्रह्मणा वन्दमानः] स्तोत्रेण स्तुवन् [देवीं] द्योतमानाम् इमां धियम् । धीरिति कर्मनाम । इदं वाणिज्यलाभनिमित्तं होमलक्षणं कर्म करोमीति शेषः ॥ ३ ॥

हे अग्ने नः अस्माकम् इमां शरणिं प्रवासनिबन्धनां व्रतलोपलक्षणां हिंसां मीमृषः क्षमस्व । यम् अध्वानं मार्गं दूरम् अगाम गतवन्तः स्म । तदध्वगमनजनिताम् इमां शरणिम् इति पूर्वत्रान्वयः । यद्वा यम् अध्वानं दूरम् अगाम इमां शरणिम् इमम् अध्वानं नः अस्मान् मीमृषः मर्षय तितिक्षय । तज्जनितदुःखनिवर्तने सह्यं कुर्वित्यर्थः । प्रपणः व्यवहर्तुं पण्यद्रव्यस्य परिमाणकल्पनम् । विक्रयः तस्यैव सलाभमूल्यस्वीकारेण परेषां प्रदानम् । तदुभयमपि नः अस्माकं शुनं सुखं यथा भवति तथा अस्तु भवतु । तथा प्रतिपणः । प्रत्यानेतुं परद्रव्यस्य परिमाणकल्पनं प्रतिपण इत्युच्यते । सोऽपि मा मां फलिनं प्रभूतलाभोपेतं कृणोतु । हे इन्द्राग्नी युवां संविदानौ संजानानौ ऐकमत्यं गतौ इदं मया हूयमानं हव्यं हविः जुषेथां सेवेथाम् । युवयोः प्रसादात् नः अस्माकं चरितम् आचरितं विक्रयादिकम् उत्थितं तस्माद् व्यवहाराद् उत्पन्नं लाभयुक्तं धनं च शुनं सुखम् अस्तु ॥ ४॥

हे देवाः धनेन मूल्यधनेन धनं वृद्धियुक्तं धनम् इच्छमानः अहं येन धनेन प्रपणं व्यवहर्तुं परिमाणकल्पनं चरामि करोमि तत् मे मदीयं धनं भूयः बहुतरं भवतु कनीयः अल्पतरं मा भवतु । किंच हे अग्ने सातं लाभं घ्नन्तीति सातघ्नः तान् सातघ्नः लाभप्रतिबन्धकान् देवान् हविषा हूयमानेन नि षेध परितोष्य निवारय ॥ ५ ॥

येनेति यत् पूर्वोक्तं धनं तस्मिन् मे मदीये धने रुचिं सर्वजनप्रीतिं धनप्रदानेन आदानेच्छाम् इन्द्रः आ दधातु स्थापयतु । तथा प्रजापत्यादयश्च रुचिं कुर्वन्तु ॥ ६ ॥

हे होतः देवानाम् आह्वातः वैश्वानर विश्वनरहित अग्ने त्वा त्वां वयं नमसा हविर्लक्षणेन अन्नेन सह उप स्तुमः उपेत्य स्तोत्रं कुर्मः । स स्तुतः त्वं नः अस्माकं प्रजासु पुत्रपौत्रादिलक्षणासु आत्मसु अस्मासु गोषु अस्मदीयेषु पशुषु प्राणेषु च जागृहि बुध्यस्व। प्रजादिषु दुःखलेशोऽपि यथा न प्राप्नोति तथा रक्षन् अवहितो वर्तस्वेत्यर्थः ॥ ७ ॥

हे जातवेदः जातानां वेदितः अग्ने तिष्ठते स्वगृहे नित्यं वर्तमानाय ते तुभ्यं विश्वाहा सर्वाणि अहानि सदमित् सदैव भरेम हरेम हविरिति शेषः । तत्र दृष्टान्तः । अश्वायेव । स्वगृहे वर्तमानाय अश्वाय कालेकाले यथा घासः प्रदीयते तद्वत् । हे अग्ने ते तव प्रतिवेशाः परिचरणादिना प्रत्यासन्ना वयं रायः धनस्य पोषेण समृद्ध्या इषा इष्यमाणेन अन्नेन च सं मदन्तः संमाद्यन्तो हृष्यन्तः मा रिषाम विनष्टा मा भूम ॥ ८ ॥

का. ३ सू. ३०

हे विवदमाना जनाः युष्माकम् अविद्वेषं विद्वेषाभावोपलक्षितं सांमनस्यं कर्म कृणोमि करोमि । कीदृशं तत् सांमनस्यम् । सहृदयं समानैर्हृदयैरुपेतं समानचित्तवृत्तियुक्तमित्यर्थः । ततो यूयमपि जातं वत्सम् *अघ्न्याः अहन्तव्या गाव इव अन्योन्यं परस्परम् अभि हर्यत आभिमुख्येन कामयध्वम् ॥ १ ॥

पुत्रः तनयः पितुः अनुव्रतः अनुकूलकर्मा भवतु । यत् पिता कामयते तत्कर्मकारी भवतु मात्रा च समानमनस्को भवतु । किंच पत्ये भर्त्रे जाया भार्या मधुमतीं माधुर्यवतीं शन्तिवां सुखयुक्तां वाचं वदतु ॥ २ ॥

भ्राता सोदरः भ्रातरं मा द्विष्यात् दायभागादिनिमित्तेन भ्रातृविषयम् अप्रियं मा कुर्यात् । उत अपि च स्वसारं भगिनीं स्वसा मा द्विष्यात् । किंच ते सर्वे भ्रात्रादयः सम्यञ्चः समञ्चनाः समानगतयः सव्रताः समानकर्माणो भूत्वा भद्रया कल्याण्या वाचा वागिन्द्रियेण [ यूयं ] वदत [ भवन्तः ] वदन्तु ॥ ३ ॥

* श्रीसायणाचार्यपाठस्तु अघ्न्याः इति सविसर्गः प्रतिभाति ॥

येन ब्रह्मणा देवा इन्द्रादयः न वियन्ति विमतिं न प्राप्नुवन्ति । नो च नैव च मिथः परस्परं विद्विषते विद्वेषं न कुर्वते । तत् संज्ञानं समानज्ञाननिमित्तम् ऐकमत्यापादकं ब्रह्म मन्त्रात्मकं सांमनस्यं वः युष्माकं गृहे पुरुषेभ्यः पुरुषार्थं कृण्मः कुर्मः ॥ ४ ॥

ज्यायस्वन्तः ज्यायस्त्वगुणोपेताः ज्येष्ठकनिष्ठभावेन परस्परम् अनुसरन्तः इत्यर्थः । चित्तिनः समानचित्तयुक्ताः संराधयन्तः समानसंसिद्धिकाः समानकार्या इत्यर्थः । सधुराः समानकार्योद्वहनाः । इत्थं चरन्तः वर्तमानाः यूयं मा वि यौष्ट मा पृथग् भूत वियुक्ता मा भवतेत्यर्थः । अन्योन्यस्मै परस्परं वल्गु शोभनं प्रियवाक्यं वदन्तः भाषमाणा यूयम् एत आगच्छत । अहमपि हे जनाः वः युष्मान् सध्रीचीनान् सहाञ्चतः कार्येषु सह प्रवृत्तान् संमनसः समानमनस्कान् कृणोमि करोमि ॥ ५ ॥

हे सांमनस्यकामाः वः युष्माकं समानी एका प्रपा पानीयशाला भवतु । अन्नभागश्च सहैव भवतु । परस्परानुरागवशेन एकत्रावस्थितम् अन्नपानादिकं युष्माभिरुपभुज्यताम् इत्यर्थः । तदर्थम् अहं वः युष्मान् समाने योक्त्रे एकस्मिन् बन्धने स्नेहपाशे सह युनज्मि सह बध्नामि । अपि च सम्यञ्चः संगताः एकफलार्थिनो भूत्वा समानज्ञानाः सन्तः अग्निं सपर्यत पूजयत । कथमिव स्थिताः इति तत्राह । अरा नाभिमिव अभितः । रथचक्रस्य मध्यच्छिद्रं नाभिः । तस्या अभितो वर्तमाना अराः चक्रावयवाः

कीलका नियतस्थानाः परिवेष्टच वर्तन्ते एवम् एकम् अग्निम् अभितो वर्तमानाः परिचरतेत्यर्थः ।। ६ ।।

सध्रीचीनान् सह प्रवर्तमानान् एककार्यकरणे सहोद्युक्तान् संमनसः समानमनस्कान् वः युष्मान् कृणोमि करोमि । तथा युष्माकम् एकश्नुष्टिम् एकविधं व्यापनम् एकविधस्य अन्नस्य भुक्ति वा करोमि । संवननेन वशीकरणेन अनेन सांमनस्यकर्मणा युष्मान् सर्वान् वशीकरोमीत्यर्थः । अमृतं द्युलोकस्थम् अजरामरत्वप्रापकं पीयूषं रक्षमाणाः ऐकमत्येन पालयन्तः देवाः [ इव ] इन्द्रादयो यथा सौमनस्ययुक्ता भवन्ति एवं वः युष्माकं सायंप्रातः एतदुपलक्षिते सर्वस्मिन् काले सौमनसः सौमनस्यं शोभनमनस्कत्वम् [ अस्तु ] भवतु ।। ७ ।।



भूतः समृद्धः अभिषेकेण प्राप्तैश्वर्यः भूतेषु समृद्धेषु जनपदेषु स्वाम्यमात्यादिप्रकृतिजनेषु वा पयः । उपलक्षणमेतत् । क्षीरोपलक्षितं भोज्यं वस्तुजातम् आ दधाति स्थापयति । सर्वेषामनुजीविनाम् अन्नप्रदो भवतीत्यर्थः । अत एव सः अभिषिक्तो राजा भूतानां प्राणिनाम् अधिपतिः अधिष्ठाता स्वामी बभूव । मृत्युः धर्मराजः धर्माधर्मप्रविभागेन दुष्टनिग्रहशिष्टपरिपालने कारयितुं तस्य राज्ञो राजसूयं चरति । राजा सूयते अनुज्ञायते रक्षणविधौ येन कर्मणा तद् राजसूयम् अभिषेकाख्यम् इदं कर्म अनुतिष्ठतीत्यर्थः । स कृताभिषेको राजा राज्यम् । राज्ञः कर्म दुष्टनिग्रहशिष्टपरिपालनादिकं राज्यम् । तद् अनु मन्यताम् अङ्गीकरोतु ॥ १ ॥

हे राजन् सिंहासनं हस्त्यश्वरथादियानं च अभि प्रेहि अभिलक्ष्य प्रगच्छ । मा अप वेनः । अपकामम् अनिच्छां मा कार्षीः । उग्रः उद्गूर्णबलः दुरासदः चेत्ता चेतिता कार्याकार्यविभागज्ञानशीलवान् इत्यर्थः । अत एव सपत्नहा सपत्नानां शत्रूणां हन्ता । राजासनादिसमीपं गत्वा च मित्रवर्धनः यानि राजमित्राणि महामात्रादीनि सन्ति तेषां वर्धयिता सन् आ तिष्ठ राजासनं हस्त्यश्वादियानं च आरोह । एवंभूताय तुभ्यं देवा इन्द्रादयो लोकपालाः अधि ब्रुवन् [अधिब्रुवन्तु] । अधिवचनं पक्षपातेन वचनम् । मदीयोऽयम् इति त्वाम् अनुगृह्णन्तु ॥ २ ॥

आतिष्ठन्तम् सिंहासनादिकम् आरोहन्तं विश्वे सर्वे जनाः पर्यभूषन् परितः अलंकुर्वन्तु । [यद्वा] परितो भवन्तु वर्तन्ताम् । सेवन्तामित्यर्थः । आस्थानानन्तरं श्रियं वसानः राजलक्ष्मीं धारयन् स्वरोचिः स्वायत्तदीप्तिः चरति राज्यपरिपालने वर्तते । [वृष्णः समर्थस्य] असुरस्य शत्रूणां निरसितुः । यद्वा असून् प्राणान् राति प्रयच्छति पादाक्रान्तानां द्विषाम् इति असुरः । ईदृशस्य तस्याभिषिक्तस्य राज्ञः तन्नाम अभिषेकसमये कृतं सुन्दरपाण्डयादिकं नाम महत् अधिकं यन्नामश्रवणमात्राद् भीताः शत्रवः पलायन्ते [तादृशम्] । तादृङ्नामाङ्कितो राजा विश्वरूपः शत्रुमित्र-कलत्रादिषु नानाविधरूपः सन् अमृतानि अमृतत्वप्रापकानि दण्डयुद्धादीनि अध्ययनादीनि च कर्माणि आ तस्थौ आ तिष्ठतु । आचरतु इत्यर्थः ॥ ३ ॥

वैयाघ्रे व्याघ्रस्य विकारश्चर्म वैयाघ्रम् । व्याघ्र-चर्मणि अधि उपरि उपविष्टः सन् व्याघ्रः व्याघ्रवद् दुष्प्रधर्षो भूत्वा महीः महतीः प्राच्याद्या दिशः वि क्रमस्व विजयस्व । विक्रमेण शौर्येण व्याप्नुहि इत्यर्थः । हे राजन् एव तेजस्विनं त्वा त्वां सर्वा विशः प्रजाः वाञ्छन्तु स्वामित्वेन इच्छन्तु । त्वदाज्ञावशे वर्तन्ताम् इत्यर्थः । तथा दिव्याः दिवि भवाः पयस्वतीः पयस्वत्यः सारवत्यः आपश्च त्वां वाञ्छन्तु । त्वद्विषये अनावृष्टिर्मा भूद् इत्यर्थः ॥ ४ ॥

दिव्या दिवि भवा या आपः पयसा स्वकीयेन सारभूतेन रसेन मदन्ति प्राणिनः तर्पयन्ति । याश्च अन्तरिक्षे वर्तमाना आपः उत वा अपि वा पृथिव्यां भूम्याम् अवस्थिता

तासां सर्वासां लोकत्रयव्याप्तानाम् अपां वर्चसा बलकरेण सारेण हे राजन् त्वा त्वाम् अभि षिञ्चामि ॥ ५ ॥

हे राजन् त्वा त्वां प्रागुक्ताः दिव्याः [पयस्वतीः] पयस्वत्यः आपः स्वकीयेन वर्चसा अभि [असिचन्] आभिमुख्येन [सिञ्चन्तु]। यथा त्वं मित्रवर्धनः मित्राणां वर्धयिता असः भवेः। सविता सर्वप्रेरको देवः त्वा त्वां तथा करत् करोतु ॥ ६ ॥

या आपो दिव्या इति प्राग् उक्ता आपः एना इति अन्वादिश्यन्ते। एना एता उक्ता आपः। [व्याघ्रं] व्याघ्रवत् पराक्रमयुक्तं परिषस्वजानाः परितः अभितः अतिशयेन आलिङ्गन्त्यः। मातरो वत्सम् इव अत्यन्तं प्रीणयन्त्य इत्यर्थः। सिंहं सहनशीलं यद्वा सिंहतुल्यपराक्रमं राजानं हिन्वन्ति वीर्यप्रदानेन प्रीणयन्ति। किमर्थम्। महते सौभगाय अधिकाय सौभाग्याय। तत्र दृष्टान्तः। समुद्रं नेति। यथा नदीरूपा आपः समुद्रं प्रीणयन्ति तद्वत् अभिषेकसाधनभूता आपः राजानं प्रीणयन्ति इत्यर्थः। यद्वा समुद्रशब्देन वरुण उच्यते। समुद्रं न वरुणमिव। अप्सु उदकेषु परितो वर्तमानेषु अन्तः मध्ये तस्थिवांसं स्थितवन्तं द्वीपिनं शार्दूलवद् अप्रधृष्यं राजानं सुभुवः। सुष्ठु भवन्ति समृद्धा भवन्तीति सुभुवः सेवकजनाः। ते मर्मृज्यन्ते पुनः पुनः अङ्गप्रत्यङ्गानि अभिषेकेण शोधयन्ति। यद्वा पट्टवस्त्रकटकमुकुटादिभिः अलंकुर्वन्ति ॥ ७ ॥

---

बृहन् महान् परिवृढो वा वरुणः एषां दुरात्मनां शत्रूणाम् अधिष्ठाता नियन्ता सन् तैः कृतं सर्वम् अन्याय्यम् अन्तिकादिव पश्यति समीपदेशादिव जानाति । न तस्य व्यवधायकं किंचिद् अस्ति इत्यर्थः । यो वरुणः [ चरन् सन् ] तायत् सातत्येन वर्तमानं मन्यते । सर्वं जगत् जानाति इत्यर्थः । ईदृग्विधज्ञानसद्भावं वरुणस्य उपपादयति सर्वम् इति । व्यवहितं विप्रकृष्टं स्थिरं नश्वरं स्थूलं सूक्ष्मम् इति एतादृग् इदं सर्वम् अतिरोहितज्ञानत्वाद् देवाः विदुः जानन्ति ॥ १ ॥

पूर्वस्याम् ऋचि एषाम् इत्युक्तम् । तत्र इदमा [ इदम्-शब्देन ] के पुनः प्रतिनिर्दिश्यन्ते इति तान् निर्दिशति यस्तिष्ठतीति पूर्वार्धेन । यः शत्रुः तिष्ठति अभिमुखम् अवतिष्ठते यश्चरति गच्छति यश्च वञ्चति कौटिल्येन प्रतारयति यः शत्रुः निलायं निलयनेन अनिर्गमनेन चरति यः शत्रुः प्रतङ्कं प्रकर्षेण कृच्छ्रजीवनं प्राप्य चरति वर्तते । एषां शत्रूणामिति पूर्वेण संबन्धः । अन्तिकादिव पश्यतीति यद् उक्तं तदपि समर्थयते द्वौ संनिषद्येत्युत्तरार्धेन । द्वौ पुरुषौ रहसि संनिषद्य उपविश्य यत् कार्यं मन्त्रयेते गुप्तं भाषेते तयोः गुप्तं भाषमाणयोः तृतीयः त्रित्वसंख्यापूरकः सन् राजा ईश्वरो वरुणः स्वसार्वज्ञ्येन तत् सर्वं वेद

जानातीत्यर्थः । ततश्च अकार्यचिन्तावसर एव तान् निग्रहीतुं वरुणः शक्नोतीत्यर्थः* ॥ २ ॥

उतशब्दः अप्यर्थे । इयं सर्वाधिष्ठानत्वेन निहिता भूमिरपि राज्ञः ईश्वरस्य दुष्टनिग्रहे अधिकृतस्य वरुणस्य वशे वर्तते । उप अपि च असौ विप्रकृष्टा बृहती महती दूरेअन्ता दूरे विप्रकृष्टे देशे अन्ते अन्तिके च भवतीति दूरेअन्ता । यत एवं व्याप्य वर्तते अतो बृहतीति भावः । एवंरूपा द्यौश्च वरुणस्य राज्ञो वशे वर्तते । बृहती दूरेअन्तेति विशेषणद्वयं भूम्या अपि योज्यम् । अत एव दूरेअन्ते इति द्यावापृथिव्योर्नामसु पठितम् [निघ. ३. ३०] । उतो अपि च समुद्रौ पूर्वपश्चिमौ वरुणस्य राज्ञः कुक्षी दक्षिणोत्तर-पार्श्वभेदेन अवस्थिते द्वे उदरे । एवं भूम्यादिकं कृत्स्नं जगद् व्याप्य वर्तमानोऽपि अस्मिन् अल्पेपि उदके तटाक-ह्रदादिगते निलीनः अन्तर्हितो भवति ॥ ३ ॥

उत अपि च यः शत्रुः अनर्थकारी परस्तात् [बहिर्दूरे] द्याम् अन्तरिक्षप्रदेशम् अतिसर्पात् अतिक्रम्य सर्पेत् गच्छेत् । यद्वा सुकृतप्राप्यं द्यां स्वर्गम् अतिक्रम्य अपथे प्रवर्तेत इत्यर्थः । स शत्रुः वरुणस्य राज्ञः पाशेभ्यः न मुच्यातै न मुच्येत । तैर्बद्ध एव वर्तताम् इत्यर्थः । कथं द्युलोकस्थो वरुणः मनुष्य-कृतम् अपराधं जानातीति तत्राह । दिवः स्पश इति ।

---

* अकार्यचिन्तासमकालमेव प्रादुर्भवंश्चापधरः पुरस्तात् ।
अन्तःशरीरेष्वपि यः प्रजानां प्रत्यादिदेशाविनयं विनेता ॥
(रघुवंश ६.३९) इति कालिदासीयः श्लोकः अत्रार्थेनुसंधेयः ॥

दिवः. द्युलोकात् निर्गता अस्य वरुणस्य स्पशः चारा इदं पार्थिवं स्थानं प्र चरन्ति प्राप्य संचरन्ति । ते च सहस्राक्षाः सहस्रसंख्याकैर्दर्शनोपायैर्युक्ताः सन्तः भूमिम् अति पश्यन्ति । भूलोकवृत्तान्तं सर्वम् अतिशयेन साक्षात्कुर्वन्तीत्यर्थः ॥ ४ ॥

रोदसी अन्तरा द्यावापृथिव्योर्मध्ये यत् प्राणिजातं वर्तते तथा परस्तात् [तयोर्बहिः] यत् प्राणिजातम् अस्ति तत् सर्वं वरुणो राजा विचष्टे विशेषेण पश्यति । तस्मात् तेषां जनानां प्राणिनां निमिषः निमेषणव्यापारस्य । उपलक्षणमेतत् । अक्षिपरिस्पन्दोपलक्षितस्य अस्य साध्वसाधुकर्मणः संख्याता परिमाणयिता वरुणः तानि पापिनां शिक्षाकर्माणि तत्तत्पापानुसारेण नि मिनोति निक्षिपति । तत्र दृष्टान्तः । अक्षानिवेति । श्वघ्नी स्वम् आत्मानं धनं च हन्तीति कितवः श्वघ्नी । तथा च यास्कः । श्वघ्नी कितवो भवति स्वं हन्ति [नि. ५. २२] इति । यथा कितवः अक्षान् आत्मनो जयार्थं निक्षिपति तद्वद् इत्यर्थः ॥ ५ ॥

हे वरुण ये त्वदीयाः पाशाः सप्तसप्त उत्तममध्यमाधमभेदेन प्रत्येकं सप्तसंख्याकाः त्रेधा त्रिप्रकारं विसिताः तत्र तत्र पापिनां निग्रहाय जालवद् बद्धाः रुशन्तः तत्तत्पापानुसारेण पापिष्ठान् हिंसन्तः तिष्ठन्ति सर्वे ते पाशाः अनृतं वदन्तं पापकृतम् अस्मदीयं शत्रुं छिनन्तु छिन्दन्तु । यस्तु सत्यवादी सत्यवदनशीलः पुण्यकृत् तम् अतिसृजन्तु विमुञ्चन्तु ॥ ६ ॥

हे वरुण शतेन शतसंख्याकैः त्वदीयैः पाशैः एनम् अनृतवादिनं शत्रुम् अभिधेहि बधान । बद्ध्वा निगृहाणेत्यर्थः ।

अभिपूर्वो दधातिर्बन्धने वर्तते । यथा अश्वाभिधानीम् आ दत्ते [तै. सं. ५. १. २. १.] इति । हे नृचक्षः नृणां मनुष्याणां साध्वसाधुचरित्राणां विवेकेन द्रष्टः । ईदृश हे वरुण अनृतवाक् अनृतं ब्रुवन् पुरुषः ते त्वत्तः [मा] मोचि विमुक्तो विसृष्टो मा भूत् । किंतु जाल्मः असमीक्ष्यकारी स्वकीयम् उदरं श्रंशयित्वा जलोदररोगेण स्रस्तं कृत्वा अबन्धः बन्धरहितः प्रान्तेषु अकृतबन्धनः असेः कोश इव परिकृत्यमान आस्ताम् त्वत्पाशबद्ध एव वर्तताम् । अत एव अन्यत्र आम्नातम् । अनृते खलु वै क्रियमाणे वरुणो गृह्णाति [तै. ब्रा. १. ७. २. ६] इति ॥ ७ ॥

समानम् आमयति व्याधितो भवति [पुरुषोऽनेनेति] समाम्यः । ईदृशो यो वरुणः । लुप्ततद्धितोऽयं निर्देशः । वारुणः पाशः इत्यर्थः । विगमनेन विविधं वा आमयति [व्याधितो भवति] पुरुषोऽनेनेति व्याम्यो यः पाशः । तथा यो वरुणः वरुणसंबन्धी पाशः संदेश्यः समानदेशे भवः । यश्च विदेश्यः विदेशे भवः । यश्च वरुणः वरुणसंबन्धी पाशो दैवः देवेषु भवः । यश्च वरुणपाशो मानुषः मनुष्येषु प्रयुक्तः । तैः त्वा सर्वैः पाशैः अभि ष्यामि अभिदधामि बध्नामि इत्यर्थः । तथा हे शत्रो ते तुभ्यं तान् सर्वान् पाशान् अनुलक्षीकृत्य संदिशामि संप्रयच्छामि । असौ इत्यस्य स्थाने संबुद्धया शत्रुनामग्रहणम् । आमुष्यायणेति गोत्रतो निर्देशः । अमुष्याः पुत्रेति अदःशब्दस्थाने मातृनामनिर्देशः ॥ ८–९ ॥

---

## ५१*

### का. ५ सू. ११

[वरुणेन पूर्वम् अथर्वणे एका पृश्निर्गौः दत्ता प्रतिश्रुता वा आसीत् । दत्त्वा पुनरदातारं प्रतिश्रुत्य वा न दातारं वरुणं प्रति कुपितेन अथर्वणा अभिहितं हे वरुण पृश्नि दक्षिणां ददावान् त्वं हे पुनर्मघ मनसा अचिकित्सीः इति । एवम् अभिहितवन्तम् अथर्वाणं प्रति वरुणो ब्रूते ।

'पृश्निं दक्षिणां ददावान् त्वं हे पुनर्मघ वरुण मनसा अचिकित्सीः इत्येवंरूपं वचनं हे अथर्वन् महे असुराय मह्यं वरुणाय इह त्वं कथम् अब्रवीः त्वेपनृम्णः त्वं हरये पित्रे कथम् अब्रवीः इति ।।

पृश्निः पृश्निवर्णा गौः । पृश्निः द्यौः । तत्सदृशवर्णा गौः अपि पृश्निः । पुनर्मघः मघं धनं दत्त्वा यः पुनरादत्ते स पुनर्मघः । अचिकित्सीः प्रतिश्रुता अपि पृश्निर्गौः अस्मै न दातव्या दत्ता अपि वा पुनरादेया इति विचारितवान् असि । महे महते । असुराय ईश्वराय । त्वेपनृम्णः प्रदीप्त-बलः उद्धतः । हरये हरिद्वर्णाय दीप्ताय ।।

तथा च अयम् ऋगर्थः ।।

हे अथर्वन् अहम् वरुणः महान् समर्थश्च अस्मि । किंच दीप्तिमान् तव पितृतुल्यश्च अस्मि । तादृशाय मह्यम्

* अस्य सूक्तस्य श्रीसायणाचार्यविरचिता व्याख्या नोपलभ्यते ।।

उद्यतो भूत्वा त्वम् एवंप्रकारकं वचनं ब्रवीषि । किंप्रकारकं वचनम् इति चेत् उच्यते । पृश्निवर्णां गाम् एकवारं प्रतिश्रुत्य पुनर् न ददामि दत्तां वा पुनराददामि इत्येवंरूपम् ॥ १ ॥

किंच हे अथर्वन् न अहं कामेन स्वच्छन्देन केनापि कारणेन विना पुनर्मघः भवामि । त्वां सं चक्षे । त्वां परीक्षे । त्वां परीक्षितुकामः अहम् एताम् पृश्निम् उपाजे पुनराददामि । कमिति पादपूरणो निपातः । हे अथर्वन् केन काव्येन कृत्वा त्वं दक्षिणार्हः केन च ज्ञातेन त्वं ज्ञानवान् सन् दक्षिणार्ह इत्येतत् परीक्षितुं मया पृश्निः पुनरादत्ता प्रतिश्रुत्य वा न दत्ता ॥ २ ॥

एवम् उक्तवन्तं वरुणं प्रति अथर्वा ब्रूते ।

हे वरुण अहं सत्य परमार्थतः काव्येन गभीरः अस्मि । किंच जातेन अहं सत्यं परमार्थतः जातवेदाः अस्मि । अस्ति मे गभीरं ज्ञानम् । अस्ति मे अतीन्द्रियवस्तुदर्शनसामर्थ्यम् । एवंभूतं वेदः ज्ञानं मे जातम् अतोऽहं परमार्थतो जातवेदाः । काव्यं नाम कवित्वं क्रान्तदर्शित्वम् अतिगूढवस्तुदर्शनसामर्थ्यम् । तच्च मे परमार्थत. अस्ति । अतः सर्वथा अहं दक्षिणार्हः । एवंविधं तव सामर्थ्यं विद्यते इत्यत्र किं प्रमाणम् इति चेत् उच्यते । यद् व्रतम् अहं धारयामि तत्र विघ्नम् उत्पादयितु स्वसामर्थ्येन न कश्चिद् दासजातीयः न वा कश्चिद् आर्यजातीयो जनः शक्तः अतोऽहं सर्वथा समर्थः दक्षिणार्हश्च अस्मि ॥ ३ ॥

अपि च हे स्वधावन् स्वतःसामर्थ्यवन् वरुण न केवलम् अहमेव एतादृशसामर्थ्यवान् । त्वमपि तादृशसामर्थ्ययुक्तः । न त्वत् अन्यः कोऽपि कवितरः । अन्यः कश्चिद् न

त्वाम् अतीन्द्रियवस्तुज्ञानविषये अतिशेते । न वा मेधया धीरतरः । न वा अन्यः कश्चिद् बुद्धिविषयेऽपि त्वाम् अतिशेते । इन्द्रियागोचरज्ञानवान् कविः इन्द्रियगोचरज्ञानवान् धीरः इति कविधीर–शब्दयोः अर्थभेदः । किंच त्वं ता विश्वा तानि सर्वाणि भुवनानि प्राणिजातानि वेत्थ जानासि । अपरंच स चित् नु मायी जनः त्वद् बिभाय । यः कश्चित् मायावी अन्यान् स्वमायाभिः वञ्चयति सोऽपि त्वद् बिभेति यतः तव पुरः तस्य माया अकिंचित्करा ॥ ४ ॥

अपि च हे स्वधावन् सुप्रणीते वरुण त्वं हि अङ्ग विश्वा जनिम वेत्थ । हे स्वतःसामर्थ्ययुक्त स्वयं शोभन-मार्गेण व्रजन् अन्यान् अपि तेन मार्गेण नयन् वरुण । अङ्ग इति कोमलसंबोधने । त्वं सर्वाणि प्राणिजातानि जानासि । तर्हि अहं तुभ्यम् एतत् पृच्छामि अस्मात् अन्तरिक्षलोकात् पर किम् अस्तीति । किंच तस्मात् परस्मादपि किंचिद् अवरम् हे अमूर हे अमूढ हे बुद्धिमन् अस्ति न वा अस्तीति । एतत् परं स्थानं प्राप्यापि हीनतापादकं किंचिद् अस्ति न वेति प्रश्नः ॥ ५ ॥

हे वरुण अस्मात् अन्तरिक्षलोकात् यद् एकं परम् अस्ति तद् अहं जानामि । तस्मात् एकस्मात् परस्मात् अवरं हीनतापादकं दुर्णशं नाशयितुं कठिनम् किंचित् एकम् अस्ति तदपि अहं जानामि । हे वरुण तत् विद्वान् जानन् अहं ते तुभ्यं प्र ब्रवीमि पणयः अधोवचसः भवन्तु न भवान् अधोवचाः भवतु इति । अपि च दासाः नीचैः भूमिम् उप सर्पन्तु न भवान् उपसर्पतु इति । औदार्यं सर्वतः

श्रेष्ठम् । दत्त्वा पुनरादानं प्रतिश्रुत्य वा अदानं कनिष्ठत्वापादकम् । पणयः एव एवं कुर्वन्ति दासाः एव एवं कृत्वा अधो गच्छन्ति । नैतत वरुणस्य शोभाकरम् इति अथर्वणः अभिप्रायः ॥ ६ ॥

अङ्ग इत्यभिमुखीकरणार्थो निपातः । हे वरुण पुनर्मघेषु दत्त्वा पुनराददानानां प्रतिश्रुत्य वा न ददानानां जनानां विषये भूरि अवद्यानि नानाविधाः निन्दाः प्रवर्तन्ते इति त्वं हि त्वमेव ब्रवीषि उक्तवानसि । हे वरुण एतावतः पणीन् अभि मो षु भूत् पणिसदृशः त्वम् हे वरुण एतावान् मा भूः । जनासः त्वा अराधसम् मा वोचन् मनुष्याः त्वाम् कृपणं मा वदन्तु । वरुणः दत्त्वापि पुनराददाति इत्येवंविधकृपणः इति जनाः मा वदन्तु इत्यभिप्रायः ॥ ७ ॥

अथर्वणा एवमुक्तः वरुणः तं प्रति ब्रूते ।

अथर्वन् मा माम् जनासः मनुष्याः अराधसम् कृपणं मा वोचन् मा वदन्तु । हे जरितः हे कवे ते तव पृश्नि गाम् पुनः ददामि । विश्वं मे स्तोत्रं मद्यशःप्रतिपादकं समग्रं काव्य विश्वासु मानुषीषु दिक्षु अन्तः शचीभिः आ याहि मनुष्यपूर्णासु सर्वासु दिक्षु पूर्णबलेन आयातु । मद्यशः सर्वत्र प्रसरतु इत्यर्थः ॥ ८ ॥

तदा अथर्वा ब्रूते ।

हे वरुण ते तव स्तोत्राणि उद्यतानि उद्गतानि सन्ति विश्वासु मानुषीषु दिक्षु अन्तः यन्तु सर्वत्र जनसमूहेषु प्रसरन्तु इत्यर्थः । पूर्वं यत् त्वं मे अदत्तः असि न दत्तवान् तत् नु

मे मह्यम् देहि यतः त्वं मे युज्यः सप्तपदः सखा असि सप्तपदपर्यन्तं सहचलनेन मित्रभावम् उपगतः असि* ॥ ९ ॥

अपि च नौ आवयोः बन्धु बन्धुभावः समा समानः हे वरुण जा जन्म अपि समा समानम् । यत् नौ आवयोः एषा जा समा एतत् जन्म समानम् अतः अहं तद् वेद जानामि ॥ ९३ ॥

तदा वरुणो ब्रूते ।

हे अथर्वन् पूर्वं यत् अहम् अदत्तः अस्मि न दत्तवान् अस्मि तत् ते तुभ्यम् अहम् ददामि यतः अहं ते युज्यः सप्तपदः सखा अस्मि सप्तपदपर्यन्तं सहचलनेन मित्रभावम् उपगतः अस्मि ॥ १० ॥

अधुना ऋषिर्ब्रूते ।

वयोधाः हविर्दत्तवान् देवः अथर्वा देवाय वरुणाय गृणते स्तौति इत्यर्थः । सुमेधाः शोभनप्रज्ञः विप्रः अथर्वा विप्राय वरुणाय स्तुवते स्तुतिं करोति । हे स्वधावन् स्वतः–सामर्थ्यवन् वरुण देवबन्धु देवाः बन्धवः सुहृदो यस्य एतादृशम् अस्माक पितरम् अथर्वाणं त्वम् अजीजनः जनितवान् असि । अतः तव पुत्रभूताय तस्मै सुप्रशस्तं सर्वैः सुष्टुतं राधः धनादिकं कृणुहि कुरु । यतः नः तत्संबन्धिनाम् अस्माकम् त्वं सखा परमश्च बन्धुः सुहृद् असि ॥ ११ ॥]

---

* सख्यं सतां साप्तपदीनमाहुः इति कस्याप्यभियुक्तस्य उक्तिः अत्रार्थेऽनुसंधेया ॥

## ५२*

### का. ५ सू. २४

[ सूक्तमेतत् स्पष्टार्थप्रायम् । अतः केषांचिदेव शब्दानाम् अर्थः प्रदर्श्यते ।। ब्रह्माणि स्तोत्रे यज्ञे वा । पुरोधायां पुरोहित-कर्मणि । प्रतिष्ठायां स्थैर्यापादककर्मणि । चित्त्यां ज्ञानजनक-कर्मणि। आकूत्याम् इच्छापूरककर्मणि। देवहूत्यां देवाह्वाने ।। ]

---

## ५३

### का. ६. सू. ७८

तेन प्रसिद्धेन भूतेन समृद्धिकरेण हूयमानेन हविषा अयं पतिः पुनर् आप्यायताम् । पुनःपुनः प्रजापश्वादिभिः समृद्धो भवतु। अस्मै पत्ये यां स्त्रियं जायाम् आवाक्षुः जायात्वेन समीपम् आनयिषुः [ आनैषुः ] विवाहकर्तारः पितृमात्रादयः। ता जायां रसेन दधिमधुघृतादिना अभि 'वर्धताम् अयं हूयमानोऽग्निः अभिवर्धयतु ।। १ ।।

पूर्वमन्त्रोक्त एवार्थः अनया विव्रियते। अयं वरो वधूश्च पयसा क्षीरेण अभि वर्धताम्। गोभिः समृध्यताम् इत्यर्थः। तथा राष्ट्रेण अभि वर्धताम्। ग्रामादिसमृद्धिर्भवतु

* अस्य सूक्तस्य श्रीसायणाचार्यविरचिता व्याख्या नोपलभ्यते ।।

इत्यर्थः । सहस्रवर्चसा अपरिमिततेजसा रय्या धनेन इमौ जायापती अनुपक्षितौ अनुपक्षीणौ संपूर्णकामौ स्तां भवताम् ।।२।।

त्वष्टा तनूकर्ता शिल्पकारी एतत्संज्ञो देवः जायां स्त्रियम् अजनयत् उदपादयत् । हे वर अस्यै अस्या जायायाः त्वां पतिं भर्तारं त्वष्टैव अजनयत् । स्त्रीपुंससृष्टेस्त्वष्टैव कर्तेत्यर्थः । श्रूयते हि तैत्तिरीयके । त्वष्टा वै पशूनां मिथुनानां प्रजनयिता ( तै. सं. २. १. ८. ४ ) इति । यस्माद् एवं तस्मात् हे जायापती वां युवयोः त्वष्टा देवः सहस्रसंवत्सरपरिमितानि आयूंषि एवमात्मकं दीर्घम् आयुः कृणोतु करोतु ।।३।।



## ५४

### का. ७. सू. १

ईदृशी खलु विवक्षूणां शब्दाभिव्यक्तिः । प्रथमम् अभिलषितम् अर्थं विवक्षोः पुरुषस्य तद्वाचकशब्दप्रयोगार्थं तदिच्छावशेन जातात् प्रयत्नात् मूलाधारे प्राणवायोः परिस्पन्दो जायते । तेन परिस्पन्देन मूलाधारे सकलशब्दमूलकारणभूता निष्पन्दा सूक्ष्मा परा वाक् आविर्भवति । सैव मूलाधाराद् ऊर्ध्वं नाभिदेशं प्राप्ता सामान्यज्ञानरूपा विवक्षितपदार्थदर्शनात् पश्यन्तीति उच्यते । सैव हृदयदेशं प्राप्ता अर्थविशेषनिश्चयबुद्धियुक्ता मध्यदेशावस्थानाद् मध्यमेति गीयते । सैव कण्ठताल्वादिस्थानेषु वर्णरूपेण व्यज्यमाना विशेषेण परावबोधप्रचण्डा

वैखरीति भण्यते। अत्र पराद्यवस्थात्मकाः त्रयः शब्दा देहान्तर्गतत्वाद् अस्फुटत्वेन विवक्षितम् अर्थं परेभ्यो न प्रतिपादयन्ति। वैखर्यात्मकः शब्द एव अर्थप्रत्यायनक्षमः। गुहा त्रीणि निहता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति (ऋ. १. १६४. ४५) इति हि निगमः। गुहायां त्रीणि पदानि निहितानि नार्थं वेदयन्ते (नि. १. ९) इति हि यास्केन व्याख्यातम्। आगमोऽपि।

स्वरूपं ज्योतिरेवान्तः परा वागनपायिनी।
यस्यां दृष्टस्वरूपायामधिकारो निवर्तते ॥

अविभागेन वर्णानां सर्वतः संवृतक्रमा।
प्राणाश्रयात् तु पश्यन्ती मयूराण्डरसोपमा ॥

मध्यमा बुद्ध्युपादाना कृतवर्णपरिग्रहा।
अन्तःसंजल्परूपा तु न श्रोत्रमुपसर्पति ॥

ताल्वोष्ठ्यव्यापृतिव्यङ्ग्या परबोधप्रकाशिनी।
मनुष्यमात्रसुलभा बाह्या वाग् वैखरी मता ॥ इति।

तथा च अस्या ऋचः अयम् अर्थः।

ये प्रजापतेः इन्द्राग्न्योर्वा वाचकशब्दं विवक्षवः स्तोतारः धीती धीत्या ध्यानात्मकेन विवक्षाजन्यप्रयत्नजातप्राणवायुपरिस्पन्दाविर्भूतेन परावस्थापन्नेन प्रथमेन शब्दब्रह्मणा इति यावत्। तृतीयेन ब्रह्मणा इति वक्ष्यमाणत्वाद् अत्रापि सख्याविशिष्टब्रह्मपद संबध्यते। वाशब्दश्चार्थे। वाचो अग्रम्। सर्वे वेदा यत् पदमामनन्ति (कठ. २.१५) इति श्रुतेः सकलवाक्यप्रतिपाद्यत्वेन मुख्यं निखिलवाग्व्यवहारस्य

वा आदिभूतं प्रजापतिरूपम् अर्थम् इन्द्राग्निरूपं वा अनयन् ध्यानविषयं प्रापितवन्तः । ये च विवक्षवः मनसा सामान्यधर्मग्राहकेण पश्यन्त्यात्मकेन द्वितीयेन शब्दब्रह्मणा इत्यर्थः । ऋतानि सत्यभूतानि अखण्डपरावस्थापेक्षया ईषद् उद्गतानि वा वाक्यानि देवतावाचकशब्दविचारविषयाणि अवदन् । वदनम् अत्र सामान्यज्ञानं विवक्षितम् । पूर्ववाक्ये यच्छब्दश्रुतेः तच्छब्दः अध्याहार्यः । ते विवक्षवः तृतीयेन । ध्यानमनोवच्छिन्नपरापश्यन्त्यपेक्षया तृतीयत्वम् । त्रित्वसंख्यापूरकेण ब्रह्मणा । अन्तर्विभक्तवर्णात्मकेन अर्थविशेषाध्यवसायबुद्धियुक्तेन मध्यमाख्येन इत्यर्थः । वावृधानाः । अन्तर्भावितण्यर्थः । वर्धयन्तः अशब्दविषयम् अर्थं शब्दवाच्यत्वेन पोषयन्तः । तुरीयेन चतुर्थेन । चतुःसंख्यापूरकेण वैखर्यात्मकेन वर्णपदवाक्यरूपेण ब्रह्मणा । धेनोः । वाङ्नामैतत् । वाच्यवाचकयोरभेदाद् वाच्ये वाचकशब्दः । मन्त्रप्रतिपाद्यस्य । यद्वा धेनुवद् धेनुः । अभिमतफलप्रदानेन प्रीणनकारिणः प्रजापतेः नाम नामधेयं प्रजासर्जनपालनादिधर्मकं प्रजापतिरिति । इन्द्राग्निदेवतापक्षे इदंदर्शनभूतेन्धनादिगुणविशिष्टम् इन्द्र इति अग्रणीत्वाङ्गनादिगुणकम् अग्निरिति च नामधेयम् अमन्वत उच्चारितवन्त इत्यर्थः । धातूनामनेकार्थत्वात् । एवं परादिवाचा प्रतिपादितस्वरूपः प्रजापतिः अस्माकम् अभीष्टं साधयतु इति इन्द्राग्नी वा साधयताम् इति प्रार्थना ॥

अथवा वाचो अग्रम् इति पदेन वेदात्मिकाया वाचो निदानं पर्यवसानभूमिर्वा परमात्मतत्त्वं विवक्ष्यते । तादृशं सकलवाङ्निदानभूतं तत्त्वं ये जिज्ञासवो महर्षयो देवा वा ।

धीतो । कर्मनामैतत् । वाशब्दो विकल्पवाची । वाह्यविषयव्यापृतया अक्षवृत्त्या अनयन् । ज्ञातुं प्रयत्नं कृतवन्तः इत्यर्थः । अनेन जाग्रदवस्थामानिविश्वसंज्ञात्मना तत्त्वं ग्रहीतुम् उद्युञ्जते इत्युक्तं भवति । ये वा ततोऽपि सूक्ष्मदर्शिनो मनसा केवलेन अन्तःकरणेन ऋतानि सत्यब्रह्मविषयाणि वाक्यानि अवदन् । अनेन स्वप्नावस्थायां केवलमनोव्यापारात् तदभिमानितैजसात्मकब्रह्मणा तत्त्वज्ञानाय प्रयतन्ते इत्युक्तं भवति । ये वा ततोऽप्यान्तरं वस्तु जिज्ञासमानाः वावृधानाः परिच्छेदापनयनरूपवर्धनाद् हेतोः तृतीयेन त्रित्वसंख्यापूरकेण ब्रह्मणा चैतन्यात्मना । अत्र सुषुप्तौ कारणशरीराभिमानी प्रज्ञानघनः प्राज्ञो विवक्षितः । तेन जागरस्वप्नावस्थावत् सुषुप्तौ वाह्यान्तरेन्द्रियजनितविक्षेपाभावात् अपरिच्छिन्नब्रह्मभावेन वर्तन्ते इति शेषः । एवम् अवस्थात्रयाभिमानिविश्वादितादात्म्येन तत्त्वं बुभुत्सवः सर्वेऽपि तत्रतत्र निरस्तसमस्तभेदं तत्त्वम् अलभमानाः सन्तः वाचो अग्रम् इति निर्दिष्टस्य फलप्रदस्य वा परमात्मनः नामनामकं यत् स्वरूपं प्रति सर्वे प्रणताः तत् निरस्तसमस्तोपाधिकं सत्यज्ञानादिलक्षणं तत्त्वं तुरीयेण तुर्यावस्थापन्नेन कारणशरीराभिमानरहितेन सर्वसाक्षिणा चैतन्येन आत्मना अमन्वत जानन्ति स्म । स ब्रह्मा स हरिः सेन्द्रः सोऽक्षरः परमः स्वराट् (तै आ. १०. ११. २) इति श्रुतौ परमात्मनो नानादेवतानामव्यवहार्यत्वदर्शनाद् अत्र प्रजापतिशब्दव्यपदेश्यम् इन्द्राग्निशब्दव्यपदेश्यं वा तदेव तत्त्वं सम्यग् अधिगतं सत् अस्माकम् अभिमतं साधयतु इति प्रार्थ्यते ॥ १ ॥

अनया उक्तविधस्य देवस्य ब्रह्माभेदेन सार्वात्म्यम् अभिधीयते । स विश्वात्मकः प्रजापतिः । स्वीयं रूपं सम्यग् जानतः पुरुषान् अनर्थहेतोः संसारात् त्रायते इति पुत्र इति व्यपदिश्यते । पुत्रः पुरु त्रायते ( नि. २. ११ ) इत्यादि निरुक्तम् । पितरं द्युलोकं वेद वेत्ति । स एव मातरं पृथिवीं वेत्ति । प्रजापतिः द्यावाभूमी स्वधार्यत्वेन जानाति इत्यर्थः । द्यौः पिता पृथिवी माता ( तै. ब्रा. ३. ७. ५. ५. ) इति मन्त्रवर्णः । अथवा हिरण्यगर्भः समवर्तताग्रे ( ऋ. १०. १२१. १ ) इति मन्त्रवर्णात् प्रजापतिः परमात्मना प्रथमं सृष्टः । तस्य पिता सकलजगदधिष्ठानं परं ब्रह्म । माता चित्प्रतिबिम्बिता मूलप्रकृतिः । तौ प्रजापतिः स्वाभेदेन जानाति । पुत्रशब्दः अत्र मुख्यार्थवाची । न केवलं परिज्ञाता अपि तु स प्रजापतिः सूनुः सर्वस्य जगतः स्वस्वकर्मसु प्रेरयिता भुवत् भवति । स एव मघः । लिङ्गव्यत्ययः । धनवाचिना मघशब्देन कर्मफलं विवक्ष्यते । कर्मफलमपि भुवत् भवति । पुनःशब्दः चार्थे । स च अनुक्तसमुच्चयार्थः । भोक्तापि स एवेत्यर्थः । *यद्वा पुनर्मघ इति समस्तं पदम् । स्तोतृभ्यः बहुधनप्रदानेऽपि पुनः पुनः अभिवृद्धधनः इत्यर्थः । किंच स प्रजापतिः द्याम् सुकृतिभिः अभिगन्तव्यां दिवम् और्णोत् स्वात्मना व्याप्नोति । अन्तरिक्षम् आकाशं तदपि व्याप्नोति । स च स्वः स्वर्गं पुण्यभोगस्थानं च व्याप्यापेक्षया व्यापकस्य

---

* स्वरदृष्ट्या पदपाठदृष्ट्या च एतद् वर्णकान्तरमेव साधीयः ॥

अधिकवृत्तिप्रदर्शनात् सर्वेभ्योऽपि लोकेभ्यः प्रजापतिरधिकवृत्ति-रित्यर्थः । ज्यायान् पृथिव्या ज्यायान् अन्तरिक्षाज् ज्यायान् दिवः (छा. ३. १४. ३) इत्यादिश्रुतेः । किं बहुना । स प्रजापतिः. इदं परिदृश्यमानं नामरूपात्मकं विश्वं जगद् अभवत् । विश्वात्मना स एव अवतिष्ठते । स आभवत् आ सर्वतो व्याप्य वर्तते । आवृत्यावृत्य ताद्रूप्येण कारणात्मना था वर्तते । सोऽस्माकम् अभिमतसर्वफलानि साधयतु इति प्रार्थ्यते ॥ २ ॥

———०———

## ५५*

का. १०. सू. ८

[ तस्मै ज्येष्ठाय ब्रह्मणे नमः । स ज्येष्ठो ब्रह्मा पुनः कीदृक् तद् उच्यते । यः ब्रह्मा भूतं भूतकालीनं भव्यं भविष्यत्कालीनं चकारात् वर्तमानकालीनमपि सर्वम् अधितिष्ठति । सर्वेभ्यः अधिक. इत्यर्थः । स्वः स्वर्गलोकश्च यस्य केवलः । स्वर्गलोकस्यापि सः अनन्याधिपतिः इत्यर्थः ॥ १ ॥

स्कम्भ इति अस्यैव ज्येष्ठब्रह्मणः नामान्तरम् । द्यौः स्वर्गलोकः भूमिः पृथ्वीलोकः एतौ उभावपि अनेन ब्रह्मणा विष्टभिते विधृतौ तिष्ठतः स्थिरौ स्तः । यत् प्राणद् अस्ति

* अस्य अस्मादनन्तरस्य च सूक्तस्य श्रीसायणाचार्यकृता व्याख्या नोपलभ्यते ॥

प्राणिति यत् निमिषत् चास्ति निमेषवत् चास्ति तत् इदं सर्वम् आत्मन्वत् प्राणिजातम् स्कम्भ एव । स्कम्भापरनामा परो ब्रह्म एव इदं सर्वम् अभवद् इत्यर्थः ।।२।।

तिस्रो ह प्रजा इति मन्त्रः ऋग्वेदसंहितायां प्रकारान्तरेण पठ्यते । यथा–

प्रजा ह तिस्रो अत्यायमीयुर्न्य१न्या अर्कमभितो विविश्रे ।

बृहद्ध तस्थौ भुवनेष्वन्तः पवमानो हरित आ विवेश ।।

(ऋ. ८. १०१. १४) इति ।

स च श्रीसायणाचार्यैः अधोलिखितप्रकारेण विव्रियते ।

याः तिस्रः प्रजाः अत्यायम् ईयुः अत्यायम् आयन् ताः इमाः प्रजाः अर्कम् अर्चनीयम् अग्निम् अभितः विविश्रे अभितो निविष्टाः ततो न पराबभूवुः । भुवनेषु अन्त मध्ये बृहत् महान् असौ आदित्यः । प्रजापतिः इत्येके । तस्थौ प्रकाशयन् अतिष्ठत् । हरितः दिशः पवमानः वायुः आ विवेश आविष्टः ।। तथा च ऐतरेयब्राह्मणम् । प्रजा ह तिस्रो अत्यायमीयुरिति । या वै ता इमाः प्रजाः तिस्रो अत्यायमायन् तानि इमानि वयांसि वङ्गावगधाश्चेरपादाः । न्यन्या अर्कमभितो विविश्र इति । ता इमाः प्रजा अर्कमभितो निविष्टाः इममेव अग्निम् । बृहद्ध तस्थौ भुवनेष्वन्तरिति । अद उ एव बृहद् भुवनेषु अन्तः असौ आदित्यः । पवमानो हरित आ विवेशेति । वायुरेव पवमानो दिशो हरित आविष्टः ।। (ऐ. आ. २. १. १) इति ।।

उपरिनिर्दिष्टात् ऐतरेयारण्यकीयखण्डात् पूर्वम् तत्र ग्रन्थे अधोलिखितः संदर्भः ।

एष पन्थाः एतत् कर्म एतत् ब्रह्म एतत् सत्यम् । तस्मान् न प्रमाद्येत् तन् नातीयात् । न ह्यत्यायन् पूर्वे । ये अत्यायन् ते परा बभूवुः ॥

वङ्गावगधाश्चेरपादाः इत्यस्य तत्रत्यं श्रीसायणाचार्यकृतं विवरणम् वङ्गाः वनगताः वृक्षाः इति अवगधाः व्रीहियवाद्याः ओषधयः इरपादाः उरपादाः उरःपादाः सर्पाः भूबिल-वासिनः इति ॥

तथा च मन्त्रस्यास्य अयम् अर्थो निष्पन्नः यथा याः प्रजाः धर्मव्यतिक्रमम् अकुर्वन् तासाम् अधोगतिर्जाता याः पुनः अग्निम् उपासितवत्यः तासाम् ऊर्ध्वगतिः संजाता अतो धर्मव्यतिक्रमो नैव कर्तव्यः इति । उत्तरार्धस्तु एवं व्याख्येयः यथा यत् बृहत् महान् अयं स्कम्भः रजसो विमानः सर्वान् लोकान् व्याप्य स्थितः यश्च हरितः हरिद्वर्णः सोमः हरिणीः हरिद्वर्णाः दिशः आ विवेश सर्वासु दिक्षु प्रसिद्धिम् अवाप तत्र हेतुः धर्मस्य अव्यतिक्रम एव ॥ ३ ॥

द्वादश प्रधय इति मन्त्रः ऋग्वेदसंहितायां प्रकारान्तरेण पठ्यते ।

द्वा॒द॑श प्र॒धय॑श्च॒क्रमेकं॒ त्रीणि॒ नभ्या॑नि॒ क उ॒ तच्चि॑केत ।
तस्मि॒न्त्सा॒कं त्रि॑श॒ता न श॒ङ्कवो॑ऽर्पि॒ताः ष॒ष्टिर्न च॑लाच॒लासः॑ ॥
(ऋ. १. १६४. ४८) इति ।

स च श्रीसायणाचार्यैः अधोलिखितप्रकारेण विव्रियते ।

द्वादश एतत्संख्याकाः प्रधयः परिधयः प्रहिता वर्तन्ते । तत्स्थानीयाः द्वादश मासाः एकम् अद्वितीयं चक्रं क्रमणस्वभावं संवत्सराख्यं चक्रम् आश्रिताः । त्रीणि . त्रिसंख्याकानि नभ्यानि नाभ्याश्रयाणि फलकानि । तत्स्थानीयानि ग्रीष्मवर्षाहेमन्ताख्यानि आश्रितानि । क उ कोऽपि महान् तत् चक्रं चिकेत जानाति । तस्मिन् चक्रे साकं सह शङ्कवः न शङ्कव इव । अत्र पुरस्तादुपचारोऽपि न-शब्दः सामर्थ्याद् उपमार्थीयः । तस्मिन्नपि सवत्सरचक्रे त्रिशताः एतत्संख्याकाः षष्टिर्न । न-शब्दश्चार्थे । षष्टिश्च अराः अरस्थानीयानि अहानि अर्पिताः अर्पितानि । कीदृशानि तानि । चलाचलासः । एकः चल-शब्दो द्विर्भावप्राप्तः । चलाः चलनस्वभावानि इत्यर्थः ॥

अथर्ववेदीयमन्त्रे अर्पिताः इत्यस्य स्थाने आहताः इति शब्दः प्रयुक्तः । खीलाः कीलाः शङ्कव एव । अविचाचलाः अचलाः वृढनिबद्धाः इति यावत् । अन्यत् समानम् ॥४॥

षड् यमाः मासद्वयात्मकाः ऋतवः षड् अत्र यदि अभिप्रेताः स्युः एक एकजः अधिजायमानो मासस्तर्हि संभवति । षड् यमाः एकजस्य एकस्य अपिरवं भागम् इच्छन्ति इत्यर्थः संपद्यते । विवक्षितोऽर्थस्तु न स्पष्टः ॥५॥

जरत् अतिपुराणम् महत् पदं स्थानं तत्त्वमिति यावत् । नाम-शब्दः पादपूरणः । तत् आविः सत् प्रकटमपि गुहा गुहायां निहितं निगूढमिति यावत् । एजत् चलं प्राणत् प्राणयुतं जीवदिति यावत् । इदं सर्वं तत्र तस्मिन् तत्त्वे आर्पितम् । तदवयवभूतमित्यर्थः ॥६॥

एकचक्रम् इति मन्त्रः अथर्ववेदसंहितायामेव अन्यत्र प्रकारान्तरेण पठ्यते।

अष्टाचक्रं वर्तत एकनेमि सहस्राक्षरं प्र पुरो नि पश्चा।

अर्धेन विश्वं भुवनं जजान यदस्यार्धं कतमः स केतुः ॥

(अथर्व. ११. ६. २२)

स च श्रीसायणाचार्यैः अधोलिखितप्रकारेण विव्रियते।

अष्टाचक्रं त्वगसृगाद्याः सप्त धातवः ओजो नाम अष्टमो धातुः। ते अत्र रथात्मना वर्णनीयस्य शरीरस्य चक्रत्वेन रूप्यन्ते। अष्टौ चक्राणि यस्य तद् अष्टाचक्रं शरीरम्। तादृक् शरीरम् एकनेमि एकेनैव प्राणेन नेमिना इव वेष्टितम्। सहस्राक्षरं बहुभिः अक्षैः उपेतम्। यद्वा प्राणस्पन्दवशेन सहस्रं बहुविधानि अक्षराणि वर्णावर्णात्मकानि शब्दरूपाणि यस्य तत् तथोक्तम्। एवंरथात्मकं शरीरं पुरः पुरस्तात् पूर्वस्मिन् भागे प्र वर्तते पश्चा पश्चात् अपरभागे नि वर्तते। इत्थं-महानुभावः प्राणः प्राणिशरीरं प्रविश्य तत्र प्रवृत्तिनिवृत्ती जनयति इत्यर्थः। स प्राणः सूत्रात्मभावेन स्थितः अर्धेन स्वात्मनोंऽशेन एकेन विश्वं सर्वं भुवनं भूतजातं जजान प्राणवाय्वात्मना प्रविश्य जनयामास। अस्य सूत्रात्मनः प्राणस्य यद् अन्यद् अर्धं प्राणरूपेण अवस्थिताद् अपरो भागः तस्य अपरिच्छिन्नस्य केतुः कतमः कीदृशः। परब्रह्मात्मकस्य प्राणस्य एकदेशे एव कृत्स्नं जगद् वर्तते। अवशिष्टं स्वरूपम् आनन्त्यात् इदम् ईदृग् इति निर्धारयितुम् अशक्यम् इत्यर्थः ॥

प्रस्तुतमन्त्रे एकचक्रम् इति पाठः । स च समग्रशरीरदृष्टचा । क्व तद् बभूव इत्यस्य कतमः स केतुः इत्यस्य च एक एवार्थः ॥ ७ ॥

पञ्चवाहीति मन्त्रस्य अन्वयस्त्वयम् । एषाम् अग्रं पञ्चवाही वहति । युक्ताः प्रष्टयः अनुसंवहन्ति । अस्य अयातम् ददृशे । यातम् न ददृशे । अस्य परं नेदीयः । अस्य अवरम् दवीयः ॥ एषाम् इत्यनेन के विवक्षिताः तन् न स्पष्टम् । पञ्चवाही पञ्चानां वाहकः पञ्चभिः वाहको वा कः तदपि न स्पष्टम् । प्रष्टयः पुरस्ताद् युक्ताः अश्वाः । अयातम् अगमनम् स्थितिः सा दृश्यते । यातम् गमनम् न दृश्यते । अस्य परम् ऊर्ध्वभागः नेदीयः समीपे वर्तते अस्य अवरम् अधोभागः दवीयः दूरे वर्तते ॥ परब्रह्मविषयकोऽयं मन्त्रः अस्पष्टप्रायः ॥ ८ ॥

तिर्यग्बिल इति मन्त्र निरुक्ते विवृतः । यथा —

तिर्यग्बिलश्चमस ऊर्ध्वबन्धन ऊर्ध्वबोधनो वा । यस्मिन् यशो निहितं सर्वरूपम् । अत्र आसत ऋषयः सप्त सह । आदित्यरश्मयो ये अस्य गोपा महतो बभूवुः । इति अधिदैवतम् ॥ अथ अध्यात्मम् । . . . इन्द्रियाणि यानि अस्य गोप्तृणि महतो बभूवुः इति आत्मगतिमाचष्टे ॥ ( नि. १२. ३८ )

दुर्गाचार्येण च निरुक्तविवृतौ विवृतः । यथा —

तिर्यञ्चि अस्य मण्डलस्य मधुपूर्णस्य इव रश्मिच्छिद्राणि । चमनं चोदकम् एष सनोति इति चमसः । ऊर्ध्वं चैतद् बद्धम् आ भूतसंप्लवात् न निपद्यते इति । ऊर्ध्वं वा

अवस्थितः प्रकाशेन बोधयतीति ऊर्ध्वबुध्नः। तस्मिन् चमसे मण्डले यशः उदकं निहितं नियमेन अधिकं वा हितम् अवस्थापितम् । विश्वरूपम् अनेकप्रकारम् अनेकरूपम् । कः पुनः तद् निहितम् इति । ये अस्य महतः जगतः आत्मनो वा गोपाः गोप्तारः एते रश्मयः बभूवुः भवन्ति । ये च अत्र एतस्मिन् मण्डले साकम् एकीभूताः तदधिष्ठात्रा सह आसते तैर्हि चतसृषु दिक्षु ऊर्ध्वम् अधो मण्डलं च उत्सृष्टानि यानि ज्योतींषि अस्य ते रश्मयः सप्त सप्त सर्पणाः ऋषणाद् दर्शनाद् अस्य धर्मस्य ऋषय उच्यन्ते। इति अधिदैवतम् ॥ अथ अध्यात्मम्। तिर्यक्छिद्रम् इदमेव शिरः चमसः। चम्यन्ते अनेन रसा इति । ऊर्ध्वबन्धनश्च । उपरि ह्यवस्थितम् एतद् बन्धनम् अस्य शरीरस्य । एतद्वियोगे विस्रस्यते शरीरम् । यस्मिन् यशो निहितं विश्वरूपं नानाप्रकारम् इन्द्रियत्वेन भृतं रसाख्यं ज्ञानाख्यं वा। तस्य चमसस्य ये विधातारः तद्द्वारेण अस्य शरीरस्य महतो गोप्तारः तत्रैव चमसान्तरम् अनुप्रविष्टाः साकं सह यद् यशः उपजीवन्त आसते इति आत्मगतिमाचष्टे ॥ ९ ॥

या ऋक् पुरस्ताद् युज्यते या च पश्चात् प्रयुज्यते या च विश्वतः सर्वत्र या च सर्वतः । उक्तोऽर्थ एव पुनरुच्यते । प्रयुज्यते। यया ऋचा यज्ञः प्राङ् अग्रे तायते तन्यते ऋचां मध्ये सा कतमा इति ताम् पूर्ववर्णिताम् ऋचम् अहं त्वा त्वां पृच्छामि । सर्वासु ऋक्षु व्याप्य स्थितं यत् परमं तत्त्वं तद्विषयकोऽयं प्रश्न इति प्रतिभाति ॥ १० ॥

यद् एजति चलति यत् पतति उड्डयते यत् तिष्ठति यत् प्राणत् चेतनं यत् अप्राणत् जडं यत् च निमिषत् अक्षिसंकोचसहितं भुवत् भवति विश्वरूपं सर्वरूपं तत् पृथिवीं दाधार। उपलक्षणमेतत्। सर्वान् धारयति तत् संभूय प्रलयकाले एकीभूय एकमेव भवति तदतिरिक्तं नान्यत् किञ्चिद् भवति ॥ ११ ॥

अनन्तं सर्वत्र सर्वदा च विद्यमानं विभु नित्यं च पुरुत्रा सर्वत्र विततं व्याप्य स्थितम्। अस्मिन् अनन्तं नित्यम् अन्तवत् अनित्यं च उभयमपि समन्ते एकीभूते। नाकपालः स्वर्गाधिपतिः ते एकीभूते सान्तानन्ते विचिन्वन् मृगयमाणः चरति। किंभूतः नाकपालः। अस्य परमतत्त्वस्य भूतं वर्तमानदशां भव्यं भाविदशां च विद्वान् जानन् ॥ १२ ॥

प्रजापतिरिति मन्त्रस्य पूर्वार्धः वाजसनेयिशुक्लयजुर्वेद-संहितायामुपलभ्यते पाठभेदेन। यथा —

प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा वि जायते ॥

(शु. य. ३१.१९)

महीधरेण च वेददीपाख्ये स्वभाष्ये विवृतः। यथा —

यः सर्वात्मा प्रजापतिः अन्तर्हृदि स्थितः सन् गर्भे चरति गर्भमध्ये प्रविशति। यश्च अजायमानोऽनुत्पद्यमानः नित्यः सन् बहुधा कार्यकारणरूपेण विजायते मायया प्रपञ्च-रूपेण उत्पद्यते ॥ इति ॥

उत्तरार्धस्तु अस्य सूक्तस्य सप्तम्या ऋचः उत्तरार्धेन प्रायः सदृशः ॥ १३ ॥

तं परमात्मानं यथा उदहारी जलवाहिनी नारी कुम्भेन उदकम् ऊर्ध्वं हरति एवम् उदकम् ऊर्ध्वं भरन्तं सर्वे चक्षुषा पश्यन्ति परन्तु मनसा सर्वे तं न विदुः न जानन्ति। जनैः उदहार्याः घटः दृश्यते किन्तु तद्घटान्तःस्थितं जलं न ज्ञायते एवं जगद्रूपेण स्थितः परमात्मा सर्वैः दृश्यते किन्तु जगदन्तः-स्थितं परमात्मनः रूपं न केनापि ज्ञायते इत्याशयः ॥ १४ ॥

अयं परमात्मा पूर्णेन दूरे वसति पूर्णादपि पूर्णतरः ऊनेन दूरे हीयते हीनादपि हीनतरः। अणोरणीयान् महतो महीयान् इत्याशयः। भुवनस्य मध्ये अयं परमात्मा महत् यक्षम् महान् ईश्वरः। सर्वे राष्ट्रभृतः राजानः तस्मै बलिं भरन्ति। अयं परमात्मा एव परमसम्राट् ॥ १५ ॥

यतः यस्मात् सूर्यः उदेति उत्पद्यते यत्र यस्मिश्च अस्तं गच्छति प्रलीनो भवति तदेव ज्येष्ठम् अहं मन्ये किं चन किंचिदपि न तद् उ अत्येति तस्मात् ज्यायः ॥ १६ ॥

ये अर्वाङ् इति मन्त्रः तैत्तिरीयारण्यके पाठभेदेन उपलभ्यते। यथा —

ये अ॒र्वाङ् उ॒त वा॑ पु॒रा॒णे वे॒दं वि॒द्वांस॑म॒भितो॑ वदन्ति।
आ॒दि॒त्यमे॒व ते परि॑वदन्ति॒ सर्वे॑ अ॒ग्निं द्वि॒तीयं॑ तृ॒तीयं॑ च हं॒सम् ॥
(तै. आ. २.१५)

श्रीसायणाचार्येण च वेदार्थप्रकाशनामके स्वभाष्ये विवृतः। यथा —

अर्वाङ् अर्वाञ्चम् इदानीन्तनमनुष्यम् अध्येतृरूपम् उत वा पुराणे अथवा पुरातनं व्यासवसिष्ठादिरूपम्। वेदं विद्वांसं पाठाद् अर्थाच्च वेदतत्त्वाभिज्ञं महात्मानम्। ये मूर्खाः अभितो वदन्ति तत्र तत्र निन्दन्ति ते मूर्खाः सर्वे आदित्यमेव निन्दन्ति। ततो द्वितीयम् अग्निं निन्दन्ति। ततः तृतीयं हंसं गमनशीलं वायुं निन्दन्ति। अस्य वेदविदः अग्निवाय्वादित्यसायुज्ययोग्यत्वाद् एतन्निन्दैव तेषां निन्दा ॥१७॥

अस्य हरेः हरिद्वर्णस्य हंसस्य स्वर्गं पततः स्वर्गमुद्दिश्य उड्डयमानस्य पक्षौ सहस्राह्ण्यं वियतौ तावत् अन्तरं विस्तृतौ यावत् अतिक्रमितु दिनसहस्रं व्यत्येति। स हंसः सर्वान् देवान् उरसि उपदद्य निधाय विश्वा भुवनानि सर्वाणि प्राणिजातानि संपश्यन् याति गच्छति ॥१८॥

यस्मिन् ज्येष्ठं परब्रह्म अधि श्रितं स जनः सत्येन सत्यरूपधर्मेण ऊर्ध्वः तपति ब्रह्मणा स्तुतिरूपेण धर्मेण अर्वाङ् अधस्तात् वि पश्यति पृथ्वीलोकस्थितं सर्वं वस्तुजातं विजानाति। प्राणेन प्राणनरूपधर्मेण तिर्यङ् सर्वतः प्राणति व्याप्तो भवति। अथवा यस्मिन् सूर्ये ज्येष्ठं परब्रह्म अधि श्रितं स सूर्यः। सत्येन इत्यादि तु तुल्यम् ॥१९॥

यो वै जनः याभ्यां वसु परब्रह्म निर्मथ्यते ते अरणी विद्यात् स विद्वान् ज्येष्ठं मन्येत स महत् ब्राह्मणं विद्यात्। अत्र ज्येष्ठम् महद् ब्राह्मणम् इत्याभ्यां परब्रह्मैव विवक्षितम्। स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम्। ध्याननिर्मथनाभ्यासाद् देवं पश्येन् निगूढवत्॥ (श्वेताश्व. १. १४) इति श्वेताश्वतरीयो मन्त्रः अत्रार्थे अनुसंधेयः ॥२०॥

सः परमात्मा अग्रे सृष्टेः पूर्वम् अपाद् अखण्डः आसीत्। अग्रे सृष्टौ पूर्वम् स्वः सूर्यम् आभरत् आहरत् जनयामास इत्यर्थः। अनन्तरं चतुष्पाद् भूत्वा भोगविषयः अभवत्। स एव च भोक्ता सन् भोजनम् आदत्त भोग्यं वस्तुजातं बुभुजे। अस्य चतुष्पात्त्वं पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि (पुरुषसूक्त = ऋ. १०. ९०. ३) इत्यभिप्रायेण सोऽयमात्मा चतुष्पात् (माण्डूक्योप. २) इत्यभिप्रायेण वा ॥२१॥

यो जनः उत्तरावन्तं सर्वोत्कृष्टं सनातनं नित्यं देवं परमात्मानम् उपासातै उपासीत सः भोग्यः भोगयोग्यः भोक्ता भवत् भवेत् अथो अपिच बहु अन्नम् अदत् अन्येभ्यो भोग्यवस्तुजातं दद्यात् ॥२२॥

परमात्मानम् एनं विद्वांसः सनातनम् अनादित्वात् नित्यं पुरातनम् आहुः। उत अपिच अद्य पुनर्णवः स्यात् नवजात इव पुनर्भवति। अत्र दृष्टान्तः। अहोरात्रे पुरातने अपि प्रत्यहं प्र जायेते पुनःपुनः नवे इव जायेते। रूपयोः रूपविषये अन्यः नवजातः अन्यस्य भूतकालीनस्य समः। यथा भूतकालीने अहोरात्रे तथा वर्तमानकालीने अपि इत्यतः पुराणत्वं नवत्वं च ॥ २३ ॥

यद्यपि परब्रह्म एकमेव तथापि अस्मिन् जगति स्वं स्वस्वरूपं शतं शतधा सहस्रं सहस्रधा अयुतं दशसहस्रधा न्यर्बुदं दशकोटिधा निविष्टं गूढं वर्तते। अत एव एकमपि तद् बहु भवति। अभिपश्यत एव अस्य तत् घ्नन्ति विद्वांसः तत् प्रकटीभूतम् अनेकत्वम् एकत्वम् आपादयन्ति। तस्मात् ततः एतत् एवंविधे विदुषि एषः देवः रोचते प्रकाशते ॥ २४ ॥

परमात्मनः द्वे रूपे । जीवः ईशश्च । तयोः एकं वालाद् अणीयस्कं केशादपि सूक्ष्मतरम् । वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥ (श्वेताश्व. ५. ९) इति श्रुतिरत्रानुसंधेया । उत अपिच एकम् अपरं न इव दृश्यते व्यक्ततया न दृश्यते । यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ॥ (तैत्ति. उप. २. ४. ९) अदृष्टो द्रष्टा । (बृह. ८. ७. २३) इत्यादयः श्रुतयोऽत्रानुसंधेयाः । ततः परिष्वजीयसी उभाभ्यामपि परमात्मनः रूपाभ्यां निकटतरा उभयरूपव्यापिनी या देवता सा मम प्रिया ॥ २५ ॥

इयं पूर्वोक्ता ईशे जीवे च व्याप्य स्थिता देवता कल्याणी परमानन्दस्वरूपा अजरा नित्या मर्त्यस्य मरणधर्मवतः मनुष्यस्य गृहे देहे अमृता अमरणधर्मा अविनाशशालिनी तिष्ठति । यस्मै जीवाय जीवस्य कृते सा कृता तपोयोगसमाधिभिः ज्ञानगोचरीकृता स जीवः शये निर्वृतो भूत्वा शय्यासुखम् अनुभवति । यः मनुष्यदेहः चकार बहून् प्रयत्नान् कृत्वा तां देवतां जीवाय ज्ञानगोचरीकृतवान् स जजार जीर्णः अभवत् ॥ २६ ॥

त्वं स्त्रीति मन्त्रः श्वेताश्वतरोपनिषदि चतुर्थाध्याये तृतीयो मन्त्रः । स च तत्र स्पष्टो मन्त्रार्थ इत्येवं श्रीशंकराचार्यैर्विवृतः ॥ २७ ॥

उतैषामिति मन्त्रस्य शब्दार्थस्तु स्पष्ट एव एकः एव परमात्मा अनेकरूपेण अवस्थित इत्यभिप्रायोऽपि स्पष्ट एव ॥ २८ ॥

पूर्णं परब्रह्मरूपं जगत् पूर्णात् परब्रह्मणः उदचति उद्गच्छति । परब्रह्मणः परब्रह्मरूपमेव जगत् उत्पद्यते । पूर्णं परब्रह्मरूपं जगत् पूर्णेन परब्रह्मणा सिच्यते पोष्यते । उत अपिच तत् परब्रह्म यतः येन तत्त्वेन परिषिच्यते तद् अद्य विद्याम इति परब्रह्मणोऽपि परिपोषकं तत्त्वं ज्ञातुम् ऋषिः आशंसते ॥ २९ ॥

एषा परब्रह्मरूपा देवता सनत्नी नित्या सती सनमेव जाता नित्यमेव जायते । एकैव नित्यनूतनानि रूपाणि धत्ते ! पुराणी पुरातनी एषा देवता सर्वं परिवभूव सर्वदेशं सर्व-कालं च व्याप्य तिष्ठति । उषसोऽपि विभाती प्रकाशिका सा मही महती देवी एकैकेन मिषता विचष्टे । यः कोऽपि पश्यति तस्मिन् स्थित्वा सा देवतैव पश्यति । सा देवता यदि अन्तःस्थिता न भवेत् न कोऽपि पश्येद् इत्यर्थः ॥ ३० ॥

अविरिति मन्त्रस्य शब्दार्थः स्पष्टः । सकलं वस्तुजातं यत् स्वस्वकार्यक्षमं तत्र हेतुभूता अन्तःस्थिता इयं परमात्म-स्वरूपा देवी एव इत्यभिप्रायोऽपि स्पष्टः ॥ ३१ ॥

अन्ति सन्तं समीपे विद्यमानं परमात्मानं कोऽपि न जहाति । परमात्मा वस्तुनः स्वरूपभूतः एव तद्धानौ वस्तुनः स्वरूपनाश एव इत्यतः न कोऽपि तं जहाति इत्यर्थः । अन्ति सन्तं समीपे विद्यमानं परमात्मानं न कोऽपि पश्यति । देवस्य काव्यं माहात्म्यं पश्य यत् स देवः न ममार न जीर्यति न म्रियते न वा जीर्णो भवति ॥ ३२ ॥

अपूर्वेण सर्वप्रथमेन येन परमात्मना इषिताः प्रेरिताः याः वाचः ता एव लोकाः यथायथम् यथा प्रेरिताः तथैव अन्यूनानतिरिक्ताः वदन्ति । अपिच वदन्तीः उद्यमानाः ताः यत्र गच्छन्ति तद् विद्वांसो महद् ब्राह्मणम् आहुः। उच्चरिताः ताः यः शृणोति श्रुत्वा च तासाम् अर्थं यः जानाति सोऽपि परमात्मा एव । अन्तःस्थितः परमात्मा यदि न भवेत् न कोऽपि वक्तुं श्रोतुं वा समर्थो भवेद् इत्यभिप्रायः ॥ ३३ ॥

यत्रेति मन्त्रः स्पष्टार्थः ॥ ३४ ॥

येभिर्वात इति मन्त्रोऽपि स्पष्टार्थप्रायः । सध्रीचीः संहिता इति यावत् । आहुतिम् अत्यमन्यन्त इत्यस्य आहुतिभिः वयं न स्पृष्टाः इति ये अमन्यन्त इत्यर्थः । आशयस्तु एवंभूतः परमात्मैव इति । केनेषितं पतति प्रेषितं मनः। (केन. १.१) भीषास्माद् वातः पवते। (तैत्ति. उप. २.८) इत्यादयः श्रुतयोऽत्रानुसंधेयाः ॥ ३५ ॥

इमामेषामिति मन्त्रः जैमिनीयोपनिषद्ब्राह्मणे विवृतः। इमाम् एषा पृथिवी वस्त एकः इति अग्निर्ह सः। अन्तरिक्षं पर्येको बभूव इति वायुर्ह सः । दिवमेको ददते यो विधर्तेति आदित्यो ह सः । विश्वा आशाः प्रतिरक्षन्ति अन्य इति एता ह वै देवता विश्वा आशाः प्रतिरक्षन्ति चन्द्रमा नक्षत्राणीति ॥ (जैमि. उप. ब्रा. १. ३४)॥ ३६ ॥

यो विद्यात् इति मन्त्रः स्पष्टार्थः ॥ ३७ ॥
वेदाहमिति मन्त्रोऽपि स्पष्टार्थः ॥ ३८ ॥

यदन्तरेति मन्त्रस्य अप्स्वासीत् इति मन्त्रस्य च शब्दार्थस्तु स्पष्टप्रायः । आशयस्तु प्रलयकालेऽपि परमात्मा अक्षत एव तिष्ठतीति ॥ ३९–४० ॥

उत्तरेणेवेति मन्त्रस्य शब्दार्थस्तु स्पष्टप्रायः । आशयः किन्तु अस्पष्ट एव ॥ ४१ ॥

निवेशन इति मन्त्रः प्रकारभेदेन ऋग्वेदसंहितायां पठितः । यथा –

रा॒यो बु॒ध्नः सं॒गम॑नो॒ वसू॑नां॒ विश्वा॑ रू॒पाभि च॑ष्टे॒ शची॑भिः ।

दे॒व इ॑व स॒विता स॒त्यध॒र्मेन्द्रो॒ न त॑स्थौ स॒मरे॑ धना॑नाम् ॥

(ऋ. १०. १३९. ३)

श्रीसायणाचार्यैश्च विवृतः । यथा–

रायः धनस्य बुध्नः बन्धको मूलभूतो वा । तथा वसूनां धनानां संगमनः संगमयिता प्रापयिता । ईदृशः सविता शचीभिः दीप्तिभिः विश्वा रूपा सर्वाणि रूपाणि निरूपणीयानि पदार्थजातानि अभि चष्टे अभिपश्यति प्रकाशयति । अपिच देवइव अयं सविता सावको देवः सत्यधर्मा सत्यम् अवितथं धर्म धारण धारणहेतुभूतं कर्म वा यस्य तादृशो भवति । तथा इन्द्रो न इन्द्र इव धनानां समरे संग्रामे सम्यक् प्रापणे तस्थौ । अयं सविता उद्युक्तः सन् तिष्ठति ॥४२॥

पुण्डरीकं नवद्वारं नवद्वारं शरीरम् । तत् त्रिभिर्गुणेभिः त्रिभिः सत्त्वरजस्तमोलक्षणगुणैः आवृत व्याप्तम् । तस्मिन्

तत्र यद् आत्मन्वत् यक्षं महत् परमात्मतत्त्वं वर्तते तत् वै ब्रह्मविदो विदुः जानन्ति ॥४३॥

परमात्मा पूर्णकामत्वात् अकामः कामरहितः धीरः बुद्धिमान् अमृतः नित्यः रसेन तृप्तो न कुतश्चन ऊनः परिपूर्णरसात्मकः इत्यर्थः। तम् एवंविधं धीरम् अजरं जरारहितं युवानं नित्यतरुणम् आत्मानम् एव विद्वान् जानन् मृत्योः न विभाय न बिभेति ॥४४॥ ]



## ५६ *

### का. १२. सू. १

[बृहत् महत् सत्यम् उग्रम् ऋतम् कदापि क्षणमात्रमपि अप्रस्खलन् सर्व वस्तुजात स्वस्वकर्मणि स्थापयन् विश्वस्थिति-हेतुभूतो नियमः दीक्षा तपः ब्रह्म स्तोत्र यज्ञश्च इत्येतानि यां पृथिवीं धारयन्ति सा भूतकालीनस्य भविष्यत्कालीनस्य। उप-लक्षणमेतत् वर्तमानकालीनस्य वस्तुजातस्य च। पत्नी शासित्री नः अस्माकम् उरुं लोकं कृणोतु करोतु। तस्याः कृपया विशालस्थलभाजो वयं भवेम इत्यर्थः ॥१॥

उद्वतः उन्नतायाः प्रवतः प्रसृतायाश्च यस्याः पृथिव्याः बहु असंबाधं समं च भूयिष्ठो देशः बाधारहितः समश्च। या च नानावीर्याः विविधगुणाः ओषधीः बिभर्ति धारयति सा

* अस्या व्याख्यायां स्पष्टार्थाः मन्त्राः मन्त्रभागाश्च न विवृताः॥

पृथिवी मानवानां वध्यतः मध्यतः मध्ये नः अस्मत्कृते प्रथताम् विशाला भवतु राध्यतां समृद्धा च भवतु ॥२॥

यस्यां समुद्रः उत अपिच सिन्धुः नदी इतराश्च आपः वर्तन्ते यस्याम् अन्नं कृष्टयः तद्रक्षकाः प्रजाश्च संबभूवुः उत्पद्यन्ते यस्याम् इदम् प्राणत् उच्छ्वसत् एजत् संचरत् इदं प्राणिजातं जिन्वति विचरति सा भूमिः नः पूर्वपेये दधातु सा तथा करोतु यथा वयं सोमादीनां प्रथम-पातारो भवेम इत्यर्थः ॥ ३ ॥

यस्यां पूर्वे पूर्वजनाः भूतकालीनाः जनाः विचक्रिरे विस्तृताः अभवन् यस्यां देवाः असुरान् अभ्यवर्तयन् पराजय-भाजः अकुर्वन् गवाम् अश्वानां वयसश्च पक्षिणां विष्ठा निवासस्थानं सा पृथिवी नः अस्मत्कृते भगं समृद्धिं वर्चः तेजश्च दधातु अस्मभ्यम् एतत् ददातु इत्यर्थः ॥ ५ ॥

विश्वंभरा विश्वस्य सर्वस्य धारयित्री वसुधानी वसु धनं दधाना प्रतिष्ठा स्थिरा हिरण्यवक्षा हिरण्यगर्भा जगतो निवेशनी संचरतः प्राणिजातस्य स्थानदात्री वैश्वानरं सर्वत्र वर्तमानम् अग्निं बिभ्रती इन्द्रऋषभा इन्द्रेण पतिमती नः द्रविणे धनें दधातु ॥ ६ ॥

यां पृथिवी विशालां भूमिं विश्वदानी सर्वदा अस्वप्नाः जाग्रतः देवाः अप्रमादं प्रमादरहिता भूत्वा रक्षन्ति सा नः प्रियं मधु दुहां ददातु अथो अपि च वर्चसा तेजसा उक्षतु सिञ्चतु ॥ ७ ॥

या अग्रे सृष्टेः प्रारम्भकाले अर्णवे अधि समुद्रे सलिलं जलरूपा आसीत् । अप एव ससर्जादौ (मनु. १. ८) इत्यादिः स्मृतिः अत्रानुसंधेया । यां मनीषिणः चतुराः देवाः मायाभिः स्वदिव्यशक्तिभिः अन्वचरन् अन्वगच्छन् यस्याः पृथिव्याः सत्येन आवृतं. त्रिकालाबाधितम् अमृतं नित्यं हृदयं गूढस्वरूपं परमे व्योमन् सर्वोत्कृष्टे लोके । परब्रह्मणि इति यावत् । वर्तते सा भूमिः नः अस्मभ्यं त्विषिं तेजः बलं च ददातु अस्मान् उत्तमे राष्ट्रे च दधातु ॥ ८ ॥

यस्याम् परिचराः समानीः आपः सर्वतो व्याप्तानि निम्नोन्नतत्वरहितानि जलानि अहोरात्रे रात्रिंदिवम् अप्रमादं प्रमादराहित्येन क्षरन्ति प्रवहन्ति भूरिधारा बहुनदीका सा भूमिः नः पयः दुग्धं दुहां ददातु अथो अपि च वर्चसा तेजसा उक्षतु सिञ्चतु ॥ ९ ॥

याम् अश्विनौ अमिमातां यस्याः मानं अश्विनौ अकुरुताम् यस्यां विष्णुः विचक्रमे पदानि न्यदधात् शचीपतिः शक्त्या. स्वामी इन्द्रः याम् आत्मने आत्मनः कृते अनमित्रां शत्रुरहितां चक्रे सा नो भूमिरित्यादि स्पष्टार्थम् ॥ १० ॥

हे पृथिवि ते तव हिमवन्तः गिरयः सुखदाः भवन्तु ते तव अरण्यम् स्योनम् सुखदम् अस्तु । बभ्रुवर्णां कृष्णवर्णां रोहिणीं रोहितवर्णां लोहितवर्णां रक्तवर्णां विश्वरूपाम् अनेकवर्णाम् ध्रुवां स्थिराम् इन्द्रगुप्ताम् इन्द्रेण रक्षितां पृथिवीं विशालां भूमिम् अजीतः अनुपक्षितः अहतः अक्षतः । समानार्था इमे त्रय. शब्दाः । सन् अधि अस्याम् अधिष्ठितो भवेयम् ॥ ११ ॥

हे पृथिवि यत् ते तव मध्यं यच्च नभ्यं मध्यभागः। मध्यनभ्यशब्दौ समानार्थौ । याः ऊर्जः बलप्रदानि धान्यानि ते तव तन्वः शरीरात् संबभूवुः उत्पद्यन्ते तासु तत्र नः अस्मान् अभि पवस्व पवित्रीकुरु । मातेत्यादि स्पष्टार्थम् । पिपर्तु इत्यस्य पूरयतु पूर्णान् करोतु इत्यर्थः ।। १२ ।।

विश्वकर्माणः सर्वप्रकारकयागादिकर्मकर्तारः यस्यां भूम्यां वेदिं परिगृह्णन्ति यस्यां यज्ञं तन्वते कुर्वन्ति यस्यां ऊर्ध्वाः शुक्राः प्रकाशमानाः स्वरवः यूपाः आहुत्याः पुरस्तात् मीयन्ते निर्मीयन्ते सा भूमिः स्वयं वर्धमाना नः वर्धयत् वर्धयतु समृद्धान् करोतु इत्यर्थः ।। १३ ।।

यः नः द्वेषत् अस्मान् द्विष्यात् यः पृतन्यात् अस्माभिः समं युध्येत यः मनसा यश्च वधेन शस्त्रेण अस्मान् अभि दासात् उपक्षपयेत् त हे पूर्वंकृत्वरि भूमे पूर्वकार्यकारिणि पृथिवि नः रन्धय अस्मद्वशगं कुरु ।। १४ ।।

येभ्यः मर्त्येभ्यः येषां मानवानां कृते ।। १५ ।।

हे पृथिवि ताः समग्राः सर्वाः प्रजाः नः संदुहृताम् धनादिदात्र्यः भवन्तु ।। १६ ।।

विश्वस्वम् सर्वप्रसविनीम् । स्योनां सुखदाम् । विश्वहा सर्वदा ।। १७ ।।

सधस्थं यत्र स्थाने सर्वे सह तिष्ठन्ति तादृक् तव स्थानं महत् । त्वमपि महती बभूविथ अभवः । तव वेगः एजथुः वेपथुश्च महान् । त्रय इमे शब्दाः समानार्थकाः । महान् इन्द्रः त्वाम् अप्रमादं रक्षति । हे भूमे सा त्वं नः संदृशि

हिरण्यस्य इव प्र रोचय अस्मान् तथा प्रकाशवतः कुरु यथा वयं हिरण्यसदृशाः दृश्येम इति । संदृशि इत्यस्य दर्शने इत्यर्थः । मा नः इत्यादि स्पष्टार्थम् ॥ १८ ॥

अग्निवासाः अग्निरूपवस्त्रवती असितज्ञूः कृष्णवर्णजानुमती पृथिवी मा मां त्विपिमन्तं तेजस्विनं संशितं तीक्ष्णं कुत्रापि अप्रतिहतप्रसरं कृणोतु करोतु ॥ २१ ॥

अरंकृतम् अलंकृतं सस्कृतम् । स्वधया सुखेन । जरदष्टिं दीर्घायुषं चिरंजीविनम् ॥ २२ ॥

पुष्करं कमलम् ॥ २४ ॥

भगः धनधान्यादिसमृद्धिः ॥ २५ ॥

विश्वहा सर्वदा । विश्वधायसम् सर्वेषां पोषयित्रीम् । अच्छावदामसि स्तुमः ॥ २७ ॥

उदीराणाः उत्तिष्ठन्तः । प्रक्रामन्तः प्रचलन्तः । मा व्यथिष्महि व्यथायुक्ताः न भवेम ॥ २८ ॥

विमृग्वरीम् शोधयित्रीम् पावनकर्त्रीम् । ऊर्जं बलम् । पुष्टं पोषणम् । शिष्टं स्पष्टार्थम् ॥ २९ ॥

सैदुः श्लेष्मादिरूपो मुखमलः ॥ ३० ॥

स्योनाः सुखदाः ॥ ३१ ॥

परिपन्थिनः शत्रोः । वधम् आयुधं वरीयः दूरतरं यथा स्यात् तथा यावय पृथक्कुरु ॥ ३२ ॥

हे भूमे सूर्येण मेदिना सहायभूतेन यावत् ते तव अभि विपश्यामि तावत् मे मम चक्षुः उत्तरोत्तरां समां प्रतिसंवत्सरं मा मेष्ट मा नश्यतु ॥ ३३ ॥

उत्तानाः ऊर्ध्वमुखाः। प्रतीचीम् अभिमुखीं संनिहिताम्। पृष्टीभिः पर्शुभिः पार्श्वास्थिभिः। प्रतिशीवरि सर्वव्यापिनि ॥ ३४ ॥

अर्पिपं हिंस्याम् ॥ ३५ ॥

अप सर्पं विजमाना सर्पादिजन्तुम् अप विजमाना दूरीकुर्वती। देवपीयून् देवनिन्दकान् दस्यून् परा ददती दूरे स्थापयन्ती ॥ ३७ ॥

सदोहविर्धाने सदः आसनं हविर्धानं हविर्धारकं पात्रं च। निमीयते निखन्यते। ब्रह्माणः स्तोतारः ॥ ३८ ॥

यस्यां पूर्वे प्राचीनाः भूतकृतः स्रष्टारः वेधसः पूज्याः सप्त ऋषयः सत्रेण यज्ञेन तपसा च सह गाः धेनूः उदानृचुः अस्तुवन् सा भूमिः नः अस्मभ्यं तद् धनं दिशतु प्रयच्छतु यद् वयं कामयामहे। इन्द्रः पुरोगवः एतु अस्माकम् अग्रेसरो भूत्वा व्रजतु भगः अनुप्रयुङ्क्ताम् अस्माकम् पश्चात् व्रजतु। उभाभ्यां सुरक्षिता वयं भवेम इत्याशयः ॥ ३९–४० ॥

व्यैलबाः वि-ऐलबाः विगतः ऐलबः चक्षूरोगः येषां ते। चक्षूरोगः ईर्ष्यादिः तद्रहिताः आनन्दपूर्णाः इत्यर्थः। आक्रन्दः उच्चैः विनदन्तः ॥ ४१ ॥

कृष्टयः प्रजाः। पर्जन्यपत्न्यै पर्जन्यः पतिः पालको यस्याः सा पर्जन्यपत्नी तस्यै। वर्षमेदसे वर्षेण वृष्ट्या मेदः पीनता यस्याः सा वर्षमेदाः तस्यै ॥ ४२ ॥

यस्याः पृथिव्याः पुरः देवकृताः नगराणि देवैः निर्मितानि यस्याः क्षेत्रे जनाः विकुर्वते विशेषेण कुर्वते धान्यादिवृद्धि

संपादयन्ति तां विश्वगर्भां विश्वं सर्वं गर्भे यस्याः सा तथोक्तां पृथिवीं नः अस्मदर्थे प्रजापतिः आशामाशां सर्वत्र स्थले रण्यां रमणीयां कृणोतु करोतु ॥ ४३ ॥

रासमाना प्रयच्छन्ती । सुमनस्यमाना कृपापूर्णमनस्का ॥ ४४ ॥

विवाचसं नानाविधभाषाभाषिणम् । नानाधर्माणं भिन्नभिन्नधर्मवन्तम् । धर्मशब्दोऽत्र समाजप्रचलितरीतिवाचकः । यथौकसं यथास्थानं स्वे स्वे स्थाने इत्यर्थः । अनपस्फुरन्ती अप्रतिरुन्धाना ॥ ४५ ॥

तृष्टदंश्मा तीक्ष्णदशनः । हेमन्तजब्धः शीतपीडितः । भूमलो निश्चेष्टः ॥ ४६ ॥

मल्वं लघु बिभ्रती गुरुभृत् गुरु च बिभ्रती भद्रपापस्य निधनं तितिक्षुः भद्रस्य अभद्रस्य च मरणं सहमाना । भद्रो म्रियते अभद्रोऽपि म्रियते तयोः उभयविधयोः अपि मृतदेहं स्वस्मिन् निखातं सहते । वराहेण संविदाना पृथिवी सूकराय मृगाय वि जिहीते । वराहेण अविरुध्यमाना सूकराय मृगाय च तयोः उपयोगकृते व्रजत्येव उद्यता वर्तत एव ॥ ४८ ॥

उलम् आरण्यकपशुविशेषम् । दुच्छुनां बाधाम् ऋक्षीकां भल्लूकीम् । अथवा दुच्छुना नाम ऋक्षीका नाम च रक्षसी ॥ ४९ ॥

अरायाः किमीदिनश्च रक्षोविशेषाः ॥ ५० ॥

अर्चिः ज्वाला वातस्य प्रवाम् उपवाम् अनु वाति । उपवा व्यक्तिविशेषस्य संमुखं वातस्य वानम् । प्रवा तद्विरुद्ध-दिशि वानम् । ज्वाला यस्यां दिशि वातः वाति तस्यां दिशि व्रजति ॥ ५१ ॥

भद्रया कल्याणप्रकारेण । प्रिये इष्टे । इष्टवस्तु-जातमध्ये इत्यर्थः ॥ ५२ ॥

व्यचः व्यापनम् इष्टफलप्रापणं वा ॥ ५३ ॥

सहमानः विजेता । अभीषाड् विश्वाषाड् विषासहिः त्रयोऽपि इमे शब्दाः विजेतृवाचकाः । आशामाशां सर्वत्र ॥५४॥

अदः एतत् यद् यदा हे देवि त्वं देवैः उक्ता सती पुरस्तात् प्रथमाना महित्वं विशालतां व्यसर्पः प्राप्तवती तदानीं त्वां सुभूतं शोभना अवस्था आविशत् त्वं चतस्रः प्रदिशश्च अकल्पयथाः ॥ ५५ ॥

संग्रामाः समितयश्च न भिन्नाः ॥ ५६ ॥

आक्षियन् न्यवसन् । यात् यस्मिन् क्षणे पृथिवी अजायत तस्मात् क्षणात् आरभ्य । मन्द्रा प्रमोदयुक्ता । अग्रेत्वरी पुरोगामिनी । गृभिः निधानम् ॥ ५७ ॥

त्विषीमान् त्विषिमान् तेजस्वी । जूतिमान् वेगवान् । दोधतः पीडाकरान् जनान् ॥ ५८ ॥

शान्तिवा शान्ता । कीलालोध्नी कीलालः सारभूतो अंशः यस्याः सा तथोक्ता ॥ ५९ ॥

भुजिष्यं पात्रं भोग्यवस्तुपूर्णं भाजनम् । मातृमद्भ्यः भोगे आविः अभवत् । पृथिवीरूपा माता येषां वर्तते तेभ्यः तेषां कृते पूर्वोक्तं पात्रं भोगाय प्रकटमभवत् ॥ ६० ॥

आवपनी दृष्टवस्तुजातस्य दात्री । प्रथमजा ऋतस्य यज्ञादपि पूर्वं जातः ॥ ६१ ॥

हे पृथिवि अस्मभ्यं ते उपस्थाः अनमीवाः अयक्ष्माः प्रसूताश्च सन्तु तव स्थानानि रोगरहितानि यक्ष्मरहितानि सुखप्रसूनि च भवन्तु। नः अस्मभ्यं दीर्घम् आयुः प्रतिबुध्यमानाः च सन्तु । तानि स्थानानि, दीर्घायुर्जनकानि च भवन्तु । शिष्टं स्पष्टार्थम् ॥ ६२ ॥

हे कवे अलौकिकसामर्थ्ययुते मातर्भूमे मा मां भद्रया शोभनप्रकारेण श्रियां सुप्रतिष्ठितं निधेहि भूत्यां च मा मां धेहि ॥ ६३ ॥]

---

## ५७

### का. १९. सू. ५३

अनेन सूक्तेन सर्वजगत्कारणभूतः कालरूपः परमात्मा स्तूयते। तत्र प्रथमया कालः अश्वात्मना रूप्यते। सप्तरश्मिः [सप्त] संख्याकाः रश्मयो रज्जवो मुखग्रीवापादावबद्धा यस्य सः सहस्राक्षः सहस्रलोचनः अजरः जरारहितः नित्ययुवा भूरिरेताः। रेतः शुक्ररूपः सप्तमो धातुः। प्रभूतवीर्यः रेतः-सेचनसमर्थः अपत्योत्पादनशक्तः। कालः कलयिता अश्वो वहति स्वारोहकान् अभिमतं प्रदेशं प्रापयति। तम् अश्वं विपश्चितः अश्वारोहणावरोहणादिषु कुशला अश्वशास्त्र-निष्णाताः कवयो धीमन्तः आरोहन्ति। तस्य अश्वस्य चक्रा

चक्राणि गन्तव्यानि स्थानानि विश्वा विश्वानि भुवनानि। इति अन्वयपक्षे अर्थः। विवक्षितस्तु। अश्वः अश्नुते व्याप्नोति भूतभविष्यद्वर्तमानकालवर्तीनि वस्तूनीति अश्वः। कालः कलयिता सर्वस्य जगतः अनवच्छिन्नकालरूपः परमेश्वरः। सप्तरश्मिः। रश्मिशब्देन ऋतव उच्यन्ते। सप्तर्तुः एकैक ऋतुर्मासद्वयात्मकः सप्तमस्तु त्रयोदशो मासः। सहस्राक्षः। अत्र अक्षिशब्देन दिनानि रात्रयश्च उच्यन्ते। सहस्रसंख्याकाहोरात्रयुक्तः। अजरः जरारहितः सर्वदा एकरूपः। भूरिरेताः प्रभूतजगत्सर्जनसमर्थशक्तिसंपन्नः। एवंरूपः कालो वहति प्राणिजातं स्वस्वकर्मसु प्रापयति। तं कालं कवयः क्रान्तदर्शिनो विपश्चितः विद्वांसः आ रोहन्ति स्वाधीनं कुर्वन्ति। स्वाधीनकाला भवन्तीत्यर्थः। तस्य कालात्मकस्य रथस्य चक्रा चक्राणि विश्वा विश्वानि भुवनानि भूतजातानि। लोकान् अभिगच्छन्ति इति शेषः॥ अथवा। अश्वशब्देन आदित्य उच्यते। तथा च यास्कः। एको अश्वो वहति सप्तनामा। आदित्यः। सप्तास्मै रश्मयो रसान् अभिसंनामयन्ति सप्तैनम् ऋषयः स्तुवन्तीति वा (नि. ४. २७)। कालात्मको अश्वः सूर्यः सप्तरश्मयः प्रधानभूता यस्य। ते चैव सप्त सूर्या इत्युच्यन्ते। देवा आदित्या ये सप्त तेभिः सोमाभि रक्ष नः (ऋ. ९. ११४. ३) इति निगमः। यद्वा रश्मिशब्देन छन्दांसि अभिधीयन्ते। तथा च निगमः। ऋग्भिः पूर्वाह्णे दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अह्नः। सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्यः॥ (तै. ब्रा. ३. १२. ९. १) यद्वा रश्मिमन्तो अश्वा रश्मिशब्देन उच्यन्ते। मत्वर्थीयस्य लोपः। सप्ताश्वः।

सप्त युञ्जन्ति रथम् एकचक्रम् ( अथर्व. ९. १४. २ ) इति निगमः । सहस्राक्षः अक्षिवद् अक्षीणि किरणाः सहस्रकिरणोपेतः अजरः अविनश्वरो नित्यः भूरिरेताः । उदकवाची रेतःशब्दः । यदा खलु वा असावादित्यो न्यङ् रश्मिभिः पर्यावर्तते अथ वर्षति (तै.सं. २.४. १०.२) इति श्रुतिः । एवंरूप आदित्यो वहति कालचक्रं धारयति । तं कालात्मकं सूर्यं विद्वांसः अधिगतपरमार्थाः आरोहन्ति सूर्यमण्डलं भित्त्वा उपगच्छन्ति । द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः ।। इति स्मृतेः। यद्वा स्वात्मभावेन अधितिष्ठन्ति । अत एव आदित्यं पुरुषं प्रकृत्य श्रूयते । तद् योऽयं सोऽसौ योऽसौ सोऽहम्। तदुक्तम् ऋषिणा सूर्य आत्मा जगतस्तस्थुषश्च (ऐ. आ. २. २. २. ४) इति । तस्य सूर्यस्य चक्रा चक्राणि चङ्क्रमणानि व्याप्तिस्थानानि सर्वाणि जगन्तीति ।। १ ।।

अनया संवत्सररूपकालचक्रं वर्ण्यते । तस्य संवत्सरकालस्य चक्राणि एकं त्रीणि षट् सप्त द्वादशेति तत्रतत्र आम्नायते । तथा च शौनकोऽप्याह । त्रिधा द्वादशधा षोढा पञ्चधा सप्तधा तथा । संवत्सरं चक्रवच्च पराभिः कीर्तयन्त्यृषिः ।। ( बृ. दे. ४. ३२ ) इति । एष सर्वजगत्कारणत्वेन अनुभूयमानः कालः परमात्मा सप्त चक्रा चक्राणि सप्त ऋतून् वहति धारयति । अस्य संवत्सरस्य सप्त नाभीः नाभयः । नह्यते नाभिः । अक्षबन्धकानि मध्यच्छिद्राणि सप्त ऋतुसंधिकालाः । अस्य अक्षः नु अमृतम् अमरणधर्मकम् अविनश्वरं तत्त्वम् । सः पूर्वोक्त-

संवत्सररूपः प्रथमः सर्वस्य आदिभूतो देवः द्योतमानः नित्यज्ञानरूपः कालः परमात्मा इमा इमानि नामरूपात्मना व्याकृतानि विश्वा विश्वानि भुवनानि भवनवन्ति चराचरात्मकानि जगन्ति अञ्जत् अञ्जन् व्यक्तीकुर्वन् स्वेन कालेन अवच्छिन्नानि कुर्वन् उत्पादयन् सः । स्यति संहरतीति सः । षोऽन्तकर्मणि । संहरंश्च ईयते गच्छति व्याप्नोति सर्वम् आवृत्य वर्तते । नुशब्दः प्रसिद्धौ ॥ यद्वा अध्यात्मपरत्वेन योज्यः । कालः कलयिता सर्वेन्द्रियव्यापारकर्ता शरीराभिमानी देवः । बन्धकाः विषया रूपादयः । अमृतं चैतन्यम् । अक्षः सर्वेन्द्रियेषु तद्विषयेषु च अनुगतः । एवं सर्वाणि प्राणिजातानि अञ्जत् प्रेरयन् ईयते । सः उपसंहरंश्च स कालः ईयते तत्त्वज्ञैर्ज्ञायते ॥ २ ॥

काले सर्वजगत्कारणभूते नित्ये अनवच्छिन्ने परमात्मनि स्वस्वरूपे । अधिशब्दः सप्तम्यर्थानुवादी । पूर्णः सर्वत्र व्याप्तः कुम्भः । कुम्भः अहोरात्रमासर्तुसंवत्सरादिरूपः अवच्छिन्नो जन्यः कालः आहितः निहितो वर्तते । सर्वस्य कार्यस्य स्वकारणेऽवस्थानात् । अत्र विद्वदनुभवं श्रुतिः प्रमाणयति । तं जन्यं काल सन्तः सत्पुरुषाः बहुधा नानाप्रकारम् अहोरात्रादिभेदेन पश्यामो नु अनुभवामः खलु । अथवा तं जन्यकालाधारं परमात्मानं बहुधा बहुभिः श्रवणमननिदिध्यासनैः पश्यामः साक्षात्कुर्मः । सन्तः सद्रूपब्रह्मोपासका वयम् । अस्ति ब्रह्मेति चेद् वेद सन्तम् एनं ततो विदुः (तै. आ. ८. ६) इति हि श्रुतिः । वैनुशब्दौ प्रसिद्धपर्यायौ । स कालः इमा इमानि परिदृश्यमानानि विश्वा विश्वानि व्याप्तानि भुवनानि

भूतजातानि प्रत्यङ् प्रत्यञ्चनः अभिमुखाञ्चनः आव्याप्नुवन् भवति । तं कालं परमे उत्कृष्टे सांसारिकसुखदुःखादिद्वन्द्व-दोषरहिते व्योमन् व्योमनि आकाशवत् निर्लेपे सर्वगते विविधं रक्षके परमानन्दप्रदायके स्वस्वरूपे वर्तमानम् आहुः विद्वांसः ।। ३ ।।

स एव कालः भुवनानि भूतजातानि सम् आ भरत् आहरत् आहरति उत्पादयति । यद्वा स्वेनोत्पादितानि भुवनानि समन्तात् पुष्णाति । स एव कालः भुवनानि सं पर्यैत् सम्यक् परिगच्छति व्याप्नोति । स एव पिता एषां भुवनानां जनकः सन् एषां पुत्रोऽभवत् भवति । काल एव पितृत्वेन पुत्रत्वेन च व्यवह्रियते । यः पूर्वजन्मनि पितृत्वेन जातः स एव अस्मिन् जन्मनि पुत्रत्वेन व्यवह्रियते अवच्छेदककालाधीनत्वात् सर्वस्य । अथवा एकस्मिन् जन्मन्येव पितुः पुत्रत्वम् आम्नायते । अङ्गाद् अङ्गात् संभवसि हृदयाद् अधि जायसे । आत्मा वै पुत्रनामासि स जीव शरदः शतम् ।। (कौ. उ. २. ११) । तस्मात् सर्वोत्पादकात् सर्वगतात् पुत्रादिरूपेण भविष्यतश्च तस्मात् कालाद् अन्यत् परम् उत्कृष्टम् तेजोरूपत्वम् अर्थसिद्धम् । तस्य भासा सर्वमिदं विभाति (कठ. ५. १५) इति श्रुतेः ।। ४ ।।

कालः परमात्मा [ अमुम् ] अमूं विप्रकृष्टां दिवं द्युलोकम् अजनयत् । उत अपि च इमाः परिदृश्यमानाः सर्वप्राण्याधारभूताः पृथिवीः । व्यत्ययेन बहुवचनं कक्ष्याभेदेन वा । तथा । हशब्दः एवार्थे । कालेन एव भूतं भूतकाले आधारे अवच्छिन्नं भव्यं भविष्यच्च इषितम् इष्टम् इष्यमाणं वर्त-

मानकालावच्छिन्नं च जगद् वि तिष्ठते विशेषेण आश्रितं वर्तते ॥ ५ ॥

कालः कालरूपः परमात्मा भूमिं भवनवत् जगत् असृजत। व्यत्ययेन आत्मनेपदम्। काले प्रेरके सति सूर्यः आदित्यः तपति जगत् प्रकाशयति। काले एव आश्रये विश्वा विश्वानि भूतानि वर्तन्ते। काले चक्षुः। उपलक्षणमेतत्। चक्षुरादीन्द्रियाणि। वि पश्यति। इदमप्युपलक्षणम्। दर्शनादिकर्माणि कुर्वन्ति। यद्वा चक्षुः। चक्षुःशब्दो लुप्तमत्वर्थीयः। चक्षुष्मान् सर्वेन्द्रियाधिष्ठाता वि पश्यति स्वस्वेन्द्रियव्यापारं करोति ॥ ६ ॥

काले परमात्मनि मनः जगत्सिसृक्षानिमित्तभूतं मनो वर्तते। तस्मिन्नेव प्राणः सूत्रात्मा सर्वजगदन्तर्यामी वर्तते। अन्तर्यमनोपाधिकत्वेन काले वर्तते इति आधारव्यपदेशः। यद्वा मनः। जात्येकवचनम्। सर्वेषां प्राणिनां मनांसि। प्राणः पञ्चवृत्तिकः। प्राणाः अपि परमात्मन्येव वर्तन्ते। तथा नाम नामधेयं सर्वेषां वस्तूनां संज्ञा अपि तत्रैव समाहितम्। स्त्रीपुरुषादिसंज्ञाभिः काल एव उच्यत इत्यर्थः। यद्वा सर्वेषां रूपाणि कृत्वा तेषां नामान्यपि स्वयमेव व्यवहरति इत्येतदभिप्रायेण काले नाम समाहितम् इत्युक्तम्। सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन् यदास्ते (तै. आ. ३. १२. ७) इति हि श्रुतिः। कालेन वसन्तादिरूपेण आगतेन सर्वा इमाः प्रजाः नन्दन्ति संतुष्यन्ति स्वस्वकार्यसिद्धेः ॥ ७ ॥

काले परमात्मनि तपः जगत्सर्जनविषयं पर्यालोचनम्। तपसा चीयते ब्रह्म (मु. १. १. ८) इत्यादौ तपःशब्दः पर्यालोचनार्थत्वेन व्याख्यातः । तथा ज्येष्ठं सर्वस्य आदिभूतं हिरण्यगर्भाख्यं तत्त्वं वर्तते । तथा ब्रह्म साङ्गो वेदः तत्प्रतिपादकः समाहितं सम्यगाहितः । यद्वा तपः कृच्छ्रचान्द्रायणादिकम् तत्फलप्रदातृत्वात् तत्रैव वर्तनम् । एकः कालशब्दो यौगिकः। कलयितरि काले। ज्येष्ठं ब्रह्म हिरण्याख्यम् । हशब्दः अवधारणे । कालः सर्वस्य जगत ईश्वरः स्वामी । यः कालः प्रजापतेः प्रजानां स्रष्टुः चतुर्मुखस्य ब्रह्मणः पिता जनकः आसीत् ॥ ८ ॥

तेन कालेन इषितम् इष्टं सर्वं स्रष्टव्यं जगत् कामितम् इत्यर्थः । तेनैव जातम् उत्पादितं जगत् । तत् तज्जगत् । उशब्दः अवधारणे । तस्मिन्नेव काले प्रतिष्ठितम् । कालो ह काल एव ब्रह्म देशकालावच्छिन्नं सच्चित्सुखयितृरसम् अबाध्यं परमार्थतत्त्वं भूत्वा परमेष्ठिनं परमे स्थाने सत्यलोके तिष्ठन्तं चतुर्मुखब्रह्माणं बिभर्ति ॥ ९ ॥

कालः अग्रे सृष्ट्यादौ प्रजापतिं ब्रह्माणम् असृजत उदपादयत् । कालः प्रजाश्च असृजत । स्वयंभूः । स्वयम् आत्मना भवतीति स्वयंभूः । कालव्यतिरिक्तकालान्तरनिषेधकः स्वयंशब्दः । कश्यपः आरोगभ्राजादिसप्तसूर्यापेक्षया अष्टमः सूर्यः । तादृशः सूर्यः तपः संतापकं तेजश्च कालादजायत ॥ १० ॥

———o———

# ताण्ड्यमहाब्राह्मणम्*

## ५८

ता. म. अ. ८. ख. ४

[ गायत्र्याख्यायिका ]

पूर्वं साध्याख्या देवा आसन् । ते सर्वेण यज्ञेन सोपकरणेन सोमादिसाधनमादायैव स्वर्गं लोकमायन् अगमन् । ते प्रसिद्धा वस्वादयो देवा आदौ स्वर्गसाधनयज्ञार्थसोमाहरणाय छन्दांसि गायत्र्यादीनि यूयं सोमं द्युलोकादाहरतेत्युक्तवन्तः । . . . ते जगतीं प्राहिण्वन् । सा तत्रत्यैः सोमपालैः सह युद्ध्वा त्रीण्यक्षराणि हित्वा एकाक्षरा भूत्वा पुनर्देवानागच्छत् । चतुरक्षराणि वै तर्हि च्छन्दांसि वक्ष्यति तदभिप्रायकमिदम् । . . . सा गायत्री द्युलोके सोमरक्षकैः कृष्णप्रभृतिभिर्जितानि जगतीत्रिष्टुभोश्चतुरक्षराणि हरन्ती अष्टाक्षरा भूत्वा आगच्छत् । पुनः किं कुर्वती आगच्छदित्युच्यते । त्रीणि च सवनानि सवनत्रयपर्याप्तानि सोमद्रव्याण्यादायेति । . . . [अंशुमती =समग्रे] . . . धीतं पीतसारभूतम् । . . . अवाशीयन्त अवशादितानि प्रभ्रष्टानि आसन् । . . . प्राप्रोथत् अधुनुत

* अथ संक्षेपः श्रीसायणाचार्यविरचितात् माधवीयात् सामवेदार्थप्रकाशात् कृतः ॥

अङ्गानि । . . . सोमाभावे पूतीकादीनां प्रतिनिधित्वेन स्वीकर्तव्यतामभिधातुं प्रासङ्गिकानाम् एषाम् उपन्यासः । . . . आशिरं दधिपयोद्रव्यम् ॥ १ ॥



५९

ता. म. ब्रा. १२. ख. ११

[ कल्याणाङ्गिरसस्याख्यायिका ]

आप्तः पर्याप्तः स्पृतः प्रियहेतुः । . . . . ध्यायं ध्यात्वा ध्यात्वा कोऽसौ देवयानः पन्था इति विचार्य उदव्रजत् ऊर्ध्वमगच्छत् । . . . ऊर्णायुम् एतत्संज्ञकं गन्धर्वम् । . . . प्रेङ्खयमाणं दोलया विहरन्तम् । . . . इयां प्राप्नुयामिति । . . . अभ्यदिशत् अभ्यध्यायत् । . . . कल्याणा ३ इति कल्याण इति संबोध्य । . . . स्वर्ग्यं स्वर्गाय हितं स्वर्गप्राप्तिसाधनम् । . . . यदि त्वां कश्चिद् अप्राक्षीत् तस्मै अहमेवादर्शमिति अदर्शम् अज्ञासिषम् इति मा वोचः अपि तु ऊर्णायुर्गन्धर्वः प्रावोचदिति ब्रूहीति ॥ १० ॥

स्वर्गं लोकमायन् अङ्गिरसोऽगच्छन् । . . . अहीयत हीनो भूमावेव परित्यक्तोऽभूत् । हि यस्मात् सोऽनृतं वितथमवदत् तस्माद् अहीयत । स एषोऽसत्यवादी श्वित्रः श्वेतकुष्ठी दृश्यते ॥ ११ ॥

## ६१

ता. म. ब्रा. १३. ख. ४

[ यतीनामाख्यायिका ]

यतीन् एतत्संज्ञकान् यज्ञविरोधिनो जनान् । सालावृकेयेभ्यः सालावृक्याः पुत्रेभ्यः क्रोष्टुभ्यः । प्रायच्छत् भक्षणार्थं दत्तवान् । . . . को नः अस्मान् इमान् पुत्रान् पुत्रात्मना स्वीकृतान् कृत्वा भरिष्यति पोषयिष्यति । . . . अधिनिधाय रथे आरोप्य वर्धयन् पोषयन् पर्यचरत् परिचर्यां कृतवान् ॥ १७ ॥

समर्द्धयति समृद्धान् करोति ॥ १८ ॥

---

## ६२

ता. म. ब्रा. १४. ख. ६

[ वत्सस्याख्यायिका ]

आक्रोशत् अश्लीलया वाचा पर्यवदत् । . . . शूद्रापुत्रः शूद्रायाः पुत्रः अशूद्रापुत्रोऽपि शूद्रापुत्र इत्याक्रोश्यते । . . . व्ययाव आवां विशेषेण गच्छावः प्रविशावः इत्यर्थः । नौ आवयोर्मध्ये यतरो यो ब्रह्मीयान् ब्रह्मिष्ठ इति निर्णेतुम् । . . . तस्य वत्सस्य लोम च[न] नौषत् अग्निर्नादहत् । [चन=अपि] । [कामसनि=] कामप्रदम् ॥ ६ ॥

---

## ६३

ता. म. अ. १५. ख. ५

[ वसिष्ठस्याख्यायिका ]

[ निहवम् = ] निहवाख्यमेतत् साम । . . . ब्राह्मणम् अनुष्ठेयार्थप्रतिपादकं वेदभागम् । . . . अथ मदुपदेशानन्तरं [ मा ] माम् इन्द्रम् अन्येभ्यस्त्वद्व्यतिरिक्तेभ्यः ऋषिभ्यो मा प्रवोचः न ब्रूयाः ।। २४ ।।

---

## ६४

ता. म. अ. २१. ख. १३

[ देवासुराणामाख्यायिका ]

वाचो मिथुनेन स्त्रीपुलिङ्गात्मकेन । . . . अस्माकं मध्ये वाङ्मिथुनं ये प्रयोक्तुं न शक्नुवन्ति ते पराभूता इति मिथः समयमकुर्वत । . . . अभवन् समार्ध्नुवन् ।। २ ।।

---

## ६५

ता. म. अ. २५. ख. १३

[ इन्द्ररुशमयोराख्यायिका ]

अंशं पणम् । . . . एतावता कुरुक्षेत्रमेव भूमेः प्रशस्ततरो देवयजनप्रदेश इत्युक्तं भवति ।। ३ ।।

---

# ऐतरेयब्राह्मणम्*

## ६६

ऐ. ब्रा. अ. ३३. ख. १

[ शौनःशेपाख्यानम् ]

हरिश्चन्द्रो नाम राजर्षिः वेधसो नृपतेः पुत्र इक्ष्वाकुवंशोद्भवो राजा पुत्रहीन आस ॥ . . . ये देवमनुष्यादयो विजानन्ति विवेकज्ञानयुक्ताः ये च पश्वादयो न विजानन्ति विवेकज्ञानरहिताः ते सर्वेऽपि नु क्षिप्रं पुत्रमिच्छन्ति ॥ १ ॥ . . . संनयति सम्यग् अवस्थापयति । . . . अवस्थापनात् पुत्रपौत्रादिभिः ऋणं प्रत्यर्पणीयमिति स्मृतिकारा आहुः । . . . अमृतत्वं मरणरहितं मुक्तिपदं च गच्छति । पुत्रार्पितलौकिकवैदिकभारस्य अविघ्नेन तत्त्वज्ञानसंपादनात् ॥ १ ॥ . . . सर्वेभ्यो भोगेभ्यो भूयानभ्यधिकः पितुः पुत्रे भोगो विद्यते । अत्यन्तसुखहेतुत्वात् । तथा चाहुः । पुत्रोत्पत्तिविपत्तिभ्यां नापरं सुखदुःखयोः । इति ॥ २ ॥ . . . तमः ऐहिकमामुष्मिकं च दुःखमत्यायन् अतिक्रामन्ति । तथा च बौधायन आह । पुदिति नरकस्याख्या दुःखं च नरकं विदुः । पुत्तस्त्राणात् ततः पुत्रमिहेच्छन्ति परत्र च ॥ इति । . . . पितुः पुत्र

---

* अथ संक्षेप श्रीसायणाचार्यविरचितात् माधवीयात् वेदार्थप्रकाशाह्वयाद् ऐतरेयब्राह्मणभाष्यात् कृतः ॥

उत्पन्न इत्युक्ते सति पिता स्वस्मात् स्वयमेव जज्ञे उत्पन्न इत्युक्तं भवति ।. . .इरावती अन्नयुक्ता अतितारिणी नदी-समुद्रादेरतितरणहेतुर्नौरिति शेषः । यथा नौर्दुर्घटं नद्यादिकं तारयत्येवं पुत्रोऽप्यैहिकमामुष्मिकं च दुःखं तारयतीत्यर्थः ॥ ३ ॥ . . . अत्र मलाजिनश्मश्रुतपःशब्दैराश्रमचतुष्टयं विवक्षितम् । मलरूपाभ्यां शुक्रशोणिताभ्यां संयोगात् मलशब्देन गार्हस्थ्यं विवक्षितम् । कृष्णाजिनसंयोगात् अजिनशब्देन ब्रह्मचर्यं विवक्षितम् । क्षौरकर्मराहित्यात् श्मश्रुशब्देन वानप्रस्थ्यं विवक्षितम् । इन्द्रियनियमसद्भावात् तपःशब्देन पारिव्राज्यं विवक्षितम् । मलं गार्हस्थ्यं किंनु किं नाम सुखं करिष्यति । न किंचिदित्यर्थः । एवमुत्तरत्रापि योज्यम् । . . . स वै स एव पुत्रोऽवदावदो लोकः । वदितुमयोग्यानि निन्दावाक्यानि अवदाः तैर्वाक्यैर्नोद्यते न कथ्यते इत्यवदावदः । अवदावदो दोषराहित्यात् निन्दानर्ह इत्यर्थः । . . . यद्यपि हरिश्चन्द्र एवात्र प्रष्टा तथापि तेन सह ऋषीणां बहूनां सभायामवस्थानात् ब्रह्माण इति संबोधनम् ॥ ४ ॥ . . . शरीरे प्राणावस्थिति-हेतुत्वाद् अन्नमेव प्राणः । वासः शीतोपद्रवाद् रक्षकत्वेन शरणं गृहसमानम् । हिरण्यं कर्णाभरणादिकं दृष्टिप्रियत्वाद् रूपसंपादकम् । पशवो गवाश्वादयो विवाहविशेषेण निर्वाहकाः । जाया भोगे सहकारित्वात् सखा ह सखिस्वरूपैव । एवमेते सुखहेतुत्वेन प्रसिद्धा अपि तात्कालिकमल्पमेव सुखं प्रयच्छन्ति । दुहिता ह पुत्रीति कृपणं केवलदुःखकारित्वाद् दैन्यहेतुः । तथा च स्मर्यते । संभवे स्वजनदुःखकारिका संप्रदानसमयेऽर्थ-हारिका । यौवनेऽपि बहुदोषकारिका दारिका हृदयदारिका

पितुः ॥ इति । पुत्रो ह पुत्रस्तु ज्योतिःस्वरूपं तमोनिवारकत्वेन । स हि पितरं परमे व्योमन् उत्कृष्ट आकाशे परब्रह्मस्वरूपे अवस्थापयति ॥ ५ ॥ . . . पत्युराकारद्वयमस्ति । वर्तमानपुरुषाकार एकः रेतोरूपेण गर्भाकारो द्वितीयः । जायाया अप्याकारद्वयमस्ति । पतिरूपमाकारं प्रति जाया भवति । गर्भरूपमाकारं प्रति माता भवति । अतः स तादृशः पतिः स्वयं रेतोरूपेण गर्भो भूत्वा पूर्वमवस्थितां जायां भविष्यदाकारेण मातरं सतीं प्रविशति । तस्यां मातरि पुनर्नवो भूत्वा पूर्वमन्यस्यां मातर्युत्पन्नो जरठः इदानी पुनर्नूतनबालो भूत्वा तस्यामिदानींतन्यामस्यां मातरि गर्भपाके सति दशमे मास्युत्पद्यते ॥ ६ ॥ . . . यद् यस्मात् कारणात् अस्यां गर्भधारिण्याम् अयं पिता पुत्ररूपेण पुनर्जायते तत् तस्मात् कारणात् लोकप्रसिद्धा या जायास्ति सा जायतेऽस्यामिति व्युत्पत्त्या जायाशब्दवाच्या भवति । किंचैषा भूत्याभूतिशब्दाभ्यामभिधीयते । भवत्यस्यां पुत्ररूपेण पतिरित्येषा भूतिशब्दवाच्या । रेतोरूपेणागत्य अस्यां पुत्ररूपेण भवतीत्याभूतिशब्दवाच्या । एतद् एतस्यां स्त्रियां बीजं रेतोरूपं निधीयते प्रक्षिप्यते तस्माद् उक्ताः शब्दा उपपद्यन्ते ॥ ७ ॥ . . . एतामेतस्यां योषिति देवाश्च महर्षयश्च स्वकीयं महत् तेजो रेतोरूपं सारं समभरन् पुत्रोत्पादनाय संपादितवन्तः । स्वयमेव संपाद्य ततो मनुष्यानित्यब्रुवन् । हे मनुष्या येयमिदानीं जायारूपेण वर्तते सेयं पुनर्वो युष्माकं पुत्ररूपे जन्मनि जननी भवति ॥ ८ ॥ . . . लोको लोकजन्यं सुखमपुत्रस्य नास्ति । नहि पुत्रदर्शनेन यत् सुखं तदन्यदर्शनेन क्वचिदपि दृश्यत इति

यदस्ति तत् सर्वं गोमहिष्यादयो जानन्ति यस्मात् तस्मादेव कारणात् पशुजातौ जातः पुत्रो वत्सः स्वकीयां मातरं भगिनीं वा पुत्रोत्पादनार्थमधिरोहति ॥ ९ ॥ . . . पुत्रिणः पुत्रवन्तो देवमनुष्यादयो विशोकाः शोकरहिताः सन्तो यं पन्थानं सुखानुभवरूपं मार्गमाक्रमन्ते प्राप्नुवन्ति एष पन्थाः पुत्रसुखानुभवरूपो मार्ग उरुगायः उरुभिर्महद्भिः शास्त्रज्ञैः राजामात्यादिभिश्च गीयते। तथा सुशेवः सुष्ठु सेवितुं योग्यः। सुखाधिक्यस्य विद्यमानत्वात्। तं पुत्रसुखानुभवरूपं पशवो गवादयो वयांसि पक्षिणः संपश्यन्ति जानन्ति। तस्मात् ते पशुपक्ष्यादयः पुत्रसुखार्थं मात्रा सह मिथुनीभवन्ति किमुतान्यया स्त्रिया सहेत्यर्थः ॥ १० ॥ . . . ॥ १३ ॥

उपधाव प्रार्थयस्व। . . . उपससार प्रार्थयामास। . . . निर्गतान्याशौचदिनानि दशसंख्याकानि यस्मात् पशोः सोऽयं निर्दशः। . . . दशदिनाशौचापगमे शुद्धत्वाद् यथा यागयोग्यत्वं तथा दन्तोत्पन्नत्वाद् अवयवसंपूर्त्या यागयोग्यत्वमित्यभिप्रायः। . . . अज्ञत वै जाता एव। पद्यन्ते पतन्ति। प्रथमोत्पन्नानां दन्तानामस्थायित्वेन मुख्यपश्ववयवत्वाभावात् तत्पाते सति पशोर्मेध्यत्वम्। . . . अपत्सत पतिताः। पुनरुत्पन्नानां दन्तानां स्थिरत्वेन सपूर्णावयवत्वात् पशोर्मेध्यत्वम्। . . . पश्वन्तरस्य पुनर्दन्तोत्पत्तिमात्रेण मेध्यत्वेऽपि अस्य पशोः क्षत्रियत्वात् स्वजात्युचितधनुर्बाणकवचादिसंनाहशीलित्वे सति जात्युचितव्यापारसंपूर्तौ मेध्यत्वम्। . . . उपलालनार्थं पुत्रे पितृवाचि-तत-शब्दप्रयोगः ॥ १४ ॥

उदरं जज्ञे जलेन पूरितमुच्छूनं महोदरनामकं रोगस्वरूपम् उत्पन्नम् ।। आ समन्तात् श्रान्त आश्रान्तः सर्वत्र पर्यटनेन श्रान्तिं प्राप्तः तद्विपरीतोऽनाश्रान्तः एकत्रैव निवासशीलः तादृशाय तथाविधस्य पुरुषस्य श्रीः बहुविधा संपत् नास्ति । यद्वा नानेति पदच्छेदः । श्रान्ताय सर्वत्र पर्यटनेन श्रान्तस्य नाना श्रीर्बहुविधा संपदस्तीत्यनेन प्रकारेण रोहित वयं नीतिकुशलानां पुरुषाणां मुखात् शुश्रुम । वरो जनो विद्यादिभिः श्रेष्ठोऽपि पुरुषो नृषत् पापो नृषु मनुष्येषु सीदतीति नृषत् । श्रेष्ठोऽपि बन्धुगृहेषु सर्वदावस्थितः तैरवज्ञातः पापः तुच्छो भवेत् ।। १ ।।

. . . ब्राह्मणरूपस्येन्द्रस्य वाक्यं श्रुत्वा ब्राह्मणोऽयमरण्ये चरैवेत्येवं मामुक्तवानिति । चरतः पर्यटनं कुर्वतः पुरुषस्य जङ्घे पुष्पिण्यौ भवतः । यथा पुष्पयुक्तो वृक्षः शाखा लता वा यथा सुगन्धोपेता सेव्या भवति एवं चरतो जङ्घे श्रमजयेन सेव्ये भवतः । तथैव आत्मा मध्यदेहो भूष्णुर्वर्धिष्णुः फलग्रहिः आरोग्य-रूपफलयुक्तो भवति । यथा वर्धमानो वृक्षः कालेन फलानि गृह्णाति एवं चरतः पुरुषस्य मध्यदेहः आरोग्यरूपं फलं गृह्णाति । तथैवास्य चरतः पुरुषस्य सर्वे पाप्मानः सर्वपापानि प्रपथे प्रकृष्टे तीर्थक्षेत्रादिमार्गे श्रमेण तत्तद्देवतादिदर्शने तीर्थयात्रादिप्रयासेन हताः विनाशिताः सन्तः शेरे शेरते शयाना इव भवन्ति ।। २ ।।

. . . भगः सौभाग्यम् आसीनस्य उपविष्टस्य आस्ते तथैव तिष्ठति न तु वर्धते । अभिवृद्धिहेतोरुद्योगस्य अभावात् । तिष्ठतः उपवेशनं परित्यज्य उत्थानं कुर्वतः पुरुषस्य भगः ऊर्ध्वोऽभिवृद्धेः उन्मुखस्तिष्ठति । कृषिवाणिज्याद्युद्योगस्य संभावितत्वात् । निपद्यमानस्य भूमौ शयानस्य भगः शेते निद्रां करोति विद्य-

मानधनरक्षादिचिन्तायाः अपि अभावात् सर्वथैव विनश्यति* । चरतः तेषु तेषु देशेषु अर्जनार्थं पर्यटनं कुर्वतः पुरुषस्य भगः सौभाग्यं चरति दिने दिने वर्धते ॥ ३ ॥ . . . चतस्रः पुरुषस्यावस्थाः । निद्रा तत्परित्यागः उत्थानं संचरणं चेति । ताश्च उत्तरोत्तरश्रेष्ठत्वात् कलिद्वापरत्रेताकृतयुगैः समानाः ॥ ४ ॥. . . चरन्नेव पुरुषः क्वचिद् वृक्षाग्रे मधु माक्षिकं लभते । क्वचित् स्वादु मधुरम् उदुम्बरादिफलविशेषं लभते । एतदुभयमुपलक्षणम् । तत्र तत्र विद्यमानं भोगविशेषं लभते । तत्र सूर्यो दृष्टान्तः । यः सूर्यः सर्वत्र चरन्नपि न तन्द्रयते कदाचिदप्यलसो न भवति तस्य सूर्यस्य श्रेमाणं श्रेष्ठत्वं जगद्वन्द्यत्वं पश्य ॥५॥ . . . अजीगर्तनामकं सूयवसस्य पुत्रम् अशनया परीतम् अन्नालाभेन क्षुत्पीडितम् । . . . हे ऋषे ते तुभ्यम् अहं गवां शतं ददामि । . . . [निष्क्रीणे मूल्यं दत्त्वा आत्मानं मोचयामि ] । [ सः अजीगर्तः ] ज्येष्ठपुत्रं शुनःपुच्छनामकं हस्तेन निगृह्णानः स्वसमीपे समाकर्षन् रोहितं प्रति एवमुवाच । तुभ्यमेकः पुत्रो दीयते इमं तु शुनःपुच्छं तु न ददामि मम प्रियत्वादिति । ततो माता कनिष्ठं हस्तेन गृहीत्वैवमुवाच । इमं शुनोलाङ्गूलं तु मम प्रियं मो एव सर्वथा न ददामीति । ततस्तावुभौ मातापितरौ मध्यमे पुत्रे शुनःशेपे दानं संपादयांचक्रतुः अङ्गीकृतवन्तौ । . . . तस्मै हरिश्चन्द्राय कर्तव्यत्वेन राजसूयम् उपदिदेश । स हरिश्चन्द्रो राजसूयं प्रक्रम्य तस्य मध्ये योऽयमभिषेचनीयाख्यः एकाहः सोमयागः

* व्यापारान्तरमुत्सृज्य वीक्षमाणो वधूमुखम् । यो गृहेष्वेव निद्राति दरिद्राति स दुर्मतिः ॥ इत्येवंरूपा कस्यचिदभियुक्तस्य उक्तिरत्रार्थे अनुसंधेया ॥

तस्मिन् तमेतं शुनःशेपं पुरुषं पशुमालेभे सवनीयपशुत्वेन आलब्धुं निश्चितवान् ॥ १५ ॥

तत्र जमदग्निरध्वर्युः अभिषेचनीये सोमयागे तं शुनःशेपं सवनीयपशुत्वेन उपाकृतवान् । बर्हिर्युक्तया प्लक्षशाखया मन्त्रपुरःसरं समुपस्पृश्य स्वीकार उपाकरणम् । तत ऊर्ध्वं यूपबन्धनं *नियोजनं* तस्य क्रूरकर्मत्वाद् *अध्वर्युः न नियोजने* प्रवृत्तः । तत उपाकृतायास्मै उपाकरणेन संस्कृतस्य शुनःशेपस्य नियोक्तारं यूपे बन्धनकर्तारं क्रूरं कंचिदपि पुरुषं न विविदुः न लेभिरे । . . . नियोक्ष्यामि रशनया कट्यां शिरसि पादयोर्बद्ध्वा रशनाग्रस्य यूपे बन्धनं नियोजनं तदहं करिष्यामि । निनियोज [इत्यत्र] धातोर्द्विर्भावं परित्यज्य उपसर्गस्य द्विर्भावश्छान्दसः । . . . आप्रीसंज्ञिताभिरेकादशभिः प्रयाजयाज्याभिः यद् यजनं तद् आप्रीणनम् । दर्भरूपेण उल्मुकेन त्रिः प्रदक्षिणीकरणं तत् पर्यग्निकरणम् । तथाविधसंस्कार-चतुष्टययुक्ताय तस्मै तस्य शुनःशेपस्य विशसितारं हिंसितारं क्रूरात्मानं कंचिदपि पुरुषं न लेभिरे । ततः अजीगर्तः पूर्ववद् अपरं गोशतं गृहीत्वा मारयितुम् असिं खड्गं निःशानो निशितं तीक्ष्णं कुर्वन्नेव इयाय जगाम । . . . अन्यत्र पर्यग्निकृतं पुरुष-मारण्यांश्चोत्सृजन्त्यहिंसाया इति श्रुतेः पर्यग्निकरणादूर्ध्वं मनुष्यं परित्यजन्ति । एते तु मामममानुषमिव मनुष्यव्यतिरिक्त-मजादिपशुमिव विशसिष्यन्ति । . . . उपधावामि भजामि . . . उपससार सेवितवान् । . . . नेदिष्ठो हविर्वहनेन अति-समीपवर्ती । . . . तस्य च अग्नेः सहकारित्वेन सवितुरुपासनं दर्शयति । प्रसवानां सर्वेषु कार्येषु प्रेरणारूपाणामनुज्ञानात्

सविता ईशः स्वामी भवति । . . .पूर्वस्मात् सवितृविषयात् तृचादुत्तराभिरेकत्रिंशत्संख्याकाभिर्ऋग्भिः . . .न हि ते क्षत्रम् इत्याद्याः सूक्तशेषभूता दशर्चो यच्चिद्धि ते विशः इत्यादिकमेकविंशत्यृचं सूक्तमित्येवमेकत्रिंशत्संख्या द्रष्टव्या .। . . . अयमग्निः सर्वेषां देवानां मुखं मुखस्थानीयः । अग्निद्वारेणैव सर्वैर्देवैर्हविःस्वीकारात् । अत एव प्रीत्या हविर्वहनादतिशयेन सुहृदयः । . . .पूर्वोक्ताभ्य ऋग्भ्य उत्तराभिर्द्वाविंशतिसंख्याकाभिर्ऋग्भिः । वसिष्वाहीत्यादिकं दशर्चं सूक्तम् अश्वं न त्वा इत्यादिकं त्रयोदशर्चं सूक्तम् । तत्र अन्त्यां परित्यज्य सूक्तद्वयगता ऋचो द्वाविंशतिसंख्याकाः । . . .विश्वे देवा गणरूपा न भवन्ति किन्तु सर्वे देवाः । . . .ओजोबलादिशब्दाः पूर्वाचार्यैरेवं व्याख्याताः । ओजो दीप्तिर्बलं दाक्ष्यं प्रसह्यकरणं सहः । सुजनः सन् पारयिष्णुरुपक्रान्तसमाप्तिकृत् ।। इति । इष्ठप्रत्ययतमप्प्रत्ययाभ्यां तत्र तत्रातिशय उच्यते । . . .यच्चिद्धि सत्य सोमपा इत्यनेन सप्तर्चेन सूक्तेन उत्तरस्मिन् अप्याव इन्द्रमित्यादिके द्वाविंशत्यृचे सूक्ते पञ्चदशभिर्ऋग्भिः । . . . प्रतीयाय मनसैव प्रतिजगाम । . . .अगदः निःशेषेण रोगरहितः ।। १६ ।।

देवतानुग्रहयुक्तं तं शुनःशेपं विश्वामित्रादयः सर्वे ऋत्विजः एवमूचुः । हे शुनःशेप त्वमेव नोऽस्माकमस्याह्नः अभिषेचनीयाख्यस्य संस्थां समाप्तिमधिगच्छ प्राप्नुहि अनुष्ठापयेत्यर्थः । तैरेवमुक्ते सति अनन्तरं शुनःशेपः एतमभिषेचनीयाख्यं सोमयागमञ्जःसवं ददर्श । अञ्जसा ऋजुमार्गेण सवः सोमाभिषवो यस्मिन् यागे सोऽञ्जःसवः

तादृशं प्रयोगप्रकारं निश्चितवान् । निश्चित्य च तं सोमं यच्चिद्धीत्यादिभिश्चतसृभिः ऋग्भिः अभिपुतं कृतवान् । अथैनमभिपुतं सोममेतया उच्छिष्टं चम्वोरित्यृचा द्रोणकलशमभिलक्ष्य अवनिनाय द्रोणकलशे प्रक्षिप्तवान् । अथ अनन्तरम् अस्मिन् हरिश्चन्द्रेऽन्वारब्धे शुनःशेपदेहमुपस्पृष्टवति सति उक्ताभ्यः ऋग्भ्यः पूर्वाभिः यत्र ग्रावेत्यादिभिश्चतसृभिर्ऋग्भिः स्वाहाकारसहिताभिः सोमं जुहवांचकार । यत्र ग्रावेत्यादिकं सूक्तं नवर्चम् । तत्र यच्चिद्धीति पञ्चमी तामारभ्य चतसृभिः ऋग्भिरभिषवः । उच्छिष्टमित्यादिका नवमी तया द्रोणकलशे प्रक्षेपः । यत्र ग्रावेत्यादिभिश्चतसृभिः होमः । इत्येवं कृत्स्नस्य विनियोगः । अथ होमानन्तरमेव कर्तव्यम् अवभृथम् अभिलक्ष्य अवनिनाय । सर्वमवभृथसाधनं तद्देशे नीत्वा त्वं नो अग्न इत्यादिकाभ्याम् अवभृथयागं कृतवान् । अथ तथा कृत्वा तत ऊर्ध्वम् एनमाहवनीयमग्निं शुनश्चिदित्यादिनोपस्थापयांचकार हरिश्चन्द्रमुपस्थाने प्रेरयामास । सोऽयमञ्जःसव इष्टिपशुसाङ्कर्यमन्तरेण अञ्जसा ऋजुमार्गेणानुष्ठितत्वात् । . . . अथ अभिषेचनीयसमाप्तेरनन्तरं हरिश्चन्द्रसहितेषु ऋत्विक्षु विस्मितेषु स शुनःशेपः इत ऊर्ध्वं कस्य पुत्रोऽस्तु इति विचारे सति तदीयेच्छैव नियामिकेति महर्षीणां वचनं श्रुत्वा शुनःशेपः स्वेच्छया विश्वामित्रपुत्रत्वमङ्गीकृत्य सहसा तदीयमङ्कमाससाद । पुत्रो हि सर्वत्र पितुरङ्के निषीदति* । . . . अरासत दत्तवन्तः । . . .

* अङ्काश्रयप्रणयिनस्तनयान् वहन्तो धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥ इत्यभिज्ञानशाकुन्तलीया उक्तिरत्रार्थे अनुसंधेया ॥

स च शुनःशेपो देवैर्दत्तत्वाद् देवरात इतिनामधारी विश्वामित्रपुत्र एवास । तस्य च देवरातस्यैते कपिल-गोत्रोत्पन्ना बभ्रुगोत्रोत्पन्नाश्च बन्धवोऽभवन् । . . . विश्वामित्रेण निराकृतः सोऽजीगर्तः शुनःशेपं प्रत्येवमुवाच । हे पुत्र त्वं वा त्वमेव विश्वामित्रादपगतः सन् इहि अस्मद्गृहे गच्छ । त्वदीयमाता च अहं च उभावावां विह्वयावहै विशेषेण तवाह्वानं करवावहै । . . . आङ्गिरसः अङ्गिरोगोत्रोत्पन्न आजीगर्तिरजीगर्तस्य पुत्रः कविर्विद्वान् श्रुतः इत्येवं सर्वत्र प्रसिद्धः । . . . पैतामहात् पितामहेन प्रजापतिना संपादितात् तन्तोः संतानात् अङ्गिरोवंशात् मापगाः अपगतो मा भव ॥१॥ . . .शासो विशसनहेतुः खड्गः । हे अजीगर्त मद्वधाय शासहस्तं खड्गहस्तं त्वां सर्वेऽप्यदर्शुः दृष्टवन्तः । यत् क्रूरं कर्म शूद्रेषु अत्यन्तनीचेष्वपि नालप्सत न लब्धवन्तो लौकिका जनाः तादृशं क्रौर्यं त्वया कृतम् । . . . मत् मां निमित्तीकृत्य ॥२॥ . . .निह्नुवे परिहरामि । . . .गवां शतानि पूर्वं मया गृहीतानि त्रीणि यानि तानि तुभ्यं प्रतियन्तु प्रति एकमेव प्राप्नुवन्तु । इतरयोः पुत्रयोर्गावो मा भूवन् तवैव सर्वाः सन्त्विति ॥३॥ . . . यः पुमान् धर्मशास्त्रभीतिरहितः सकृत् पापकं कुर्यात् स पुमान् ततः पापादन्यदेनत् पापं तदभ्यास-वशात् कुर्यादेव । त्वं तु शौद्रात् न्यायात् नीचजातिसंबन्धिनः क्रूरादाचरणात् नापागा अपगतो न भवसि । असंधेयं प्रति-सधानरहितं पापं त्वया कृतम् ॥४॥ . . .असंधेयम् अप्रतिसमाधेयं पापमिति शुनःशेपेन यदीरितं तदेतदप्रतिसमाधेयत्वं विश्वा-मित्र उपपपाद युक्तिभिरुपपादितवान् । . . .भीम एव भय-

हेतुरेव सन् शासेन हस्तगतखड्गेन विशिशासिपुरस्थाद् विशसनं कर्तुमिच्छुरवस्थितवान् ॥५॥ . . . अयं विश्वामित्रो जन्मना क्षत्रियः सन् स्वकीयेन तपोमहिम्ना ब्राह्मण्यं प्राप्तवानित्येवं तद्वृत्तान्तं सूचयितुं हे राजपुत्रेति संबोधितवान् । स वै तथाविधो राजजातीय एव सन् यथा येन प्रकारेण नोऽस्माभिः सर्वैरा समन्ताज्ज्ञपय ब्राह्मणत्वेन ज्ञायसे तथैवास्मद्विषयेऽपि त्वं वद । कथं वदितव्यमिति तदुच्यते । अहमिदानीमङ्गिरोगोत्रः सन् तत्परित्यागेन तव पुत्रत्वं येनैव प्रकारेण उपेयां तथैव अनुगृहाणेति शेषः । एतद्वाक्याभिप्रायः पूर्वैः संक्षिप्य दर्शितः । पुरात्मानं नृपं विप्रं तपसा कृतवानसि । एवमाङ्गिरसं मा त्वं वैश्वामित्रमृपे कुरु ॥ इति ॥६॥ . . . हे शुनःशेप त्वं मे पुत्राणां मध्ये ज्येष्ठः स्या ज्येष्ठो भव । तव पुत्रादिरूपा प्रजा अपि इतरस्याः श्रेष्ठा स्यात् । मे मह्यं विश्वामित्राय दैवं देवैः प्रसन्नैः दत्तं दायं पुत्रत्वरूपं लाभमुपेयाः प्राप्नुहि । तेन वै तेनैव प्रकारेण त्वोपमन्त्रये त्वां पुत्रत्वेन व्यवहरामि ॥७॥ . . . संज्ञानानेषु मद्विपर्यंकमत्यं प्राप्तेषु त्वदीयपुत्रेषु सर्वोऽपि मां ब्रूयात् । ज्येष्ठभ्रातृत्वेन व्यवहरतु । तच्च मे मम सौहार्दाय भ्रातृभिरितरैः स्नेहातिशयाय श्रियै धनलाभाय च संपद्यते ॥८॥ . . . यो मधुच्छन्दा नाम यश्चर्षभो योऽपि रेणुर्योऽप्यष्टक एते मुख्याः । हे पुत्रकाः शृणोतन मदीयामाज्ञां शृणुत । ये केचिद् यूयं सर्वे भ्रातरः स्थ ते सर्वेप्यस्मै शुनःशेपादस्मादपि ज्यैष्ठ्याय न कल्पध्वं ज्येष्ठत्वाभिमानं मा कुरुत । किन्तु असावेव युष्माकं मध्ये ज्येष्ठो भूत्वा अवतिष्ठतामिति ॥९॥ . . . ॥ १७ ॥

मधुच्छन्दोनामकः कश्चित् पुत्रो मध्यमस्ततोऽपि ज्येष्ठाः कनिष्ठाश्च प्रत्येकं पञ्चाशत्संख्याका इत्येवमेकशतं [=एकाधिकं शतं] तस्य पुत्राः ।. . .तान् ज्येष्ठान् पञ्चाशत्संख्याकान् अनुलक्ष्य विश्वामित्रो व्याजहार व्याहरणं शापरूपं वाक्यमुक्तवान् । हे ज्येष्ठपुत्रा युष्माकं मदीयाज्ञातिलङ्घिनां प्रजा पुत्रादिका अन्तान् भक्षीष्ट चण्डालादिरूपान् नीचजातिविशेषान् भजतामिति ।. . . इतिशब्दस्य तत्प्रदर्शनार्थत्वादन्येऽपि नीचजातिविशेषाः सर्वे विवक्षिताः । उद्गतः अन्तः उदन्तः अत्यन्तनीचजातिः तत्र भवा उदन्त्याः ।. . .दस्यूनां तस्कराणां मध्ये भूयिष्ठा अत्यधिकाः ।. . . हे शुनःशेप नोऽस्माकं पिता विश्वामित्रो यत् कार्यं त्वदीयज्येष्ठपुत्रत्वरूपं संजानीते सम्यग् जानाति अङ्गीकरोति तस्मिन् कार्ये वयं तिष्ठामहे तत्कार्यमङ्गीकुर्मः । सर्वे वयं त्वा शुनःशेपनामानं त्वां पुरस्कुर्महे पुरस्कृत्य ज्येष्ठं कृत्वा वर्तामहे । त्वामन्वञ्चः शुनःशेपमनुगच्छन्तः स्मसि भवाम इत्युक्तवान् ।।१।। . . . प्रतीतः तेषु प्रत्ययं मदनुकूला इति विश्वासं प्राप्तः ।. . . हे मधुच्छन्दःप्रमुखाः कनिष्ठपुत्रा ये यूयं मे मानं मदीयं मतमनुगृह्णन्तः आनुकूल्येन स्वीकुर्वन्तः मां विश्वामित्रं वीरवन्तं स्वधर्मशूरपुत्रयुक्तमकर्त कृतवन्तः ते वै तादृशा यूयं बहुविधपुत्रयुक्ता बहुधानुकूलपुत्रयुक्ताश्च भविष्यथ ।।२।। . . . गाथिन्शब्दो विश्वामित्रस्य पितरमाचष्टे । हे गाथिनाः गाथिपौत्राः पुर एत्रा युष्माकं पुरतो गन्त्रा मुख्येन देवरातेन सह यूयं सर्वे वीरवन्तः श्रेष्ठपुत्रयुक्ताः राध्याः स्थ सर्वैः पुरुषैराराधनीयाः पूज्या भवथ । हे पुत्राः मधुच्छन्दप्रभृतयः एष देवरातो वो युष्माकं

सद्विवाचनं सन्मार्गस्य विशेपतोऽध्यापनं करिष्यतीति शेषः ॥३॥ . . . हे कुशिकाः कुशिकनाम्नो मत्पितामहस्य संबन्धिनो मधुच्छन्दःप्रभृतयः एष देवरातो वो युष्माकं ज्येष्ठभ्रातेति शेषः । तं देवरातं यूयमन्वित अनुगता भवत । मे मदीयं दायं धनं युष्मांश्च उपेता प्राप्स्यति । चकाराद् देवरातं च। याम् च यामपि कांचिद् वेदशास्त्रादिरूपां विद्यां विद्मसि वयं जानीमः सापि युष्मानुपेता प्राप्स्यति । [मूलाशयस्तु देवरातः ज्येष्ठभ्रातृत्वात् युष्मान् दायं विद्यां च प्राप्स्यतीति प्रतिभाति] ॥४॥ हे *वैश्वामित्राः विश्वामित्रस्य मम पुत्राः ये गाथिनाः गाथिपौत्राः ते यूयं सर्वेऽपि सम्यञ्चः समीचीनबुद्धयो* ये साकं देवरातेन सार्धं सरातयो रातिर्धनसंपत्तिः तया युक्ताः सन्तो देवराताय मदीयश्रेष्ठपुत्रस्य देवरातस्य धृत्यै धारणं युष्मत्पोषणं श्रैष्ठ्याय युष्माकं मध्ये श्रेष्ठत्वं च तस्थिरेऽङ्गीकृतवन्तः । [नेयं विश्वामित्रोक्तिरिति प्रतिभाति] ॥५॥ . . . अधीयत स्मृतिकारैर्महर्षिभिः स्मर्यते । कथमिति तदुच्यते । अयं देवरातो द्व्यामुष्यायणत्वाद् उभयोः अजीगर्त-विश्वामित्रयोः संबन्धिनी ये रिक्थे धने तयोर्ऋषिर्द्रष्टा तदुभयमर्हतीत्यर्थः । *अजीगर्तस्य कूटस्थ ऋषिर्जह्नुसंज्ञकस्तस्य* वंशे जाताः सर्वे जह्नवस्तेषां चाधिपत्ये स्वामित्वे देवरातो योग्यः । तथा दैवे देवसंबन्धिनि यागादिकर्मणि वेदे च मन्त्ररूपे समर्थः । गाथिनामस्मत्पितृवंशोत्पन्नानां च सर्वेषाम् आधिपत्ये योग्यः । [नेयमपि विश्वामित्रोक्तिरिति प्रतिभाति। जह्नूनां गाथिनां च दैवे वेदे च *आधिपत्यरूपं रिक्थद्वयमित्यपि* प्रतिभाति] ॥६॥ . . . कस्य नूनं निधारयेत्यन्ताः सप्ताधिक-

नवतिसंख्याका ऋचः त्वं नः सत्त्वमित्यादिकास्तिस्र ऋचः। एवमृचां शतम्। परःशब्दोऽधिकवाची। पूर्वोक्ताद् ऋक्शतात् परोऽधिकाः एकत्रिंशत्संख्याका यं न्विममित्याद्या गाथा यस्मिन्नाख्याने तदेतत्परऋक्शतगाथम्।... तस्याख्यानस्य राजसूयक्रतौ विनियोगं दर्शयति। तद्धोता.... इति। राजसूयक्रतावभिषेचनीयाख्ये कर्मणि यदा राजाऽभिषिक्तो भवति तदानीं तस्मै राज्ञे तदाख्यानं होता कथयेत्।... हिरण्यकशिपौ सुवर्णनिर्मितसूत्रैर्निष्पादिते कशिपौ। तदाख्यान-मध्येऽध्वर्युश्च...प्रतिगरं ब्रूयात्। हिरण्यस्य यशोहेतुत्वाद् यशस्त्वम्। तथा सत्येनं राजानं यशसैव 'समृद्धं करोति। अध्वर्युणा प्रयोक्तव्यं प्रतिगरविशेषं दर्शयति ओमित्यृचः... इति। होत्रा प्रयुक्ताया एकैकस्या ऋचोऽन्ते अध्वर्योः ओमित्येतादृशः प्रतिगरो भवति। ओमिति ... दैवं देवैरङ्गीकारार्थे प्रयुज्यते।... तथेति मानुषं मनुष्याः... अङ्गीकारे... प्रयुञ्जते। तत् तेन प्रतिगरेण दैवेन मानुषेण च अध्वर्युरेनं राजानं पापादैहिकादपकीर्तिरूपाद् एनसो नरकहेतोश्च प्रमुञ्चति प्रमुक्तं करोति। क्रत्वर्थत्वेन उपाख्यानं विधाय क्रतुनिरपेक्षपुरुषार्थत्वेन विधत्ते। तस्माद्यो राजा ... इति। यस्मादुपाख्यानं पापप्रशमनहेतुः तस्माद् अयजमानोऽपि राजसूय-क्रतुरहितोऽपि राजा विजिती यदि विजयोपेतः स्यात् तदानीम् एतच्छौनःशेपमाख्यानमाख्यापयेत्। तस्य राज्ञो यः कश्चिद् ब्राह्मण उपाख्यानं ब्रूयात्। तथा सति तस्मिन् राजनि अल्पं चन किंचिदप्येनः पापं न ह वै परिशिष्यते सर्वं पापं नश्यतीत्यर्थः। ... पूर्वमयज्ञसंयुक्तः कल्पो विजयिनो

राज्ञोऽभिहितः । इदानीं पुत्रकामानामपि विधत्ते । . . . [लभन्ते ह पुत्राल्ँलभन्ते ह पुत्रान् इति] अभ्यासः [=द्विरुक्तिः] अध्यायसमाप्त्यर्थः ॥ १८ ॥

---

## ६७

### ऐ. ब्रा. अ. ३८. ख. १–३

### [ऐन्द्रो महाभिषेकः]

अथ मानुषक्षत्रियाभिषेकोक्त्यनन्तरं यतो दैवोऽभिषेको बुभुत्सितः अतः कारणाद् इन्द्रसंबन्धी महाभिषेकः कथ्यते इति शेषः। आरोहणोत्क्रोशनाभिमन्त्रणादिभिर्वक्ष्यमाणैरस्याभिषेकस्य महत्त्वं द्रष्टव्यम् । तदभिषेकार्थं देवविवादं दर्शयति ते देवा अब्रुवन् . . . इति । प्रजापतिना सह वर्तन्ते इति सप्रजापतिकाः ते अग्न्यादयो देवाः परस्परमिदमब्रुवन् । हस्तेन इन्द्रं प्रदर्श्य कथयन्ति। . . . ओजिष्ठः अतिशयेन अष्टमधातुयुक्तः । [शुक्रं सप्तमः शरीरधातुः तद्रक्षाजनिता दीप्तिः अष्टमो धातुः । ओजो दीप्तिरित्यभियुक्तोक्तेः।] बलिष्ठः अतिशयेन शरीरबलयुक्तः । सहिष्ठः अतिशयेन वैर्यभिभवशीलः सत्तमः अतिशयेन स्वभक्तेषु साधुः । पारयिष्णुतमः अतिशयेन प्रक्रान्तस्य कार्यस्य समाप्तिकृत् । . . . [आसन्दी खट्वा] । ऋचं नामेत्यासन्द्या विशेषणम् । ऋग्रूपामेतन्नामिकामित्यर्थः । तस्मै तस्या ऋग्रूपाया आसन्द्या

बृहदादीनि अष्ट सामानि पूर्वपादाद्यष्टावयवान् अकुर्वन् । आसन्द्यां शयानस्येन्द्रस्य शिरोदेशस्थं फलकं शीर्षण्यम् । तच्च पाददेशाविष्कृतस्य फलकस्याप्युपलक्षणम् । अत एव शीर्षण्ये इति द्विवचनमुच्यते । अनूच्ये पार्श्वद्वयवर्तिनी फलके । ऋग्रूपा ये मन्त्राः सन्ति तान् प्राचीनातानान् प्राक्प्रत्यगायतत्वेन विस्तारितान् दीर्घतन्तुविशेषान् अकुर्वन् । गीयमानानि सामानि तिरश्चीनवायान् तिर्यक्त्वेन वयनहेतून् रज्जुविशेषान् अकुर्वन् । यजूंषि अतीकाशान् रज्ज्वन्तरालच्छिद्रविशेषान् अकुर्वन् । यद् यशः कीर्तिः देवतारूपं तदासन्द्या उपर्यास्तरणम् । या तु श्रीः सम्पदभिमानिनी देवता ताम् उपबर्हणं शिरस उपधानम् अकुर्वन् । तस्यै तस्या आसन्द्याः पादादीन् अष्टावयवान् सवित्रादयोऽष्टौ देवा अधारयन् । . . . वस्वादयो देवगणा गायत्र्यादिच्छन्दोभिस्त्रिवृदादिस्तोमैः रथन्तरादि-सामभिश्च सह हे आसन्दि त्वां प्रथमत आरोहन्तु । ताननु पश्चाद् अहमारोहामि । आप्त्या इत्यनेनापि वस्वादिशब्दवत् कश्चिद् देवगणविशेष उच्यते । साम्राज्यादीनि आरोहणप्रयोजनानि । [*साम्राज्यं धर्मेण पालनम् । भौज्यं भोगसमृद्धिः । स्वाराज्यम् अपराधीनत्वम् । वैराज्यम् इतरेभ्यो भूपतिभ्यो वैशिष्ट्यम् । राज्यं देशाधिपत्यम् ऐश्वर्यं वा । पारमेष्ठ्यं प्रजापतिलोकप्राप्तिः । माहाराज्यं तत्रत्येभ्यः इतरेभ्यः आधिक्यम् । आधिपत्यं तान् इतरान्प्रति स्वामित्वम् । स्वावश्यमपारतन्त्र्यम् । आतिष्ठत्वं चिरकालवासित्वम् ।] . . . इन्द्रारोहणादूर्ध्वं देवानामभ्युत्क्रोशनं दर्शयति । . . . यथा लोके वन्दिनो गुणकथनेन राज्ञः कीर्ति

* अयमंशः सायणीयादैतरेयब्राह्मणभाष्यादेव स्थलान्तरादुद्धृतः ।।

कुर्वन्ति एवमत्रापि गुणकीर्तनमभ्युत्क्रोशनम्। तेन रहितः अनभ्युत्क्रुष्ट इन्द्रो युद्धादौ वीर्यं कर्तुं नैवार्हति। कीर्तिमन्तरेण परेषां भीत्यनुदयात्। ... भोजं भोक्तारम् अत एव भोजपितरं भोजपालकम्। ... राजपितरं सर्वेषां राज्ञां पालकम्। क्षत्रमजनि ईदशी क्षत्रियजातिः लोके समुत्पन्ना। तज्जातिमान् क्षत्रियः। ... [ भूतस्य ] सर्वस्य प्राणिजातस्य। ... विशां प्रजानाम् अत्ता भोक्ता। ...पुरां परकीयाणां भेत्ता विदारयिता। ब्रह्मणो वेदस्य गोप्ता रक्षकः ॥ १ ॥

एतयर्चाऽभ्यमन्त्रयतेत्यत्र योऽयं मन्त्र ऋक्-शब्देन विवक्षितः तं मन्त्रं दर्शयति। निषसाद ... इति। धृतव्रतः स्वीकृतनियमो वरुणः सर्वस्यानिष्टस्य निवारयिता इन्द्रः पस्त्यासु गृहेषु आगत्य साम्राज्यादिकफलसिद्धयर्थं सुक्रतुः शोभनसंकल्पो भूत्वा निषसाद अस्यामासन्द्यां निषण्णवान्। ... पुरस्ताद् आसन्द्याः पूर्वस्यां दिशि प्रत्यङ्मुखस्तिष्ठन्। ... आर्द्रया आर्द्रपत्रोपेतया। [ जातरूपमयेन ] सुवर्णमयेन। ... अन्तर्धाय व्यवधानं कृत्वा ॥ २ ॥

इन्द्रस्य प्रजापतिकृताभिषेकादूर्ध्वं दिग्भेदेन देवविशेषैः अभिषेकः कृतः। ... सत्वताम्। दक्षिणस्यां दिशि वर्तमानाः प्राणिनः सत्वनामकाः। ... प्रतीच्यां दिशि वर्तमानाः प्राणिनो नीच्या अपाच्याश्च। निकर्षमवन्तीति नीच्याः अपकर्षमवन्तीत्यपाच्याः जात्या निकर्षः व्यवहारेण अपकर्षः। ... हिमवन्तं परेण हिमवत्पर्वतपरभागे। ... मध्यमा दिङ् मध्यदेशः। स प्राच्यादिभिः सर्वाभिरपेक्षितत्वेन ध्रुवो भवति। तदपेक्षयैव पूर्वा पश्चिमेत्यादिव्यवहारः। स च देशः

सर्वेषां वैदिकानामाश्रयः । [वशा उशीनराश्च देशविशेषाः तत्सहिताः सवशोशीनराः ।] . . . ऊर्ध्वायां दिशि स्वर्गरूपायां मनुष्यस्य संचाराभावात् तत्र राजानो नोदाहृताः । . . . कृत्स्नमिन्द्राभिषेकं निगमयति स एतेन इति । . . . जितीर्जेतव्याः सर्वा युद्धभूमीः । . . . श्रैष्ठ्यमतिशयेन प्रशस्तत्वम् अतिष्ठां सर्वानतिक्रम्यावस्थानम् परमतामुत्कृष्टत्वम् । जातितः उत्तमत्वं श्रैष्ठ्यम् । गुणैरुत्तमत्वम् परमत्वम् । . . . अमृतः इतरमनुष्यवदल्पकाले मरणरहितः . सन् । . . . . अमृतो मरणरहितो मुक्तः । [समभवत् समभवत् इति] अभ्यासोऽध्यायसमाप्त्यर्थः ॥ ३ ॥



६८

ऐ. ब्रा. अ. ३९. ख. १

[क्षत्रियाभिषेकः]

तमभिषेकं विधत्ते स यः इच्छेदेवंवित्. . . इति । एवंविद् इन्द्रसंबन्धिमहाभिषेकविद् यः आचार्यः क्षत्रियं प्रति सर्वजयादिफलमिच्छेत् स आचार्यः क्षत्रियमेतं शापयित्वा शपथं कारयित्वा एतेन पूर्वोक्तेन इन्द्रसंबन्धिना महाभिषेकविधानेन तं क्षत्रियमभिषिञ्चेत् । . . . समन्तपर्यायी देशतः कालतः सर्वव्यापी । . . . आ अन्तात् समुद्रतीरपर्यन्तं सार्वभौमत्वं देशव्याप्तिः । आ परार्धात्' परार्धशब्दाभिधेयकालसंख्यापर्यन्तं सार्वायुषत्वं कालव्याप्तिः । . . . शापयि-

त्वेति यदुक्तं तमेव शपथप्रकारं दर्शयति यां च. . .इति । अभिषिच्यमान हे क्षत्रिय यद्याचार्याय मे द्रुह्येः द्रोहं कुर्याः तदानीं त्वं यां रात्रिम् अजायेथा यस्यां रात्रावुत्पन्नोऽसि यां च रात्रिं प्रेतासि यस्यां रात्रौ मरिष्यसि तदुभयमन्तरेण उत्पत्तिमरणदिनयोर्द्वयोर्मध्ये ते तव इष्टापूर्तं श्रौतस्मार्तकर्मद्वयं तथा पुण्यलोकं तद्धेतुभूतमन्यदपि सुकृतं दीर्घमायुः प्रजां पुत्रादिकं वृञ्जीयं त्वत्तो वर्जयेयम् इत्येतद् आचार्यस्य वाक्यम् । . . .आचार्यः क्षत्रियार्थं यादृशीं फलपरम्परां कामयित्वा शपथं कारयति । . . .स क्षत्रियः आचार्यस्याभीष्टं शपथमेवं कुर्यात् । हे आचार्य अहं यदि ते द्रुह्येयं तदानीं त्वं मम जन्ममरणमध्यवर्तीष्टापूर्तादिकं सर्वं वृञ्जीथा नाशयेरिति श्रद्धया सहितं शपथं ब्रूयात् ॥



६९

शत. ब्रा. का. १. अ. १. ब्रा. १

[ *व्रतोपायनम् ]

[ अन्तरेण आहवनीयं च गार्हपत्यं च इत्यस्य आहवनीय-गार्हपत्ययोः मध्ये इत्यर्थः । . . . यदप उपस्पृशति . . . तेन पूतिरन्तरतः इति संबन्धः । पूतिरन्तरतः इत्यस्य अन्तः-शुद्धिरित्यर्थः ॥ १ ॥ ]

संस्थिते यागे पर्यवसिते ॥ ३ ॥

यतो व्रतानन्तरम् अशनानशनापरनामकम् आरण्याद्यशनमेव यजमानेन कर्तव्यम् . अतः तदनन्तरमेव तस्य निरूपणं क्रियते । उपवसथनामनिर्वचनेन देवानामागमनं द्रढयति तेऽस्येति । उप समीपे यजमानस्य वसन्ति देवाः । अस्मिन्निति पर्वदिवसे उपवसथनामके । [ गृहेपूप वसन्ति इत्येतदनन्तरम् अस्मिन् इत्यधिकं भाष्यकारदृष्टमूले वर्तते इति प्रतिभाति ] ॥ ७ ॥

---

* अयं संक्षेपः श्रीसायणाचार्यविरचितमाध्यंदिनशतपथब्राह्मण-भाष्यात् कृतः ॥

दैविके हि कर्मणि देवान् प्रति उद्दिष्टस्यैव हविषः प्रथममनुपयोगः। काममन्यस्य [उपयोगः]। पित्र्ये पुनः हविषोऽन्यदपि अनुपयोज्यम् इति। [अनशनम् अनश्नतः] पितृदेवत्यतामापादयति [इति] याज्ञवल्क्यस्याशयः। यदि तु अश्नाति तदा अशिशिषतो देवानतिक्रम्य स्वयं भुक्तवान् स्यात्। [एवम्] अशनानशनपक्षयोः उभयोरपि दोषश्चेत् का गतिरिति [चेत्] यद् द्रव्यमशितमप्यनशितवद् भवति तदश्नीयात्। यस्य द्रव्यस्य संबन्धि अन्नं हविष्ट्वेन देवा न गृह्णन्ति तदशितमपि सद् अनशितवद् भवति। तथात्वे दोषद्वयाभावमाह स यदिति ॥ ९ ॥

आरण्यग्रहणं प्राकृतदर्शपूर्णमासहविर्व्यतिरिक्तोपलक्षणम्। वृक्ष्यं वृक्षोद्भवं फलम्। वृषा नाम कश्चित् तस्य पुत्रो वार्ष्णः तस्य मुनेर्मतमपवदति तदु इति। शमीधान्यं तिलमाषादि। उपचिनोतीति उपचम्। अल्पेनापि माषपिष्टेन मिश्रितं व्रीहिपिष्टम् उपचितं बहु भवति इति प्रसिद्धम्। तदाह व्रीहियवाविति। अतो माषोपयोगे व्रीहियवावेव यत उपयुक्तौ स्यातामतस्तथा न कुर्यात्। अतो युक्तम् आरण्यमेवाश्नीयादिति ॥ १० ॥

७०

शत. ब्रा. का. १. अ. ८. ब्रा. १

[ *इडाब्राह्मणान्तर्गतो मनुमत्स्यवृत्तान्तः ]

अवनेज्यते हस्ताद्यनेनेति अवनेज्यम् ॥ १ ॥

[ नाष्ट्रा नाशः संहार इति यावत् । ] कर्षूः खातिका ॥३॥

शश्वच्छब्दोऽत्र सामर्थ्यात् क्षिप्रवचनः । झषो महामत्स्यः । इतिथीम् इत्यभिनयः तेन संख्येयाः समादर्शितवान् । इयतीनां दशानां द्वादशानां वा पूरणी इतिथी । इतिथीं यावतिथीं तावतिथीमिति प्राप्ते छान्दसो यशब्दावशब्दलोपः । समा संवत्सरः । [ उपन्या = उप नि आ ] । उत्तरं गिरिम् हिमवन्तम् ॥ ४–५ ॥

समवायात् अधः गच्छेत् अवतरेत् ॥ ६ ॥

---

* इडा मनुकृतात् पाकयज्ञात् उत्पन्ना देवता । तत्प्रतिपादकत्वात् इदम् इडाब्राह्मणम् ॥ अथ संक्षेपः आचार्यहरिस्वामिविरचितमाध्यंदिनशतपथब्राह्मणभाष्यात् कृतः ॥

७१

शत. ब्रा. का. ४. अ. १. ब्रा. १

[ अश्विच्च्यवनोपाख्यानम् ]

[ यत्र वै . . . समाश्नुवत तच्च्यवनो वा इत्यत्र तत् इत्यस्य तदा इत्यर्थः । तदेव जीर्णिः इत्यत्र तद् इत्यस्य तत्र इत्यर्थः । जीर्णिः अतिवृद्धः । कृत्या भीषणाकृतिदेवताविशेषः । कृत्यारूपः कृत्यायाः रूपमिव रूपं यस्य सः । जहे तत्यजे । एवंरूपं च्यवनं भूमौ त्यक्त्वैव ते भृगवो वा अङ्गिरसो वा स्वर्गं लोकं गताः इत्यर्थः। ग्रामेण अनुयायिगणेन सह । अनर्थ्यं तुच्छम् । वि पिपिषुः प्राहरन् ॥ २ ॥

असंज्ञां कार्याकार्यविचारशून्यताम् ॥ ३ ॥

ईक्षां चक्रे विचारयामास । आपदि आपतितम् । संह्वयितवै समाहूय ॥ ४ ॥

व्यपिक्षन् प्राहरन् ॥ ५ ॥

प्रसिष्यन्द रथेन ययौ ॥ यत्रर्षिरास तत् यत्र ऋषिरासीत् तत्र ॥ ६ ॥

अप ह्नुवे अपराधक्षमापनं करोमि । सं जानीतां कार्याकार्यविचारवान् भवतु । उद्युयुजे . . . हिनसानीति द्वितीयवारमपि अपराद्धो न भवेयमिति विचार्य रथं योजयित्वा प्रचलितः ॥ ७ ॥

न जज्ञौ न ज्ञातवती । आ जज्ञौ ज्ञातवान् ॥ ९ ॥

अन्तर्यन्ति बहिर्भावयन्ति ॥ १३ ॥

संसृष्टम् अनिष्टसंसर्गो यथा जातस्तथा ॥ १४ ॥ ]

" शत. ब्रा. का. ५. अ. २. ब्रा. ९.

[ *यूपारोहब्राह्मणम् ]

[नेष्टा ऋत्विग्विशेषः ।] उदानेष्यन् शालातो निर्गमयिष्यन् । कौशं कुशमयं दर्भमयं वासः । यद्वा क्रिमिकोशविकारभूतं वासः । अर्धोरुकं विलासिन्या वासश्चण्डातकं स्मृतमिति नृत्तोपयिकत्वेन आच्छादनीयम् ऊरुकञ्चुकम् अर्धोरुकं वासः । वसनस्य प्रदेशं विधत्ते अन्तरमिति । दीक्षाकाले यद् वस्त्रं परिहितं तस्माद् बहिःप्रदेशो इत्यर्थः । अन्तरशब्दो बहिर्योगे वर्तते ॥ ८ ॥

निश्रेणी यूपारोहणार्थं सोपानसदृशः काष्ठनिर्मितपदार्थः ॥ ९ ॥

शिरसा यूपमत्युज्जिहीते अतिक्रम्य उद्गमयति यूपं शिरसा स्पृशन् तमतिक्रम्य स्वशिर उन्नमयेत् ॥ १४ ॥

ऊषपुटैः ऊषक्षेत्रपांसवः ऊषाः तान् अश्वत्थपत्रैः पुटीकृत्य तैः पुटैः यूपेऽवस्थितं यजमानमभिलक्ष्य उदस्यन्ति ऊर्ध्वान् प्रतिदिशं प्रक्षिपेयुः ॥ १६ ॥

उपनद्धाः संबद्धाः ॥ १७ ॥

अवदृणीयात् अवदारयेत् । अवधुन्वीत विचालयेत् ॥ १८ ॥

हिरण्यमभिलक्ष्य यूपादवरोहेत् ॥ २० ॥

---

* अथ संक्षेपः श्रीसायणाचार्यविरचितमाध्यंदिनशतपथब्राह्मणभाष्यात् कृतः ।